# बृहदारण्यकोपनिषत्

॥ प्रथमोऽध्याय ॥

ॐ उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः
प्राणो व्यात्तमग्निर्वैश्वानरः सम्वत्सर आत्माश्वस्य
मेध्यस्य। द्यौः पृष्ठमंतरिक्षमुदरं पृथिवी पाजस्यं दि
पार्श्वे अवांतरदिशः पर्शव ऋतवोऽगानि मासाश्च
र्धमासाश्च पर्वाण्य होरात्राणि प्रतिष्ठा नक्षत्राण्य
स्थीनि नभो मांसानि। ऊवध्यं सिकताः सिंधवो गु
यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च
लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृंभ
तेतद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति
तद्वर्षति वागेवास्य वाक्॥१॥

नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृत
अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुत
स्यामिति। सोऽर्चन्नचरत्तस्यार्चत आपोऽज
चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कं
अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद॥१

प्रागसत्त्वं स्यात्तदा नास्य सत्त्वं केनापि कर्त्तुं शक्यम्। तस्मात्कार्यं सदेव। नाग्रआसीदित्यनेन कार्यं स्थूलावस्थात्वेनैव निषिद्ध्यते नतु सूक्ष्मत्वे-नेति भावः॥ प्रलयकाले परिदृश्यमानं विश्वं कीदृशमासीदित्यत आह— मृत्युनैवेति। मृत्युना परमात्मनाऽऽवृतमासीत्, अनेन वाक्येन नैवेहे-त्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वशङ्कानिरस्ता भवतीत्याशयः। मृत्योः किं स्वरूपमित्यत-आह अशनेति। अशितुमिच्छाऽशना संहन्तुं मिच्छेति यावत् तस्य तद्वति लक्षणया संहारकर्तृत्वं मृत्युशब्दाल्लभ्यते। तथा च परमात्मनः सर्वसंहारकत्वेन स्वोदरे सर्वस्य निक्षिप्तत्वेनावरकत्वमि-त्यर्थः। कथमत्राशनाशब्देन मृत्योः परमात्मन उपस्थितिरित्यत आह। अशनया हि मृत्युरिति। हि शब्दो हेत्वर्थे। योह्यशितुमिच्छति अशना-यानन्तरमेव हन्ति जन्तून्। अतोऽशनाया मरणहेतुत्वेन मृत्युत्वं प्रसिद्ध-मित्यर्थः। स मृत्युः परमात्मा शरीररूपजगत्सिसृक्षयाऽप्सृष्ट्यर्थं मनोऽ-कुरुत। सङ्कल्पत्वादिलक्षणमन्तःकारणं कृतवान्। किमभिप्रेत्य मनोऽकरोदित्यत आह। आत्मन्वीस्यामिति। आत्मवान् जगद्रूपशरीर-वान्स्यां भवेयमितिसङ्कल्प्य मनः सृष्टवानित्यर्थः। तदनन्तरं स मृत्युः परमात्मा अर्चन्नात्मानं पूजयन्। कृतार्थोऽस्मीत्युच्चारणमकरोत्। तस्यार्चतः पूजयतः मृत्योः परमात्मनः सकाशात पूजासाधनभूता आपोऽजायन्त। अर्चतो वै पूजयतो मह्यं कमुदकमभूत्। उत्पन्नम्। तदेवार्चद्विष्णुजातत्वं सुखसाधनत्वञ्चार्कस्यार्कत्वमर्कशब्दप्रवृत्तिनि-मित्तम्। अर्चतोजातत्वादरसुखसाधनत्वादर्कमिति ज्ञेयम्। ‘अर्को वा-जसनः शृङ्गी’ति विष्णुसहस्रनामपाठात्। भगवतोवासुदेवस्यार्कशब्द-वाच्यत्वं वेत्यर्थः। योऽधिकारी एवमुक्तरीत्याऽर्कस्यार्कत्वं वेद तेन वेदनेनेश्वरप्रसादद्वारा अस्मै कं सुखं भवति। ह वा इति प्रमाण-प्रसिद्धिद्योतकौ निपाताविति॥ १॥

**आपो वा अर्कस्तदपां शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्ततागिनः॥ २॥**

आपःअर्कशब्दवाच्यब्रह्मात्मिका । तत् तत्राप्सु यत् य अपां शरः फेनरूपो मण्ड आसीत्, तत् स शरः समहन्यत सङ्घातत्वं प्रापितः । यः सङ्घातः सा पृथिवी ब्रह्माण्डरूपाऽभवत् । तस्यां पृथिव्यां मृत्युः परमात्मा अश्राम्यत् = श्रमयुक्तो बभूव । तस्य परमात्मनः श्रान्तस्य कृतप्रयत्नस्य तप्तस्य कार्यकामनावतः ब्रह्मणश्शरीरात् तेजोरसो जगत्सामर्थ्यसारभूतोऽग्निर्निरवर्त्तत अजायत ॥ २ ॥

**स त्रेधाऽऽत्मानं व्यकुरुत आदित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहितः ॥**

सोऽग्निस्त्रेधा त्रिप्रकारमात्मानं व्यकुरुत व्यभजत् । अग्न्यादित्यवाय्वात्मना त्रेधा व्यभक्त इत्यर्थः । त्रयाणां मध्ये चित्याग्निरंशी वाय्वादित्यावंशाविति भावः । अग्निवाय्वपेक्षयाऽऽदित्यस्य तृतीयत्वम् । अग्न्यादित्यापेक्षया वायोस्तृतीयत्वम् । यस्त्रेधा विभक्त एषोऽग्निः स एषः परमात्मेत्यर्थः ॥

**तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्वचैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

तस्याग्नेः शिरः प्राची दिक् । अग्नेः शिरसि प्राचीदिग्बुद्धिर्विधेया, एवमुत्तरत्रापि द्रष्टव्यम् ॥ असौ चासौ चैशान्याग्नेय्यावीर्मौ बाहू । गत्यर्थयोगादीर्मशब्दो बाहुमधिकरोतीत्यर्थः । अथास्याग्नेः पुच्छं प्रतीची दिक् । पुच्छे प्रतीचीत्वदृष्टिर्विधेया असौ । चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी ऊरू इति यावत् । पृष्ठकोणत्वेन साम्यात् । दक्षिणाचोदीची च पार्श्वे । द्यौः पृष्ठमन्तरिक्षमुदरम् । इयं पृथिवी उरः ॥ स एषोऽग्निरप्सु प्रतिष्ठितः । यत्र क्व च यस्मिन्कस्मिंश्चिदेति गच्छति तदैव तत्प्रतिष्ठितः स्थितिं लभते कोऽसावेवं यथोक्तप्रकारेणाप्सु प्रतिष्ठितत्वमग्नेर्विद्वान् विजानन् ॥ ३ ॥

सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनं समभवदशनाया मृत्युस्तद्यद्रेत आसीत् स सम्वत्सरोऽभवत् न ह पुरा ततः सम्वत्सर आस ॥

स मृत्युः परमात्मा मे मम आत्मा ब्रह्मा द्वितीयोऽन्यपेक्षया जायतामित्यकामयत सङ्कल्पं कृतवान्। तदनन्तरम्, अशनाया सर्वाशननेता स मृत्युः वाचं त्रयीलक्षणां मनसा मिथुनं द्वन्द्वभावं समभवत्। चतुर्मुखशरीरकतया त्रयीमालोचितवांस्त्रयीविहितं सृष्टिक्रमं मनसाऽऽलोचयदित्यर्थः। तत् तेन - मिथुनीभावेन यद्रेतोबीजमासीत् स तदुपादानकदेहवान् सम्वत्सरस्तदभिमानी चतुर्मुखोऽभवत्। ततो मिथुनीभावात् पुरा सम्वत्सररूप आत्मा न बभूव। द्वादशमासपरिमाणस्य सम्वत्सरस्य सद्यो निष्पत्त्यसम्भवादिति भावः ॥

तमेतावन्तं कालमबिभर्यावान्सम्वत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात् स भाणमकरोत् सैव वागभवत् ॥ ४ ॥

तं रेत उपादानकं गर्भं यावान्सम्वत्सरः द्वादशमासात्मकः कालः एतावन्तं कालम्। अबिभः--अबिभ्रत्। एतावतः--सम्वत्सरात्मकस्य कालस्य परस्तादनन्तरं तं गर्भस्थमसृजत असूत जातं तं सम्वत्सरमभिमुखीकृत्य व्याददात्। विशिष्य पुत्रत्वेन परिजग्राह स सम्वत्सर आत्मा भाणं भणिति वचः अकरोत् निःसारितवान्। सैव वागभवत् भूरादिव्याहृतिरूपा वागभवत्। यद्वा यद्भणिति वचः सैव तदभिमानिनी ज्ञानप्रकाशसुखभगवद्व्यञ्जकत्वेन भणशब्दाभिधेया वाक् वागभिमानिनी सरस्वती अभवत् ॥ ४ ॥

स ऐक्षत यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मना नेदं सर्वमसृजत यदिदं किं-

र्चोयजूंषि सामानि छन्दांसि यज्ञान् प्रजाः पशून् । स यद्यदेवा-सृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तदितेरदितित्वं सर्व-स्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेर-दितित्वं वेद ॥ ५ ॥

स मृत्युः परमात्मा कृतएवं कुमारमालोक्य ऐक्षत विचारम-करोत् । किमिति यदीमं जातं सम्वत्सरम् । अभिमंस्ये लीनंकरिष्ये तदा कनीयोऽल्पमन्नं करिष्ये अतो बह्वन्नं भवत्वित्यालोच्य स मृत्युः तया पूर्वोत्पन्नया वाचा भूरादिलक्षणया तेनात्मना सम्वत्सररूपेण यदिदं किञ्चेदं सर्वमसृजत जनयामास । तदेव विवृणोति । ऋचो यजूंषि सामानि छन्दांसि सप्त गायत्र्यादीनि । स्तोत्रशस्त्रादिकर्माङ्ग-भूतांस्त्रिविधान् मन्त्रान् गायत्र्यादिच्छन्दोविशिष्टान् यज्ञांश्च पशूंश्च उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना संशप्यमानं शस्त्रम् । मृत्युः यद्यदेवासृजत तत्तत् अत्तुं भक्षयितुम् अध्रि-यत् मन इति शेषः । आदद्येतिशेषः । कुतः सर्वात्तृत्वं मृत्योः । सर्व मत्तीति यत् तद्धै तदेव । अदितेरदितिशब्दवाच्यस्यात्मनः । अदितित्वमदितिशब्दप्रवृत्तिनिमित्तं यस्मात् । य एवमुक्तप्रकारेणादिते-रदितित्वं वेद स एतस्य स्वयोग्यस्य सर्वस्यात्ता भवति । अस्योपासकस्य सर्वं स्वयोग्यमन्नं भवतीति पुनर्वचनं तात्पर्यद्योतनाय ॥ ५ ॥

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्रा-म्यत् स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत् । प्राणा वै यशोवीर्यम् तत्प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥

( सोऽकामयत मेध्यं म इदँ स्यादात्मन्व्यनेन स्या-मिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेध-

अश्वाश्वमेधयोर्निर्वचनार्थमारभते, सोऽकामयत इत्यादिना। सम्वत्सराभिमानी ब्रह्मा भूयसा क्रतुश्रेष्ठेन यज्ञेनाश्वमेधनामकेन भूयः परिपूर्णं परमात्मानं यजे यक्ष्ये, इत्यकामयत ऐच्छत, स ब्रह्मा यज्ञोपयोगिसाधनास्मरणादश्राम्यत् श्रमयुक्तो बभूव तत एव स ब्रह्मा तप अतप्यत परमात्मानमुद्दिश्य तपश्चकार। श्रान्तस्य तप्तस्य तस्य चतुर्मुखस्य यशोवीर्यमुदक्रामत्। किं तद्यशोवीर्यम्। प्राणा वै यशोवीर्यम्। प्राणाश्चक्षुरादयः, यशोवीर्यनिमित्तत्वाद्यशोवीर्यम्, तेषु सत्सु ख्यातिर्भवति तथावीर्यं बलमस्मिन्शरीरे। नह्युत्क्रान्तप्राणो यशस्वी बलवान् वा भवति। तदेवं यशोवीर्यभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु प्रजापतेश्शरीरं श्वयितुमुच्छूनभावं गन्तुमध्रियत = आरब्धम्। अमेध्यञ्चाभवत् तस्य चतुर्मुखस्य शरीर एव। तस्मिन्नेव शरीरे मन आसीत्। मयात्यक्तं स्थूलं शरीरमुच्छूनं हेयमासीदिति शरीरविषय एव चिन्ता सर्वदा सम्वृत्तेत्यर्थः ॥ ६ ॥

**सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद तमनवरुध्यैवामन्यत तं सम्वत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत्।**

स चतुर्मुखः मे मम इदं शरीरं मेध्यं शुद्धं स्यादित्यकामयतैच्छत्। देहान्तरग्रहणसम्भवात् किमिति तस्यैव शुद्धीच्छा इत्यत उक्तम्—आत्मन्वीति। अहमनेनैव शरीरेणात्मन्वी देहवान् स्यामित्यभिप्रायेणाकामयतेति सम्बन्धः। ततस्तन्मेध्यमभूत्। तस्मिन् शरीरे विवेश च। ततः तत्प्रवेशानन्तरं स इत्यनुवर्त्तते। यज्ञपशुत्वनिमित्त-

कफलस्यापि लाभार्थम्। अश्वः—अश्वाकारः समभवत्। ततश्चामेध्यं सद्ब्रह्मेच्छया पुनर्यज्ञार्थमेव मेध्यं शुद्धमभूदिति यत् तदेव तच्छरीरेण तदाश्वेतीभावमेध्यताप्राप्त्यनन्तरं कृतत्वमेव। अश्वमेधस्य चतुर्मुख-कृताश्वमेधनामकयज्ञस्याश्वमेधत्वमश्वमेधशब्दप्रवृत्तिनिमित्तम्। तथा यत् तत्पुरुषशरीरमश्वत् वृंहितं पश्चान्मेध्यश्चाभूदिति यत् तदेव तच्छरीरे स्थितत्वमेवाश्वमेधस्याश्वमेधनामकस्य ब्रह्मणोऽश्वमेधत्वमिति। तथा तत् चतुर्मुखस्य द्वितीयं रूपम्। अश्वत—अश्वोभवत् तदेव रूपं मेध्यं यज्ञ आलम्भनीयश्चाभूदिति यत् तदेवाश्वाकारेण यज्ञीयत्व-मेवाश्वमेधस्याश्वमेधनामकचतुर्मुखद्वितीयरूपस्याश्वमेधत्वमिति। योऽधिकारी एनं यजमानं पशुरूपश्चतुर्मुखं तत्कृतयज्ञश्च एवमुक्तनिमित्तेनाश्वमेधशब्दवाच्यत्वेन वेद जानाति एष अश्वमेधम्, अश्वमेधशब्दार्थं वेद ह वा इति प्रमाणसिद्धिं द्योतयति। यदर्थमश्वो भवत् तत्राश्वस्येत्थंभावपूर्वकं विनियोगमाह-तमिति। तमश्वमनवरुध्य निरोधमकृत्वैव सर्वस्मिन् भुवने सम्वत्सरपर्य्यन्तं चारयामास। तं सम्वत्सरचारित-मश्वं सम्वत्सरस्य परस्तादन्ते आत्मने परमात्मने तदुद्देशेन यज्ञे आलभत आलम्भनं कृतवान्। पशून्—अजादिकान् देवताभ्यः—इन्द्रादिभ्यः प्रति विभज्य प्रत्यौहत्—त्यक्तवान्।

**तस्मात्सार्वदैवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य सम्वत्सर आत्माऽयमग्नि-रर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ सोपुनरेकैव देवता भवति मृत्युरेवायपुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति॥ ७॥**

इति वृहदारण्यकोपनिषदि प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्॥ १॥

---

यस्मात् पशून् देवताभ्य प्रत्यौहद् ब्रह्मा तस्मादेवाधुनातना याज्ञिकाः प्राजापत्यं देवताभ्यो दीयमानत्वेन प्रजापतिप्रज्ञापिततया प्रजापतिसम्वन्धिनं प्रोक्षितं मन्त्रपूतं पशुं सर्वदैवत्यं सर्वदेवतोद्देशेन

आलभन्ते। य एव दृश्यमानमण्डलान्तर्गतस्तपति, एष सूर्योऽश्वमेध-नामाकेन निमित्तेन, यतः सम्वत्सरः सम्वत्सराभिधोऽश्वमेधनामा ब्रह्मा तस्य सूर्यस्यात्मा सूर्य व्यापनतया स्थितः अयं चित्याग्निरर्कः पूर्वमर्कशब्दनिर्दिष्टः परमात्मेत्यर्थः तत्र तद्बुद्धिः कार्या। तत्र युक्तिमाह–तस्येति। तस्याध्यस्यमानस्य परमात्मनःस्वर्गाद्या लोका आत्मानः। तावेतौ चित्याग्न्यश्वमेधौ। अत्रार्कशब्देन चित्याग्निरुच्यते। सो पुनरेकैव देवता भवति। अग्न्यश्वमेधाभ्यामेतादृशदृष्टिविशिष्टाभ्यां प्रीणनीया देवतैकैव भवति। सा केत्याकांक्षायामाह (मृत्युरेव) परमात्मैवेत्यर्थः। एतद्वेत्तुः फलमाह। अपमृत्युमिति। अपमृत्युं जयतीत्यर्थः। एषः संसारं नाप्नोतीत्यर्थः। ब्रह्मज्ञानेन संसारो निवर्तत इति सर्वजनानुभवसिद्धमिति कथं दृष्टिविशिष्टचित्याग्न्यश्वमेधेन साध्या संसारनिवृत्तिरित्यत आह–मृत्युरस्यात्मा भवतीति। अस्याश्वमेधकर्त्तुः पुंस आत्मा मृत्युः परमात्मा भवतीत्यर्थः। ततश्चाग्न्यश्वमेधयोर्ब्रह्मात्मकत्वावगमद्वारा संसारनिवर्त्तकत्वमुपपद्यत इत्याशयः। एतासां देवतानामेको भवति। अग्नीन्द्रादिसायुज्यकामस्य तदपि भवतीत्यर्थः॥ ७॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

---

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति॥ १॥**

अश्वमेधादिषु मुख्यप्राण एवोद्गाता कर्त्तव्यस्तस्यैव तत्र प्राप्तविघ्नपरिहारक्षमत्वादितिभावेन तत्रोपयुक्तां काञ्चन कथामाह – द्वया इत्यादिना। प्रजापतेरिमा प्राजापत्याः ब्रह्मसुताः देवासुराश्चेतिद्वयाः द्विप्रकाराः। ततः––तत्र देवासुरभागयोः देवाः कानीयसाः कनीयांसोऽल्पीयांसः। असुरा ज्यायसा ज्यायांसो भूयांसः॥ भूयांसोऽसुरा इति

श्रुत्यन्तरात्। ते देवासुराः। एषु लोकेषु बहुवचनमाद्यर्थे। लोकाद्यर्थम्। अस्पर्द्धन्त स्पर्द्धया युद्धं कृतवन्तः। बहुत्वादसुरैर्देवा जिता इति वक्तव्यम्। ते पराजिताः देवाः परस्परमूचुर्ह किमिति हन्तेत्यास्वादने। विष्णुपूजात्मके यज्ञे उद्गीथेन उद्गातुरुद्गानबलेन असुरान् अत्ययाम जयामेति ॥ १ ॥

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत्। यो वाचि भोगस्तं देवेभ्य अगायद्यत्कल्याणं वदति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥**

ते देवाः 'ह' निश्चयेन वाचमग्निमूचुः। किमिति नोऽस्मदिष्टसिद्ध्यर्थम्=उद्गायेति औद्गात्रं कर्म कुर्विति। तथेति तदुक्तमङ्गीकृत्य तेभ्यो देवेभ्यस्तदभिमतसिद्ध्यर्थं वागुदगायत्। तदेवाह यो वाचीति। यो वाचि भोगो वेदपाठादिः तं तज्जनितपुण्यं देवेभ्योऽगायत= उद्गानेन प्रापयामास। उद्गानं न केवलं यजमानार्थमेव किन्त्वात्मार्थमपीत्याह—यदिति। यत्कल्याणं तदतिरिक्तं वदति, तत् तज्जनितं पुण्यम् आत्मने अगायदितिसम्बन्धः। ते, असुराः अनेनैवाग्निनैव उद्गात्रा नोऽस्मान् देवाः अत्येष्यन्तीति विदुः। एवं ज्ञात्वा तमुद्गातारमभिद्रुत्य वेगेनाभिगम्य पाप्मना पापेन अविध्यन् वेधितवन्तः। अग्नेरसुरकृतपापवेधः कथं ज्ञेय इत्यत आह—स य इति। योऽसुरप्रक्षिप्तः पाप्मा सः। स एवेति कः, यदेव यस्मादेव पापात् इदमप्रतिरूपमनृतं शास्त्रप्रतिषिद्धं वा वदति, स एव पाप्मा, स इति योजना ॥ २ ॥

**अथ प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य अगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभि-**

द्रुत्य पाप्मनाऽभिध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथाग्नेः पापवेधानन्तरम्। प्राणं घ्राणम्। प्राणे—घ्राणे भोग ईश्वरसमर्पितः गन्धाघ्राणनं यत्कल्याणं तदितरशुभगन्धम्॥ अन्यत्सर्वं पूर्ववद्व्याख्येयम्॥ ३॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य अगायद्यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽभिध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥

चक्षुः सूर्यं चाक्षुषि भोगो विष्णुप्रतिमादिदर्शनरूपः। कल्याणं तद्व्यतिरिक्तं शुभरूपादिकम्॥४॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य अगायद्यत् कल्याणꣳ शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽभिध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥

श्रोत्रं दिग्देवताः। श्रोत्रे भोगो हरिकथादिश्रवणरूपः कल्याणं तदितरशुभशब्दम्॥ ५॥

अथ मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य अगायद्यत्कल्याणꣳ सङ्कल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽभिध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्प-

यति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरूपासृजन्नेव मेताः पाप्मनाऽविध्यन् ॥ ६ ॥

मनश्चन्द्ररुद्रादीन्। मनसि भोगः विष्णुस्मरणादिरूपः कल्याणं तद्व्यतिरिक्तशुभकार्यम् ॥ ६ ॥

अथ हेममासन्यं प्राणमूचुस्त्वं न उदगायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै उद्गात्राऽत्येष्यन्तीति तद-भिद्रुत्य पाप्मनाऽविध्यन्स यथाऽश्यानमृत्वा लोष्ठोविध्वꣳसे-तैवꣳहैव विध्वꣳसमानाविष्वञ्चोविनेशुस्ततोदेवा अभवन् पराऽसुराभवत्यात्मना परास्यद्विषन् भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

इमं समर्थत्वेन प्रसिद्धम्। आसन्यम्। आस्ये भवं मुखान्तर्गतं प्राणं मुख्यवायुं स वक्ष्यमाणोदृष्टान्तो यथा लोष्ठः पांसुपिण्डः। अश्मानं व्रज्रशिलां ऋत्वा प्राप्य विध्वंसेत नश्यत्येव एवमेव ह खलु प्राणं वेद्धुमीप्सन्त असुराः विध्वंसमानाः विस्रंसमानदेहाः सन्तः विष्वञ्च सर्वत्र विनेशुः। अदर्शनं प्राप्ताः। ततोऽनन्तरं देवाः प्राप्तपदा (इति शेषः) अभवन्। असुराः पराभवन्। योऽधिकारी एवमुक्तप्रकारेण प्राणं वेद, अस्य द्विषन् शत्रुः। आत्मना परमात्मना तत्प्रसादेन परा भवति। भ्रातृव्यः भातृवत्सहस्थितः पाप्मा च पराभवति ॥ ७ ॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ८ ॥

ते ह देवा ऊचुः यो मुख्यप्राणो नोऽस्माकमित्थमुक्तरूपं शत्रु-पराजयमसक्त संयोजितवान्। स क्व नु कस्मिन् देशे प्रतिष्ठित इत्यूचुः संमन्त्रयांचक्रुरिति यावत्। एवं संमन्त्र्य ददृशुः। अन्तरास्येऽयमिति प्रत्यक्षतो दृष्टो यः प्राणः सोऽस्यास्यः। अतएवाङ्गिरसः। आङ्गिरसशब्दं निर्वक्ति। अङ्गानामिति। रसः - सार इत्यर्थः ॥ ८ ॥

स वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युः। दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥

हि यस्मात्। अस्याः प्राणाख्यदेवतायाः मृत्युः पापरूपः दूरं दूरे वर्तते तस्माद्दूरितिख्यतेति सम्बन्धः। दूर्नामकत्वेन प्राणविद्यायाः फलमाह। य एवमिति ॥ ९ ॥

स वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

एषा विष्णुबलाश्रया सा प्राणाख्यादेवता पूर्वमसुरैरनृतादिभिः पाप्मभिः संयोजितानां वागादिदेवतानाञ्च पाप्मानं मृत्युं पापाख्यं मृत्युमपहत्य मोचयित्वा यत् यस्मात् तासां प्रसिद्धानां दिशामन्तस्तत् गमयांचकार। आसां देवतानां पाप्मनः पापानि तत्तद्दिगन्तस्थितजने विन्यदधात्। विशेषेण स्थापितवती। तस्मादहं पाप्मानं मृत्युं नैत् नैवान्वयानि प्राप्नवानिति मन्वानोऽधिकारिलोकः जनं नेयात् न गच्छेत्। अन्तं पापजननिवासस्थानं दिगन्तरं नेयादिति ॥ १० ॥

स वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनामृत्युमत्यवहत् ॥ ११ ॥

मृत्युविमोचनानन्तरं किमकरोदितिजिज्ञासायामुक्तानुवादपूर्वकमाह। सेति। अथ मृत्युविमोचनानन्तरम्। एना वागादिदेवता मृत्युमतीत्यावहत ऊर्ध्वं लोकं प्रापयामास ॥ ११ ॥

स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते। १२॥

एतदेव विवृणोति। स इत्यादिना। स वै मुख्य प्राणः प्रथमा पूर्वमेवोद्गातृत्वेन स्वीकृतां वाचमग्निमेव मत्युमत्यवहत्। सा वाक्

यदा मृत्युम्। अत्यमुच्यत तदा सोग्निरभवत्। स्वपदे स्थितः। स्वव्यापारञ्चाकरोदित्याह। सोऽयमिति। परेण प्राणेन। एवमुत्तरत्रापि॥ १२॥

अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत् सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते॥ १३॥

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति॥ १४॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः॥ १५॥

मृत्युमतिक्रान्ताः स्वस्वव्यापारं कुर्वन्तीतिशेषः॥ १३-१४-१५॥

अथ मनोऽत्यवहत् तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् सोऽसौ चन्द्रमाः परेण मृत्युमतिक्रान्तो भात्येवं ह एनमेषा देवता मृत्युमतिवहति य एवं वेद॥ १६॥

अनेन देवा अभवन्नितिप्रागुक्तमेव विवृतं भवति। य एवमुक्तमहिमाविशिष्टं प्राणं वेद एनम् एषा प्राणाख्यादेवता एवं वा एवमेव अग्न्यादिदेवता इव मृत्युं पापम्। अति अतिक्रामयित्वा तद्ग्योर्ध्वलोकं वहति॥ १६॥

अथात्मनेऽन्नाद्यमगायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतिष्ठति॥ १७॥

अथ देवताकार्यसाधनानन्तरम्। आत्मने स्वार्थम्। अन्नञ्च तत् अद्यमन्नान्नम्। अन्नमिति यावत उद्दिश्यागायत्। गानफलञ्च लब्धञ्चेत्याह। यदिति। यत्किञ्चान्नमद्यते प्राणिभिरितिशेषः। तत्सर्वमन्नमनेनाद्यत इत्युक्तिरित्यत आह। इहेति। इहप्राणिषु प्रतितिष्ठति प्राणः॥ १७॥

ते देवा अब्रुवन्नेतावद्वा इदं सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तं समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवं ह वा एनं स्वा अभिसंविशन्ति भर्ता स्वानां श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवं विदं स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनु भवति यो वै तमनु भार्यान्बुभूषति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

ते देवा अब्रुवन् किमिति, यदिदं प्राणिभिरद्यमानम् । एतावद्वा एतावदेवान्नम् । इतोऽतिरिक्तमन्नं नास्ति तत्सर्वं आत्मने आत्मार्थमेव त्वमागासीः वयमप्यन्नं विना स्थातुं न शक्नुम इति । अनुत्वद नन्तरम् । अस्मिन्नन्नेनः अस्मान् आभजस्व भागिनं कुर्विति ते देवा अब्रुवन्निति सम्बन्धः । ते अन्नार्थिनो यूयं मा मां अभिसमन्ततः संविशतः, प्राणिदेहमिति शेषः । इति प्राणोऽब्रवीदितिशेषः । देवास्तथेति । तदुक्तमङ्गीकृत्य तं प्राणमनुसमन्तं समन्ततः परिवारतया न्यविशन्त । तस्माद्देवानन्नभागिनः कृत्वा प्राणिषु निवेशितत्वात् । अनेन देवतापरिवृतेन प्राणेन प्रेरितः प्राणी यदन्नमत्ति तेनान्नेनैता देवताः तृप्यन्ति य एवमुक्तमहिमानं प्राणं वेद यथा देवाः प्राणमभिसंविशन्ति एवं ह एनं वेत्तारं स्वज्ञातयः अभिसम्विशन्ति—आश्रयन्ते । आश्रितानां स्वानां भर्ता पोषकः तेषां मध्ये श्रेष्ठः सन् पुनः पुरतः एता गन्ता अन्नादो भोक्ताऽधिपतिश्च भवति । प्राणविद्विद्वेषिणोऽनिष्टमाह–यमिति । य एवं प्राणविदं प्रति स्वेषु ज्ञातिषु मध्ये द्रव्यविषये वा य उ यः कश्चित् प्रति प्रतिकूलो भवेति बुभूषति भवितुमिच्छति सभार्येभ्यो भर्तव्येभ्यः तद्भरणार्थमिति यावत् । अलं समर्थो नैव भवति ह । प्राणविदनुकूलस्येष्टमाह--अथेति । एतं प्राणविदं य एवानुभवति । अनुकूलो भवति । वायुश्चैतं प्राणविदमन्येवानुवर्त्तयन्नेव भार्यान् भर्त्तव्यान् बुभूषति भर्त्तुमिच्छति स एव भार्येभ्योऽलम्भवति ह॥१८॥

**सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः प्राणो वा अङ्गानां रसः प्राणो हि वा अङ्गानां रसस्तस्माद्यस्मात्कस्माचाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानां रसः ॥१९॥**

सोऽयास्य आङ्गिरसोङ्गानां हि रस इत्युक्त प्राण एवोपपादयितुमनुवदति—स इति । उपपादयितुं प्रतिजानीते । प्राणो वा इति । वै शब्दोऽवधारणार्थे, अङ्गानां रस इति प्रागुक्तः प्राण एवेत्यर्थः । कुतः ? इत्यतस्तत्प्रसिद्धमित्याह । प्राणो हीति । प्राण एवाङ्गानां शरीरावयवानां रसो नियामक इति प्रसिद्धमित्यर्थः तन्नियामकत्वमेव कुत इत्यतस्तदुपादानपूर्वकं हेतुसिद्धिं दर्शयति—तस्मादिति । प्राणो यदा यस्मात्कस्माचिदङ्गादुत्क्रामति तदैव तदङ्गं शुष्यति, हि यस्मात्तस्मात् एष प्राण एवाङ्गानां नियामक इत्यर्थः । निगमयति एष इति ॥१९॥

**एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥**

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥**

प्राणस्य महिमाधिक्यलाभाय तत्र बृहस्पत्यादिशब्दान् प्रतिज्ञापूर्वकं निर्वक्ति-एष इति । उशब्दः'च'शब्दार्थे बृहस्पतिश्चेति सम्बन्ध। तत्र हेतुः, वाग्वै बृहती बृहत्याख्यच्छन्दसो वाग्रूपत्वादिति भावः। तादृश्या वाच एषः प्राणः पतिरिति रक्षकः वागादिसत्तायास्तदधीनत्वादिति भावः ॥ २० ॥ अत्र-

**एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् ॥**

एष उ एव वाग्विशिष्टो मुख्यप्राण एव साम, सा चामश्चेति सा वाक् । आमः प्राणः । अमति गच्छतीत्यमः गमनार्थादमतेरः । तदुपपादयति-वाग्वै सामैष इति । तत्साम्नः सामशब्दवाच्यस्य वायोः सामत्वं सामशब्दप्रवृत्तिनिमित्तम् । प्रकारान्तरेण सामशब्दं निर्वक्ति-

**यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्मादेव साम । अश्नुते साम्नः सायुज्यꣳ सलोकतां जयति य एवमेतत्साम वेद ॥२२॥**

यद्वेव यत उ एवेति च्छेदः । उ शब्दो वार्थकः । समः प्लुषिणा पुत्रिकाशरीरेण समो मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकैः । त्रैलोक्यशरीरक-भगवतश्शरीरेणापि समो देवमनुष्यादिसर्वशरीरेणापि समः । नच प्रदीपो घटे सङ्कुचति प्रसादे च विकसित तथा प्राणोऽपि मशकादिशरीरेषु सङ्कोचमिभादिदेहेषु विकासञ्चापद्यतामिति सम-त्वासिद्धिरिति वाच्यम् । यतः खण्डादिषु गोत्ववच्छरीरेषु सर्वत्र-स्थितस्य प्राणस्य तच्छरीरानुरूपव्याप्तिमत्त्वेन समः । 'त एते सर्व एव समाः सर्वेऽनन्ता इतिश्रुतेर्जागरूकत्वात् । प्राणस्य समत्वं सिद्ध्यति । एतद्वेत्तुः फलमाह—अश्नुत इति । एवं समत्वात्सा-माख्यं प्राणं वेद यः श्रुतिप्रसारितमहत्त्वं तस्यैतत्फलमश्नुते व्याप्नोति, साम्नः प्राणस्य सायुज्यं सलोकतां समानलोकतां जयति प्राप्नोति ॥ २२ ॥

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदं सर्वमुत्तब्धं वागेव गीथोच्च गीथाचेति स उद्गीथः ॥ २३ ॥**

एष उ वा उद्गीथः । प्राणः । प्रस्तावादिशब्दस्य भक्तिविशेषे रूढत्वादुद्गीथो नेत्यायामेत्यत्र चोद्गात्रे कमणि प्रयुक्तत्वात कथमुद्गी-थशब्देन प्राण उच्यत इत्यत आह—उत्प्राणेनेति । उत्प्राणेन हि यस्मादिदं सर्वं जगदुत्तब्धम् । ऊर्ध्वं स्तब्धमुत्तम्भितं विधृतमित्यर्थः । तस्मादुत्प्राणो वागेव गीथोशब्दविशेषत्वादुद्गीथभक्तेः । गायतेः शब्दार्थत्वात् सा वागेव नह्युद्गीथभक्तेः शब्दव्यतिरेकेण किञ्चि-द्रूपमुत्प्रेक्ष्यते । तस्माद्युक्तमवधारणं वागेव गीथेति । उच्च

प्राणो गीथा च प्राणतन्त्रा वागित्युभयमेकेन शब्देनाभिधीयते, स उद्गीथः ॥ २३ ॥

उक्तार्थसिद्धये आख्यायिकाऽऽरभ्यते ।

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचान्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्ये नोद्गायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥**

तत् तत्रैतस्मिन्नुक्तेऽर्थे हापि प्रसिद्धमपि ब्रह्मदत्तो नामतः, चैकितानेरपत्यं चैकितानेयः राजानं सोमं भक्षयन्नुवाच । अयं भक्ष्यमाणो राजा ऽन्यस्य तस्य मूर्धानं शिरोविपातयताद्विस्पष्टं पातयतु । तस्यापराधं दर्शयन्नाह—यदि त इति । यस्मात्कारणादितोऽस्मादयास्याङ्गिरसो मुख्यप्राणादन्येन देवतान्तरेणोदगायदुद्गानं कृतवान् । इति शब्दो ब्रह्मदत्तवाक्यसमाप्तौ । यस्माद्धेतोः सोमं पिबच्छपथं कृतवांस्तस्माद् ब्रह्मदत्तोऽपास्याङ्गिरसशब्दितवाक्सहितप्राणवेदनमेव कृत्वोद्गानं कृतवानित्यर्थः ॥ २४ ॥

**तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयाऽऽर्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥**

तस्येति प्रकृतप्राणस्य परामर्शकम् । एतस्य प्रकृतस्य साम्नः सामशब्दवाच्यस्य प्राणस्य यः स्वं धनं वेद तस्य स्वं भवति । फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषव आह । तस्य वै साम्नः स्वर एव स्वम् । स्वरशब्देन कण्ठगतं माधुर्यमुच्यते । यस्मादेवं तस्मादार्त्विज्यम् । ऋत्विजः कर्मार्त्विज्यम् । ऋत्विक्कर्मोद्गानं करिष्यन् वाचि विषये वागाश्रितं स्वरमिच्छेत यथा कण्ठध्वनिर्भवति तदुपायं मधुपिप्पलीसेवादिलक्षणं कुर्यादित्यर्थः । तयैवं संस्कृतया वाचा स्वर-

सम्पन्नयाऽऽर्त्विज्यं कुर्यात्। तस्मात् स्वर एव साम्नः स्वं तस्माद्यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त एव जना इति शेषः। प्रसिद्धं हि लोके यस्य स्वधनमस्ति तं सर्वे दिदृक्षन्त-इति ।। एतद्वेत्तुः फलं दर्शयति-भवतीति । योऽधिकारी एवं प्रागुपदर्शितप्रकारेण साम्नः स्वं धनं वेद जानाति, अस्य वेत्तुः स्वं भवतीत्यर्थः ।। २५ ।।

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ।। ६।।**

साम्नो गुणान्तरमाह । तस्येति--असावपि सौस्वर्य्यमेव पूर्वोत्तरयोरयमेव विशेषः । पूर्वकण्ठगतं माधुर्यमिदन्तु लक्षणज्ञान-पूर्वकं सुवर्णशब्दवाच्यम् । सुष्टुवर्णोच्चारणमितियावत् । तस्य हैतस्य साम्नोः यः सुवर्णं वेद भवति एवं फलप्रदर्शनेन शुश्रूषामुत्पाद्याह-तस्येति। सप्तस्वरवेत्तुः स्वर एव सुवर्णं भूषणम्। सामस्वरे सुवर्ण-त्वज्ञानस्य फलं निर्वक्ति-भवति हास्य इति ।। २६ ।।

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्युहैक आहुः ।। २७ ।।**

प्राणस्य प्रतिष्ठात्वगुणं दर्शयन्नाह-तस्येति । तस्य साम्नो यः प्रतिष्ठां वेद गुणं जानाति स पुमान् प्रतिष्ठति। "तं यथोपासते" इतिश्रुतेस्तद्गुणत्वं युक्तम् । एवं फलप्रदर्शनेन पूर्वं शुश्रूषामुत्पा-द्याह-तस्य वै इति । तस्य साम्नः वागेव वागिति जिह्वामूलीयादीनां स्थानानामाख्या सैव प्रतिष्ठा तदाह-वाचि हीति । एष मुख्यप्राणः वाचि, जिह्वामूलीयादिषु हि यस्मात् प्रतिष्ठितः सन्नैतद्गानं गीयते-गीतिभावमापद्यते, तस्मात् साम्नः प्रतिष्ठा वाक । अन्ने प्रतिष्ठितो गीयत इत्युहैकेऽन्य आहुः ।। २७ ।।

1975

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति। स यत्र प्रस्तूयात्तदेतानि जपेत्। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदाहासतो मा सदगमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमोज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमगायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तम् स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद॥२८॥

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम्॥ ३॥

---

ब्रह्मलोकाभ्यारोहहेतुतयाऽभ्यारोहशब्दवाच्यानां मन्त्राणां प्रार्थनारूपाणां प्रयोगकालं मन्त्रार्थञ्चाह-अथेति। अथोद्गातृप्राणविद्योपदेशानन्तरं वहिष्पवमानमाध्यंदिनपवमानार्भवपवमानभेदभिन्नानां त्रयाणामेव पवमानानामभ्यारोहमन्त्रा नेतरेषामाप्रष्टादिस्तोत्राणामित्यर्थः। प्रस्तोता प्रस्तोतुं योग्य इति स एव साम प्रस्तौति-स प्रस्तोता यत्र यदा प्रस्तूयात्। प्रस्तावमारभेत, तत् तदा प्रस्तावकाले एतानि वक्ष्यमाणानि विष्णुप्रार्थनरूपाणि यजूंषि स्तोत्राणि जपेत। तान्युदाहरति-असत इति। मा मामसतः सद्गमय मृत्योरमृतं गमय मृत्योरमृतं कुरु मृत्योः संसारादुद्धृत्यामृतं कुर्वित्यर्थः। स यदा हानेन मन्त्रेण यत्प्रतिपाद्यमाह-तदमृतं मा कुर्वित्येतदाहेत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। अथ यानीति। यस्मात् कारणात् त्रिष्वपि पवमानेषूद्गातैभिर्यजुर्मन्त्रैर्यजमानेन स्वगतं फलं याचितोऽतो यजमानगामिफलमुद्दिश्यैवागायेत्। पवमानत्रयव्यतिरिक्तोऽज्यादिषु नवस्तोत्रेष्वात्मने स्वार्थमन्नाद्यमुद्दिश्यागायेत। तस्मादिति। तस्माद्धेतोः

पवमानेऽ्यतिरिक्तस्तोत्रेषु यं कामं कामयेत तं वरं वृणीत । स एष इति । तमुद्दिश्यागाय आगानेन तं सम्पादयतीत्यर्थः । तद्धैत-दिति पूर्वोक्तं तदेतत् प्राणवेदनं लोकजिदेव ब्रह्मलोकसाधनमेव । एवं वेत्तुः फलं निर्वक्ति–न हैवेति । य एवमुक्तप्रकारेण सामशब्दनिर्दिष्टं वेद तस्य वेत्तुः । आलोक्यतायाः । लोकस्यायं लोक्यः । न लोक्यः अलोक्यस्तस्यभावस्तथा लोकराहित्यस्येति यावत् । आशा नास्ति, अरिणा न कार्येतिभावः ॥ २८ ॥

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां प्रथमाध्यायस्य-तृतीयं ब्राह्मणम् ॥ ३ ॥

---

**आत्मैवेदमग्र आसीत् पुरुषविधः सोऽन्वीक्ष्य नान्यदात्म-नोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येत-र्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽन्यथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥**

इदं नामरूपात्मकं जगदग्रे सृष्टेः प्राक् पुरुषविध आत्मैवासीत् । पुरुषस्य विधेव विधा यस्य स पुरुषविधः पुरुषाकार इत्यर्थः । स पुरुषः परमात्माऽन्वीक्ष्य दृष्ट्वा आत्मनोऽन्यन्नापश्यत् सर्वस्य वस्तुनः परमात्मनोऽविभक्तत्वादिति भावः । अहमस्मि अहङ्कारः स्यां चतुर्मुखः स्यामितिसङ्कल्पवाक्यं व्याजहार,ततोऽहंनामाऽभवत् चतुर्मुखोऽभवत् ।

"तस्मात् पद्मात्समभवद् ब्रह्मा वेदमयो निधिः । अहङ्कार-इति ख्यातः सर्वभूतात्मभूतकृत्–"इति मोक्षधर्मे भृगुभरद्वाजसम्बादेऽभिहितम् । यस्मादेवं तस्मात्तत्सृष्टोपि लोकः । एतर्हि एतस्मिन् काले आम-न्त्रितः कस्त्वमितिपृष्टोऽहमयमित्येव अग्रे प्रथममुक्त्वाऽथानन्तरम्, अन्यत्पिण्डविषयं यदस्य पुरुषस्य मातापितृकृतं भवति तन्नाम प्रब्रूते कथयति ॥ स परमात्मा यस्मात् सर्वस्मात् पूर्वो यस्माच्च हेतोः सर्वान्

पाप्मनः औषत् ददाह । 'उष' दाहे–तस्मात् । पुरुषः पुरुषपदवाच्यः । नात्र तच्छब्देनाऽव्यवहितस्याहंनाम्नश्चतुर्मुखस्य परामर्शः । तस्य स्वयं कर्मवशस्य सर्वपापदाहकत्वासम्भवात् । एतद्वेत्तुः फलमाह । य एवमुक्तप्रकारेण पुरुषविधं परमात्मानं वेद स तमोषति दहति, तं कं योऽस्मात् पूर्वो बुभूषति । यः पुमानस्मात्पुरुषविदः पूर्वो बुभूषति श्रेष्ठो भवितुमिच्छति॥ विजिगीषुं तिरस्करोतीति फलितार्थः ॥ १ ॥

**सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद् द्वितीयाद्वै भयं भवति ॥२॥**

स ब्रह्मा । अबिभेत् भीतवान् । एकाकित्वात् । यस्मादेवं तस्मात् अद्यतनो यः कोऽपि एकाकी निर्विवेकं बिभेति, सोऽयं चतुर्मुख ईक्षांविमर्शं चक्रे ह किमिति। यद्यस्मादन्यत् मद्बाधकं नास्ति अतः कस्माद्बिभेमीति । तत एव विमर्शनादेव । अस्य ब्रह्मणो भयं वीयाय विस्पष्टतां जगाम । तत्रोपपत्तिमाह–कस्मादिति । हि यस्माद्द्वितीयाद्विरोधिनः समानाद्विरोधिनोऽधिकात् स्वानधीनाद्वा भयं भवति तच्चात्र नास्ति, अतः कस्मादभेष्यत् ॥ २ ॥

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत्तत पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति हस्माऽऽह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥**

स चतुर्मुखः नैव रेमे । यस्मादेकाकिनश्चतुर्मुखस्य न रतिरत एवेदानीमपि एकाकी न रमते रतिरिष्टार्थसंयोगजा प्रीतिर्नानुभवति । स ब्रह्मा द्वितीयं रन्तुमैच्छत् । ह शब्दो वृत्तार्थस्मरणे । यथा लोके स्त्रीपुमांसौ रत्यर्थं संपरिष्वक्तौ यत्परिमाणौ स्यातां स तत्परिमाणो विवृद्धो

बभूवेत्यर्थः। स ब्रह्मा इमं विवृद्धमात्मानं शरीरं द्वेधाऽपातयत्। ततः पतनादेव पतिपत्नीशब्दवाच्यौ दम्पती अभवताम्। तस्माद्धेतोरिदं शरीरं स्वः स्वस्यात्मन इति यावत्। विभक्तिव्यत्ययश्छान्दसः। तस्मादिदं शरीरमात्मनोऽर्धवृगलमर्धञ्च तदवृगलञ्च तद-र्धवृगलमर्धविदलमिवेत्यर्थः। प्राक् स्त्र्युद्वहनाच्छरीरस्यार्धवृगल मित्युच्यते। इतियाज्ञवल्क्य आह स्मोक्तवान्। यस्मात्। विवाहा-त्प्रागर्धं विदलं तस्मादेकांशो विवाहे सति स्त्रिया पूर्यते। अर्धो वा एष आत्मनो यत्पत्नीतिश्रुतेः। तां शतरूपाख्यामात्मनोदुहितरं स प्रजा-पतिः समभवत्। तस्मात् तत्सङ्गान्मनुष्या उत्पन्नाः॥ उक्तञ्च विष्णु-पुराणे। शतरूपाञ्च तां नारीं तपोनिर्धूतकल्मषाम्। स्वायम्भुवो मनु-र्देवः पत्नीत्वे जगृहे प्रभुः॥ ३॥

**सो हेयमीक्षांचक्रे कथं नु मात्मान एव जनयित्वा सम्भ-वति हन्त तिरोऽसानीति सा गौरभवद्वृषभइतरस्तां समेवाभव-त्ततो गावोऽजायन्त वडवेतराऽभवदश्व वृष इतरो गर्दभीतरा-गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायताजेतराभव-द्वस्त इतरोऽविरितरामेष उतरस्ताँ समेवाभवत्ततोऽजावयोऽ-जायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत्सर्वम-सृजत॥ ४॥**

सा उह इयमिति पदच्छेदः। सेयं शतरूपा ईक्षां विचारं चक्रे ह किमिति। मा मां आत्मानः स्वस्मादेव जनयित्वा कथं नु सम्भोगं करोति। हन्तेत्याश्चर्ये। तिरोसानीति। तिरोभूतासानीति। एवं लौकि-कस्त्रीस्वभावं दर्शयित्वा गवादिनानासृष्ट्यर्थं सा शतरूपा गौरभवत्। इतरश्चतुर्मुखः वृषभः सन् तत्समभवत्। ततो वृषगोसंयोगेन गावोऽ-जायन्त। इतरा शतरूपा वडवाऽश्वाऽभवत्। इतरः। अश्ववृषः। अश्व श्रेष्ठः। तत्समभवदितिसम्बन्धः। इतरा गर्दभी अभवत। इतरो-गर्दभः। तामेव गर्दभीमेव समभवत। ततो वडवाश्ववृपादिसम्भोगेन

एकशफम् । अश्वगर्दभाद्येकशफोपेतजातीयमजायत वस्तः-च्छागः । शिष्टं पूर्ववत् । एवमुक्तप्रकारेण । आपिपीलकाभ्यः पिपीलिकापर्य्यन्तं यदिदं किञ्च मृगकीटकादिकं मिथुनं मिथुनसृष्टियोग्यं तत्सर्वम-सृजत ॥ ४ ॥

**सोऽवेदेहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः सृष्टि-रभवत्सृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥**

स ब्रह्मा सर्वमिदं जगदितिसृष्ट्वा उवेत् व्यजानात् । किमिति अहमेव सृष्टिः कुतः हि यस्मादहं इदं देवादिपिपीलिकान्तं सर्वम् ,असृक्षि सृष्टवानिति ततः सृष्टिकर्तृत्वेन प्रवृत्तिनिमित्तेन सृष्टिरस्मीति ब्रह्मणो-ज्ञानात् सृष्टिःनाम कोऽभवदित्यर्थः । य एवं सृष्टिनिरुक्तिं वेद हास्य प्रजापतेरेतस्यां सष्टौ मुख्यो भवतीत्यर्थः ॥५॥

**अथेत्यभ्यमन्थत् स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृ-जत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं दैवमेतस्यैव सा विसृष्टि-रेष उ ह्येव सर्वे देवाः। अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोमएवान्न-मग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरिति सृष्ट्यां हास्यै-तस्यां भवति य एवं वेद ॥ ६ ॥**

अथेति मङ्गलोच्चारणपूर्वकम् , अनेन प्रकारेण मुखे हस्तौ प्रक्षि-प्याभ्यमन्थदाभिमुख्येन मन्थनमकरोत । स ब्रह्मा मुखं हस्ताभ्यां म-थित्वा मुखाच्च योनेर्हस्ताभ्याञ्च योनिभ्यामग्निमसृजत सृष्टवान् । यस्मादाहकस्याग्नेर्योनिरेतदुभयं हस्तौ मुखञ्च तस्मादुभयमप्येतदलोमकं लोमवर्जितम् । अन्तरतो मध्याभ्यन्तरतः । अलोमकाहि योनिरन्तरतः स्त्रीणाम । तस्माद्धेतोर्यज्ञे याज्ञिका अमुं यजामुं यजेति एकैकं दैवमि-

न्द्रादिलक्षणमाहुः । एतस्य प्रजापतेरेव सा विसृष्टिर्विविधसृष्टिः । अतएव तत्स्रष्टृत्वादेव सर्वे देवा एष ह्येवैष एव कार्यकारणयोरभेदो- पचारात् तथोक्तिः । यच्चेदं कार्यमार्द्रं द्रवरूपं दृश्यते तद्रेतसोऽसृजत तद्रेतसः प्रजापतिरसृजतेत्यर्थः । 'शिश्नाद्रेतो रेतस आपः ॥' इति श्रुतेः तदु सोम इति । तद्द्रवरूपमेव सोमः । सोमरसः । इदं सृज्यं सर्वम्, एतावद्वा एतावदेव । कियदित्यत आह । अत्र किमन्नं कोऽन्नाद इत्यत आह—सोम इति । सोमस्य भक्ष्यमाणत्वादन्नम् । अग्नेस्तद्दाहकतया- ऽन्नादत्वम् । अतो जगदग्नीषोमात्मकमिति भावः । सेषेति । यद्य- स्माच्छ्रेयसः श्रेष्ठानूर्ध्वरेतसः सनन्दादीन् देवानसृजत सैषा ब्रह्मणोऽतिसृष्टिः ॥ अतिशयिता सृष्टिरतिसृष्टिः । अथेति- चतुर्मुखः स्वयं मर्त्यः सन् मरणधर्मासन्नमृतान् मुक्तियोग्यान् ज्ञानवैराग्यसम्पन्नान् मुमुक्षूनसृजत । य एवं वेदैवं प्रकरेणज्ञानवा- नेतस्यामतिसृष्टौ मुख्यो भवतीत्यर्थः ॥ ६ ॥

**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते असौ नामाऽयमिदं रूप इति । तदिदं मप्येतर्हि नाम रूपा- भ्यामेव व्याक्रियतेऽसौ नामायमिदंरूप इति स एष इह प्रविष्टः आनखाग्रेभ्यो यथा क्षुरः क्षुर धानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यति अकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति । वदन् वाक् पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्म नामान्येव ॥**

तर्हि तदा प्रलये तत्पूर्वोक्तमिदमव्याकृतं नामरूपतयाऽनभिव्यक्तं नारायणाख्यं ब्रह्मासीत् । हेति प्रसिद्धमाह--तदव्यक्तं नामरूपाभ्यामेव व्याक्रियत हरिणा व्यक्तमकारि । तदेव विवृणोति असौ नामेति । अयं ब्रह्मादिर्महत्तत्वादिश्च पदार्थः । अदो हिरण्यगर्भो महानित्यादिनाम वाचकं यस्य सः । असौ नामा इदं चतुर्मुखादि अहङ्काराद्यपेक्षया परि- माणविशेषोपेतत्वादिरूपं यस्य सः इदं रूप इति व्याक्रियत इति

सम्बन्धः। स प्रलयाग्रवर्त्ती एष जगत्सर्जकः परमात्मा इह स्वसृष्टदेवादौ आनखाग्रेभ्य उपलक्षणमेतत्। आकोशात्सर्वशरीरादिकमभिव्याप्येति यावत्। प्रविष्टः अन्तर्यामितया अन्तर्गतः॥ तत्र दृष्टान्तमाह। यथेति। क्षुरोधीयतेऽस्मिन्निति क्षुरधानं क्षुरकोशस्तस्मिन् यथा क्षुरोऽवहितः प्रविष्टः विश्वं विभर्ति वैश्वानराग्न्यादिरूपेणेति विश्वंभरोऽग्निस्तस्य कुलाये नीडे दारुणीति यावत्। तं परमात्मानं स्वशरीरप्रविष्टमपि न पश्यति सोऽकृत्स्नोऽपूर्णस्वरूपोऽसत्कल्प इति यावत्। ब्रह्मण एव सर्वनामरूपवत्त्वमुपपादयति। प्राणन्नेवेति। प्राणनक्रियामात्रं कुर्वन् प्राणनामा भवति। वदनक्रियां कुर्वन् वाङ्नामा भवति दर्शनक्रियां कुर्वंश्चक्षुर्नामा भवति शृण्वन् श्रोत्रम्। मनुत इति मनः तान्येतानि प्राणइत्यादिनामानि अस्य कर्मनामान्येव प्राणनादिकर्मकर्तृत्ववाचकानि। अस्य सर्वान्तःप्रविष्टस्य वासुदेवस्य अतः सर्वनामरूपाश्रयत्वं वासुदेवस्यास्तीति भावः।

**स योऽत एकैकमुपास्ते न स वेद। अकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत। अत्र ह्येते सर्व एकं भवन्ति। तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा। अनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवम्। कीर्त्तिं श्लोकं विन्दते य एवं वेद॥ ७॥**

यस्मान्नामरूपात्मकप्रपञ्चाभिन्नाभिन्नं ब्रह्म य एकैकं केवलेन भिन्नत्वेन रूपेणाभिन्नत्वेन रूपेण वा ब्रह्म उपास्ते न स वेद तदुपासनमेव न भवतीत्यर्थः। कुत इत्यत्राह अकृत्स्न इति एष चिदचिद्भिन्नाभिन्नो वासुदेवः। एकैकेन केवलेन भेदेन केवलेनाभेदेन वाऽकृत्स्नोऽपूर्णो भवति प्रातिस्विकरूपेण पूर्णता नास्ति। अतो नामरूपात्मकचिदचिद्भिन्नाभिन्नो वासुदेवः परमात्मा उपासीत इत्यर्थः। अत्र भिन्नाभिन्ने ब्रह्मणि सर्वे पदार्था एकं भवन्ति अन्तर्भवन्तीत्यर्थः। तदेतदिति। तदेतदात्मस्वरूपं पदनीयं ज्ञातव्यं तत्र हेतुमाह। अस्य सर्वस्य यदय-

मात्मा यद्यस्मात्कारणादस्य सर्वस्यायमात्माऽत इत्यर्थः। तमेवैकं जानथाऽऽत्मानम्। इत्यात्मन एव ज्ञातत्वाभिधानादिति भावः। अनेन आत्मनाऽभिज्ञानेन सर्वं वेद सर्वज्ञो भवति। यथा ह वै पदेनेति ह वै शब्दौ प्रसिद्धौ यथा चौराद्याहृतं गवादिधनं तत्पदाङ्कितपदेन लभत एवं पदनीयत्वेन प्रपत्तव्येन सर्वस्य पदभूतेन ब्रह्मणा सर्वमनुविन्देद्विदेत्यर्थः। कीर्तिमिति। कीर्तिं ख्यातिसामन्यं श्लोकं पुण्यश्लोकत्वञ्च लभत इत्यर्थः॥ ७॥

**तदेतत्प्रेयः पुत्रात् प्रेयो मित्रात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात् आत्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति॥ ८॥**

आत्मत्वेनोपासनं प्रेमयुक्तञ्चेत् पुरुषार्थहेतुरिति वक्तुमाह। तदेतदिति। तदेतदन्तरं शरीरान्तर्गतजीवान्तःप्रविष्टं सर्वान्तःप्रविष्टं वा पुत्रात् प्रेयः। अतिशयेन प्रियम्। अतिशयश्च निरुपाधिकत्वम्। मित्रात् प्रेयः। तथा वित्ताद्धिरण्यरत्नादेस्तथान्यस्माद्यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः यो हि निरतिशयः स सर्वप्रयत्नेन लब्धव्यो भवति तथाऽयमात्मा सर्वेभ्यः प्रियतमस्तस्मात्तल्लाभे महान् यत्नोऽभिधेयः। स यः कश्चिदात्मनः सकाशादन्यत्प्रियमस्तीति ब्रुवाणं प्रतीश्वरः प्रियं रोत्स्यति प्रियनिरोधमीश्वरः करिष्यतीति यदि ब्रूयात् तथैव भवेदित्यर्थः यदर्थमेतदुक्तं तदाह। आत्मानमेवेति। तस्माद्धेतोर्निरतिशयप्रियमात्मानमेवोपासीत निरतिशयप्रियत्वेनात्मोपासकस्य फलमाह। स य इति। स य आत्मानं परमात्मानं प्रियमुपास्ते आत्मैव प्रयोनान्योऽस्तीति प्रतिपद्यतेऽन्यल्लौकिकं प्रियमप्यप्रियमेवेति निश्चित्योपास्ते न हास्यैवंविदः प्रियं प्रमायुकं प्रकृष्टमायुर्मरणमस्य तत्प्रमायुकमविनष्टं भवतीत्यर्थः॥ ८॥

**तदाहुः यद्ब्रह्म विद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते। किमु तद्ब्रह्मावेद्यस्मात्सर्वमभवदिति ॥९॥**

तद्वाक्यं वक्ष्यमाणमाहुः पप्रच्छुरित्यर्थः। किमु तद्ब्रह्म यस्य विज्ञानात् सर्वंभविष्यन्तो मनुष्या मन्यन्ते। किमु तद्ब्रह्मावेद्यस्मात्सर्वमभवदिति। तद्ब्रह्म किं वेद्यं वस्त्वन्तरमवेत् यस्माद्वेदनात्सर्वमभवदिति। ब्रह्मणोऽपि परं तदुपास्यं वस्त्वित नवेति जिज्ञासोत्थापिता ॥९॥

नास्ति ब्रह्मणोऽतिरिक्तमुपास्यान्तरमिति समाधत्ते।

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्। अहं ब्रह्माऽस्मीति तस्मात्तत्सर्वमभवत्। तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्। तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्माऽस्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति॥१०॥**

इदं चिदचिदात्मकं जगत्। अग्रे सृष्टेः प्राक् ब्रह्मैवासीत्। तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात्सर्वमभवदिति। आत्मानमेवावेन्नत्वन्यदुपास्यम्। स कारणं कारणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः॥ श्वेता०। ६। ९। अत्र कारणान्तरनिषेधेन परमकारणत्वं ब्रह्मणो यथा सिद्धयति एवमुपास्यान्तरनिषेधेन परमोपास्यत्वं भगवत इत्याशयः। एतद्वेत्तुः फलमाह—तद्योयोदेवानामिति। देवानां मध्ये यो यो देवः ब्रह्म प्रत्यबुद्ध्यत स एव तथा तज्ज्ञानानुसारेण सर्वात्मभूतपरमात्मकोऽभवत्। तथा ऋषीणां मध्ये यो य ऋषिर्यथातत्प्रत्यबुध्यत तथा स एव तदभवत्। तथा मनुष्याणां मध्ये यो यो मनुष्यो यथा तत्प्रत्यबुध्यते तथा तज्ज्ञानानुसारेण तदभवदिति सम्बन्धः श्रुत्युक्तार्थे प्रमाणमाह। तदिति। 'ह'शब्दो वृत्तार्थस्मरणे तदेतद्ब्रह्म

पश्यन्नुपासीनो वामदेवर्षिरहंमनुरभवं सूर्यश्चेति मदात्मैव मन्वादीनामात्मेति मन्वादिना सर्वेण स्वस्यैकात्म्यं साक्षात्कृतवान् । न केवलं पूर्वमेव देवादीनामेतज्ज्ञानेनैव फलप्राप्तिः किं तर्हीत्यत आह । तदिदमपीति । य एतर्ह्यपि इदानीमपि तदिदं ब्रह्माऽस्मि परब्रह्मात्मकोऽस्मीति वेद स इदं सर्वं भवति । ब्रह्मात्मकत्वेन तदुपासनस्य सर्वैकात्म्यसाक्षात्कारहेतुत्वं सर्वदा सिद्धमिति भावः । इदानींतनस्य देवकृतविघ्नस्य सम्भवात् कथं विद्याफलप्राप्तिरित्यत आह । तस्येति । तस्योपासकस्य देवाश्च देवाऽपि । अभूत्यै विद्याफलविघाताय नेशते ह तद्विघातं न कुर्वन्ति । किमसामर्थ्यादेव न कुर्वन्ति नेत्याह । आत्मेति स ईश्वरः । एषां देवानामात्मा कार्येषु नियोक्तृत्वेन तेषु व्याप्तत्वात् । आत्मा हि यस्मात्तस्मादिति पूर्वेण सम्बन्धः ॥ १० ॥

एवं ब्रह्मात्मत्वविदां प्रशंसां कृत्वाऽतादृशानां निन्दयति ।

**अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानाम् । यथाह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेवैकैकः पुरुषो देवान् भुनक्ति एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥**

यः पुमान् धारकत्वनियन्तृत्वादिना स्वस्मादात्मत्वेनान्यां देवतां परमात्मरूपामसौ देवतारूपो धारकत्वनियन्तृत्वादिनाऽत्मभूतादन्योऽहं च धार्यत्वनियन्तृत्वादिप्रयुक्तच्छरीरत्वादन्यो भिन्न इत्युपासते न स वेदज्ञः । यथा लोके पशुरेवं स देवानां पशुः । यथा बहवः पशवो गोरूपाः दोहनादिना मनुष्यं भुञ्ज्युः भोजयेयुरेवमेकैको ज्ञानी पुरुषो देवान् भुनक्ति भोजयति । एकस्मिन्निति । यस्माल्लोके एकस्मिन् भोजके पशावदीयमानेऽप्रियं भवति किमु बहुषु । तस्मादेतेषां

देवानां तत्प्रियं न भवति यदेतन्मनुष्या ब्रह्म विद्युः । अतः स्वकिङ्करतया पशुभूतामनुष्या ब्रह्मविद्यां प्राप्य पशुभावान्मुच्येरन्निति बुद्ध्या यथाशक्ति विघ्नमाचरन्तीति भावः । तन्निवारणक्षमश्रीवासुदेवस्तवनमर्चनादिकमनुतिष्ठन्नवहितो ब्रह्मविद्यायां यतेतेति भावः ॥१०॥

प्रपञ्चस्य ब्रह्मोपादानत्वं बहुकृत्वोऽपिपाठ्यं पठितव्यमिति नीतिमवलम्ब्य शिक्षावधानाय पुनः स्मारयति ।

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्नव्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रम् । यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युमीशान इति । तस्मात् क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् । य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति । पापीयान् भवति यथा श्रेयांꣳ सꣳ हिꣳसित्वा ॥ ११ ॥**

ब्रह्मेतिपूर्ववत् । तद्ब्रह्म एकं सत् नव्यवभवत् परिवार विशिष्टं नाभवत् । तद्ब्रह्मात्मनः परिवारमिच्छन श्रेयोरूपं सर्वजात्युत्तमं क्षत्रजातिमत्यसृजत । तदेव व्यक्तिभेदेन दर्शयति यानीति । देवत्रा देवेषु देवमनुष्यः । सू० ५ । ४ । ५६ ॥ इत्यादिना सप्तम्यर्थे 'त्रा' प्रत्ययः । यान्येतानि प्रसिद्धानि क्षत्राणि । एतानि कानीत्यपेक्षायामाह ! इन्द्र इति यस्मात् क्षत्रं श्रेयोरूपं तस्मात् क्षत्रात परमुत्तमं ब्राह्मणजातिं विना नास्ति । कचित्समये ब्राह्मणादप्युत्तमः क्षत्रियः किमु वैश्यादेरितिभावेन ब्राह्मणात् क्षत्रियस्योत्तमत्वे लिङ्गमाह । तस्मादिति । यस्मात क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः स्वयं गुरुरपि । आसीनं क्षत्रियमासनाधस्तात् राजसूये उपास्ते किमर्थमित्यत आह । क्षत्र एवेति । यशोनिधिर्ब्राह्मणस्तत्स्वामी यं यशः तद्येनाधस्तात

उपासनेन क्षत्रएव दधाति स्थापयति । तस्मै यशोदातुं तथोपास्त इत्यर्थः । स्वयमुत्तमो यशोदातुमधस्तादुपास्त इति कुतोऽपकृष्टत्वादेव तथोपासत इति किं न स्यादित्यत आह । सैषेति । यद्यपि राजा तस्माद्राजसूयकर्तृत्वोपाधेः परमतां गच्छति तथापि यद्ब्रह्म यो ब्राह्मणः सैषा क्षत्रिस्य योनिरुपदेशादिना ज्ञप्तिकारणं गुरुरिति यावत् । गुरुत्वज्ञापकमाह । ब्रह्मैवेति। तस्मादित्यनुवर्त्तते । तस्माद्ब्राह्मणस्य गुरुत्वादेव अन्ततो राजसूयान्ते राजा स्वां योनिं स्वगुरुभूतं ब्रह्म ब्राह्मणमुपनिश्रयति वन्दयीत । इतोऽपि ब्राह्मण क्षत्रियादुत्तम इति भावेनाह। य इति। यः क्षत्रियः, एनं ब्राह्मणं हिनस्ति सः स्वां योनिं स्वपितरं ऋच्छति विनाशयति । ब्राह्मणहन्तुरपि क्षत्रियस्य पितृजीवनदर्शनात् कथमेतदित्यतोऽभिप्रायमाह—स इति यथा श्रेयांसं गुणाधिकं स्वपितरं हिंसित्वा हत्वा पापीयान् भवति तथा ब्रह्मणहा क्षत्रियः पापीयानेव भवति नतु तद्धननैतद्धन्तेत्यर्थः॥११॥

**स नैव व्यभवत् स विशमसृजत । यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥**

स परमात्मा क्षत्रसृष्ट्यापि विभुत्वं नाप ततो वैश्यमसृजत । तदेव व्यक्तिभेदेन दर्शयति । यानीति । देवजातानि देवत्वजातिमन्ति गणशो गणरूपेणाऽऽख्यायन्ते वसुरुद्रादित्यविश्वेदेवमरुतां गण देवतात्वप्रसिद्धेः ॥ १२ ॥

**स नैव व्यभवत् स शौद्रं वर्णमसृजत । पूषणमियं वै पूषेयᳬं हीदᳬं सर्वं पुष्यति यदिदं किञ्च ॥ १३ ॥**

स परमात्मा बहुतरपरिवारेच्छुः शौद्रं वर्णमसृजत। किं तत्। पूषणं कः पूषेत्यत आह। इयमिति इयं पृथिवी । केन निमित्तेनेत्यत आह । इयं हीति । पुष्यति—पोषयति ॥ १३ ॥

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मम् ॥ तदेतत् क्षत्रस्य क्षत्रं यद्धर्मात्परं नास्ति । अथोऽवलीयान् वलीयांसमाशंसते धर्मेण यथा राज्ञैवम् यो वै स धर्मः सत्यं वै तत्। तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीति एतद्ध्येवैतदुभयं भवति ॥ १४ ॥**

स परमात्मा चतुरः वर्णान् सृष्ट्वाऽपि आत्मविभूतिं नाऽप्नवान् । तच्छ्रेयोरूपं तस्य श्रेयोरूपत्वेन पूर्वमभिहितस्य क्षत्रियस्यापि श्रेयोरूपं धर्ममसृजत सृष्टवान्। क्षत्रस्य क्षत्रं =क्षत्रस्यापि नियन्तृ। तयो र्योधर्मस्तस्मात क्षत्रस्यापि नियन्तृत्वाद्धर्मात्परं नास्ति, तेन नियम्यन्ते सर्वे, तत्कुत इत्यत आह—अथ इति । अवलीयानपि पुमान् वलीयांसमात्मनो वलवत्तरमप्याशंसते=धर्मेण वलेन जेतुं कामयते यथा लोके सर्वे बलवन्तं राजानमलम्व्य दुर्बलं जिगीषन्ति तथेत्यर्थः तस्मात् सिद्धं धर्मस्य सर्वबलवत्तरत्वात् सर्वनियन्तृत्वम् । यो वै स इति । क्षत्रादपि श्रेय भूतोधर्मः सत्यवदनम् ॥ तस्मात्सत्यं वदन्तं समीपावस्था उभयविवेकज्ञा धर्मं वदन्तीति आहुः । धर्मं वा वदन्तं सत्यं वदन्तीति । एतद्ध्येव सत्यवदनमेतदुभयं सत्यधर्मोभयरूपं भवति । तस्मात् सत्यवदनं सर्वधर्मस्य प्रधानभूतमिति भावः ॥ १४ ॥

निगमयति—

**तदेतद् ब्रह्मक्षत्रं विट्शूद्रः । तदग्निनैव देवेषु ब्रह्माभवत् । ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः ॥**

तस्मादेतद्ब्रह्म क्षत्रविट्शूद्रात्मकमित्यर्थः । ननु कथं ब्रह्मणश्चातुर्वर्ण्यस्वरूपत्वं, क्षत्रादिसृष्टिश्च कुतेत्यपेक्षायामाह-तदग्निनैवेति । अग्निनेतीत्थंभावे तृतीया स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत१।४।६ इति 'तेजसो निवर्त्ताग्निः' इति स्रष्टृत्वेन प्रागुक्तेनाग्निनैव विशिष्टं सद् ब्रह्माभवद्ब्राह्मणोऽभवत् । अग्निरसं ब्रह्म ब्राह्मणत्वजातिमद्ब्रह्मण्य-

ग्निद्वारा ब्राह्मणत्वमित्यग्निरूपो ब्राह्मणोऽभवदिति पर्यवसितार्थः । इन्द्रादिरूपात्मकं ब्रह्म तद्द्वारा क्षत्रियत्वजातिमदभूत् । वसुरुद्रात्मकं ब्रह्म तद्द्वारा वैश्यत्वजातिमदभूत् । एवं पृथिव्यात्मकं ब्रह्म तद्द्वारा शूद्रत्वजातिमदभूदितिसिद्धम् । ब्राह्मण इति । तत्र ब्राह्मणेनेत्यध्याहर्त्तव्यम् । तथा च ब्राह्मणेन ब्राह्मण इति क्षत्रियेण क्षत्रिय इत्युत्तरग्रन्थानुसारात् । ततश्च ब्राह्मणद्वारा ब्राह्मणत्वजातिमदभवत् । क्षत्रियवैश्यादिद्वारा क्षत्रियत्वादिजातिमदभूदित्यर्थः । प्रसङ्गादग्निब्राह्मणौ प्रशंसति ॥

**तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वा ननुक्तोऽन्यद्वा कर्माकृतम् ॥**

देवानां मध्ये लोकमग्नावेवेच्छन्ति । अग्नाविति निमित्ते सप्तमी । अग्नेर्निमित्तादेवेच्छन्ति । मनुष्याणां मध्ये ब्राह्मणादेव निमित्ताल्लोकमिच्छन्तीत्यर्थः । यद्वा । देवेष्वग्नावेव हुत्वा मनुष्येषु ब्राह्मण एव दत्वा लोकमिच्छन्तीत्यर्थः । प्राशस्त्यहेतुमाह—एताभ्यामिति । एताभ्याम् । अग्निब्राह्मणरूपाभ्यां हि परं ब्रह्म प्रथमतस्तदात्मकमभवत् । आत्मस्वरूपं निरूप्य तद्वेदनस्यावश्यकतामाह—अथेति । अथ शब्दो वाक्यान्तरोपक्रमे । ह वै शब्दौ प्रसिद्धौ । उपासकैः लोक्यते दृश्यत इति लोकः आत्मा । तथा च स्वात्मानमदृष्ट्वाऽनपरोक्षीकृत्यास्माल्लोकात् प्रैति तमेनं पुमांसं स परमात्मा न भुनक्ति न परिपालयति । तत्कस्य हेतोरित्यत आह--अविदित इति । अनुपासित इत्यर्थः । अत्र दृष्टान्तमाह--यथेति । यथा वेदो नानुक्तोऽनधीतो वेदो न पालयति । अन्यद्वा कर्माकृतम् । वैदिकं कर्माननुष्ठितं नोपकरोति, तथेत्यर्थः ॥

**यदि ह वा अप्यनेवं विन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत स य**

**आत्मानं लोकमुपासते न हास्य कर्म क्षीयते तस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत्सृजते ॥ १५ ॥**

ह शब्दः प्रसिद्धौ । अनेवंविदब्रह्मवित् । यदि वाऽपि महदपि पुण्यं पुण्यसाधनं कर्माश्वमेधादिकं करोति अस्याब्रह्मविदस्तत् कर्म अन्ततः स्वर्गादिफलभोगावसाने क्षीयत एव न पुनरक्षयमोक्षसाधनम् । तस्मात् मुमुक्षुलोकं परमात्मानमेवोपासीत । स यः कश्चिदात्मानं परमात्मानं लोकं नित्यपरिकरैः सर्वदाऽऽलोक्यमानमुपास्ते । अस्योपासकस्य कर्म उपासनात्मकं तदङ्गभूतं कर्म वा न क्षीयते । तस्मादेव ब्रह्मवेदनादेव यद्यत्कामयते तस्मात् सङ्कल्पमात्रेण स्वाभिलषितं सृजतीत्यर्थः सङ्कल्पादेव तच्छ्रुतेः ।४।४।८॥ ब्र० इति भगवता श्रीवादरायणेन तत्वादिति भावः ॥ १५ ॥

**अथोऽयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणाम् । अथ यत् पितृभ्यो निमृणाति यत्प्रजामिच्छते ॥**

लोकशब्दस्य स्थानविशेषे प्रसिद्धत्वात् कथं लोकशब्देनात्मनोग्रहणमित्याशङ्कामपाकर्त्तुमाह । अथेति ।.अथोशब्दो वाक्यान्तरोपक्रमे वै शब्दोऽवधारणे । अयमहमितिप्रत्यक्षसिद्ध आत्मा प्रत्यगात्मा सर्वेषां भूतानां लोकः । तथाच प्रत्यागात्मना लोकत्वे कैमुत्यन्यायेन ब्रह्मणोऽपि सर्वभूतलोकत्वं सिद्धम् । तदेव विशदयति । स इति । यागहोमाभ्यां देवानामुपकारकत्वेन लोक इत्यर्थः । यदनूब्रूत इति स्वाध्यायमधीते । निमृणातीति । निमर्णनमौर्ध्वदैहिकम् । मृण हिंसायामितिधातुः । यत्प्रजामिच्छते । यत्प्रजामुत्पादयतीति यावत ।

**तेन पितॄणाम् । अथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणाम् अथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः । यथा ह वै स्वाय लोकायारिष्टमि-**

च्छदेव्ँ हैवं विदे सर्वाणि भूतान्यरिष्टमिच्छन्ति तद्वा एत-द्विदितं मीमाँसितम् ॥ १६ ॥

तेन पितॄणां लोक इति शेषः। वासयते गृहे शयनावकाश-प्रदानेनातिथीन्वासयते वसद्भ्यश्चान्नं ददाति ततो मनुष्याणां लोक इत्यर्थः विन्दति लम्भयति तेन पशूनां लोक इति शेषः। श्वापदाः श्वादयः वयांसि काकादीनि वलिभाण्डप्रक्षालानादुपजीवन्ति। अतस्तेषां लोकः। एवं स्वात्मनः सर्वलोकभूतलोकत्वपरिज्ञानस्य फलमाह। यथा ह वै स्वाय इति। ह वै शब्दौ प्रसिद्धौ। यथा लोके जनः स्वाय लोकाय स्वभोगस्थानायारिष्टं [रिष्टं नाशः। रिष हिंसायामितिधातुः।] अरिष्ट-मनाशमिच्छति। एवमात्मनि सर्वभूतलोकत्वविदे सर्वाणि भूतानि क्षेमं वाञ्छन्तीत्यर्थः। निगमयति तद्वेति। तद्वा एतत्परमात्मनो लोकत्वं विदितं मीमांसितं कैमुतिकन्यायतर्कानुगृहीतञ्चेत्यर्थः ॥१६॥

आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति। एतावान्वै कामः॥

जायापुत्रादिविभागशून्यतया एकः पुरुषरूपएवस्थित इत्यर्थः। स परमात्माऽकामयत किमिति जायामे स्यादिति सङ्कल्पानन्तरं प्रजादि-रूपेण जायेय वित्तञ्च भवतु। कर्मसाधनेन गवादिलक्षणवित्तेनाभ्युदय-निःश्रेयःसाधनं कर्म कुर्वीय जायापुत्रवित्तकर्मव्यतिरेकेण संसारिणां कामनाविषयः कोऽपिनास्तीत्यर्थः॥

नेच्छँश्च नातो भूयो विन्देत्। तस्मादप्येतर्ह्येकाकी। कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथकर्मकुर्वी-येति। स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्योकृत्स्नता मन एव स्यात्मा प्राणः प्रजा चक्षुर्मानसं

**वित्तं चक्षुषा हि तद्विन्दते श्रौत्रं दैवं श्रोत्रेण हि तच्छृणोति। आत्मैवास्य कर्माऽऽत्मना हि कर्म करोति॥**

चनशब्दोऽप्यर्थः। यस्मादिच्छन्नप्यतोऽस्मात्फलसाधनलक्षणाद् भूयोऽधिकतरं न विन्देन्न लभेत। तस्मा तत्सृष्टावेतर्ह्येतस्मिन्नपि काले। एकाकी सन् प्राग्दारादितः कामयते जाया मे स्यादिति कामयते स एवं कामयमानः सम्पादयंश्च जायादीन् यावन्तं कालं स एतेषां यथोक्तानां जायादीनामेकैकमपि न प्राप्नोत्यकृत्स्नोऽसम्पूर्णोऽहमित्येव तावदात्मानं मन्यते। यदा तु न शक्नोति कृत्स्नतां सम्पादयितुं तदास्यकृत्स्नत्वसम्पादनायाह–तस्येति। उशब्दोऽवधारणे।तस्याकृत्स्नस्य कृत्स्नतापूर्णनेवं भवति, कथमित्यत आह–मन एवास्यात्मा, मनसः प्रधानत्वादिति भावः। मनस्यात्मनं निरुच्य वाचि जायात्वं स्त्रीत्वसाम्यादाह–वाग्जायेति। प्राणः प्रजा=पुत्रः। वाङ्मनसाधीनत्वात् प्राणस्येत्यर्थः। देवमानुषभेदेन वित्तं द्विधा विभज्य दर्शयति–चक्षुरिति। गवादि हि मनुष्यसम्बन्धिवित्तं चक्षुर्ग्राह्यमतस्तस्य मानुषवित्तत्वम्। दैवशब्दितादृष्टप्रतिपादकश्रुतिस्मृत्युपलम्भकत्वाच्छ्रोत्रं दैववित्तमित्यर्थः। आत्मैवास्य कर्म। अत्रात्मपदेन शरीरमुच्यते, कथं पुनरात्मनः कर्मत्वमित्यत आह–आत्मनेति। आत्मना शरीरेण कर्म करोति॥

**स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिद७ सर्वं यदिदं किञ्च तदिदं सर्वमाप्नोति य एवं वेद॥ १७॥**

इति प्रथमाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

---

तस्मात् स एष पाङ्क्तः। पञ्चभिः आत्मजायापुत्रवित्तकर्मभिःसाध्यः। पाङ्क्तो यज्ञः। पशोरपि पाञ्चभौतिकत्वात् पाङ्क्तत्वम्। पुरुषस्यापि पाञ्चभौतिकत्वेन पाङ्क्तत्वम्। पाङ्क्तमिदमिति। सर्वस्यापि पाञ्चभौतिकत्वात् पाङ्क्तत्वम्। मनोवाक्प्राणचक्षुःश्रोत्रशरीरलक्षण-

समुदायमात्मजायापुत्रवित्तकर्मरूपेण पाङ्क्तयज्ञत्वपशुत्वादिरूपेण च य उपास्ते स इदं सर्वं पाङ्क्तशब्दवाच्यं प्राप्नोतीत्यर्थः ॥१७॥

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां–
प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

अथ प्रथमाध्यायस्य पञ्चमम्ब्राह्मणम्।

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता। एकमस्य साधारणं द्वे देवानभाजयत्। त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन। स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥

सर्वं जगत् सप्तधा प्रविभज्यमानं कार्यकारणत्वेन सप्तान्नान्युच्यन्ते। भोज्यत्वात्तेनासौ पिता तेषामन्नानाम्। एतेषामन्नानां सूत्रभूताः संक्षेपतः प्रकाशकत्वादिमे मन्त्राः ॥ १ ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति। मेधया हि तपसाऽजनयत् पिता। एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते। स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रँ ह्येतत्। द्वे देवानभाजयदिति हुतञ्च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्रजुहत्यथो आहुर्दर्शपूर्णमासाविति।

तत्राद्यमन्त्रभागमादाय श्रुतिः स्वयं व्याचष्टे। यत्सप्तान्नानीति। पितेति करणान्तं व्याख्येयं शिष्टं तस्य व्याख्यानम्। "तपसा चीयते ब्रह्म यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्मरूपमन्नञ्जायत"। पिता परमात्मा ज्ञानमयेन तपसा नामरूपलक्षणमन्नमजनयदित्यर्थः। द्वितीयमन्त्रेऽस्य सर्वस्यैकमन्नमकुरुत, किं तत्साधारणमित्युक्तंतत्प्रतीतेरित्यनूद्य व्याचष्टे। एकमिति। अस्य मनुष्यवर्गस्य तच्छु

त्युक्तं साधारणमन्नमिदमेव। किं यदिदं प्रसिद्धं प्राणिभिरद्यत-इत्यर्थः। सर्वसाधारणमिदमन्नमात्मीयत्वेनासाधारणं कुर्वतोदोषमाह-स इति। ततश्च य एतदन्नमुपसमीप एव वर्तमानं स्वकीयमेवेति-यावत्, उपास्ते मन्यते स पाप्मानो न व्यावर्त्तते। अत्ययपापवान्स्या-दित्यर्थः। कुतः, हि यस्मादेतदद्यमन्नं मिश्रं देवब्राह्मणादिसाधारणं, तच्च केवलमात्मीयत्वेन मन्यमानो देवब्रह्मस्वापहारीत्यर्थः। के ते द्वे देवान्ने, इत्यतो द्वैदेवानभाजयदिति मन्त्रमनूद्य व्याचष्टे—द्वे इति। मन्त्रपूतं देवान्नं हुतं होम्यं प्रहुतं वलिश्चाभाजयदित्यर्थः। यस्मा-द्धुतप्रहुते देवान्ने तस्मादिदानींतना अपि देवेभ्यो जुह्वति प्रजु-ह्वति। न केवलं वैश्वदेववलिहरणे देवानामन्ने। अपितु अन्य-दपीतिभावेन मुनिमतेनाह—अथो इति। अथोइति पक्षान्तरे। ये द्वे अन्ने देवानां परमात्मनादत्ते ते दर्शपूर्णमासावित्याहुर्ज्ञानिनः॥

**तस्मान्नेष्टियाजुकः स्यात्। पशुभ्य एकं प्रायच्छदिति-तत्पयः। पयोह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मा-त्कुमारं जातं घृतं चैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधाप-यन्त्यथ वत्सं जातमाहुरतृणाद इति। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदमाहुः सम्वत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्वेवं विद्वान् सर्वं हि देहेभ्योऽ-न्नाद्यं प्रयच्छति।**

यस्माद्धुतादिर्देवान्नं तस्मादिष्टियाजुकः=फलेच्छया यष्टा न स्यात्, तदीयस्यैव फलोद्देशेन तेषु विनियोगे तदपहर्तृत्वप्राप्ते-रितिभावः। त्रीण्यात्मने कुरुतेति मन्त्रव्याख्यानस्य वहुत्वात् सूची-कटाहन्यायेन पशुभ्य एकमिति मन्त्रमादावनूद्य किं तदेकमन्नमित्यत-स्तद्व्याचष्टे—पशुभ्य इति। यदेकमन्नं पशुभ्यः प्रायच्छत् तत्पय इत्यर्थः। पयसः पश्वन्नत्वमुपपादयति—पयो हीति। हि यस्मात् म-

नुष्याः पशवश्चाग्रे प्रथमं शैशवे पयएवोपजीवन्ति तस्मात्पशुभ्यो दत्तमेकं पय इत्यर्थः । अनेन मन्त्रस्थः पशुशब्दोऽज्ञानित्वसाधारण्यात् बालकमनुष्यपरोऽपीत्युक्तं भवति । यस्मात मनुष्या अग्रे पय एवोपजीवन्ति तस्माद्यतना जना जातं कुमारं घृतंचैव घृतमेव पयःकार्यमग्रे शैशवे प्रतिलेह्यन्ति प्राशयन्ति । अनु पश्चात् स्तनं धापयन्तीत्यर्थः । यस्मा [illegible] पयः पशव उपजीवन्ति अथ तस्माज्जातं वत्समतृणादः, तृणमत्तीतितृणादः न तृणादः । अतृणादः किन्तु पयोऽद इत्याहुः । तस्मिन्सर्वं प्रतिष्ठितमितिमन्त्रे तच्छब्देन प्रकृतसप्तान्नेषु कस्य परामर्श इति न ज्ञायते प्रकृतान्नसप्तकपरामर्शइति च प्रतीयते । इत्यतस्तदनूद्य व्याचष्टे । तस्मिन्निति । यच्च प्राणिति मनुष्यपश्वादि यच्च न प्राणिति वृक्षादिस्थावरमिदं सर्वं पयसि प्रतिष्ठितम् । उदकेनेव पयसाप्यङ्कुराभिवृद्धेर्दर्शनात् । पयोहोमेनादृष्टद्वारा स्थावराद्युत्पत्तेर्वा । न केवलं जीवनहेतुत्वेनैव पयसि प्राणिजातं प्रतिष्ठितं किन्तु गोपयसो मोक्षादि हेतुत्वेनापिति भावेनाह । तद्यदिदमाहुरिति । सम्वत्सरं पयसा जुह्वति होमं कुर्वन् पुरुषो यदि भगवदपरोक्षज्ञानी तर्हि पुनर्मृत्युं मरणं संसारमिति यावत् । अपजयति मुक्तोभवति । यदिदमाहुर्ज्ञानिनस्तत्तथैव सम्वत्सरहोमेनैव मुक्त्यादिकमिति न विद्यात् । कुतः यत एवं विद्वान् सप्तान्नसृष्टितत्वज्ञानी यदहः पयसा जुहोति तदहरेव पुनर्मृत्युमपजयति । एकहोमेनैव मुच्यत इति यावत् । कथमेकहोममात्रेणैवं विदुषो मुक्तिरित्यत आह । सर्वं हीति यस्मात सप्तान्नवित् पयोहोमकरणेनैव देवेभ्यः सर्वमन्नाद्यं प्रयच्छति । गोपयसः प्रशस्तत्वेन सर्वान्नादिस्थानीयत्वा दिति भावः । यद्वा एवं विद्वान् हि = यस्माद्यदहः पयसा जुहोति तदङ्गभूतं सर्वमन्नाद्यं च देवेभ्यः प्रयच्छति तदहरेव पुनर्मृत्युमपजयति तस्मान्न तथा विद्यादित्यन्वयः ॥

तस्मान्तानि न चीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अचितिः सहीदमन्नं पुनः पुनर्जनयते । यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः सहीदमन्नं धियाधिया जनयते

**कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्। स देवानपि गच्छति स ऊर्जमुपजीवतीति प्रशंसा ॥ २ ॥**

नन्वद्यमानानामेतेषामन्नानां क्षये कथं पुनर्मनुष्यादीनामवस्थानमित्यतोऽक्षयत्वोपपादकमन्त्रमनूद्य व्याचष्टे । कस्मादिति । पुरुषो वा परमात्मैवाऽक्षितिरन्नाक्षयहेतुः । कथं पुरुषोऽन्नाक्षयहेतुरित्यत आह । सहीति-हि यस्मात् पुरुषइदं सप्तविधमन्नं पुनः पुनर्जनयते तस्मादक्षितिरिति सम्बन्धः । योवै=तामक्षितिमिति मन्त्रमनूद्य एतामक्षितिमित्यस्यार्थमाह । यो वा इति । पुरुषो वा अक्षितिरन्नाक्षयहेतुः कुत इत्यतः प्रागुक्तमेव हेतुं कारणप्रदर्शनपूर्वकमाह । सहीति । धियाधीयेति पुनरुक्तिः पुनः पुनरन्नसर्जनापेक्षया धिया स्वेच्छया । प्राणिनां कर्मभिः सहितः सः । अन्नं जनयति । यत् । यदि एतत् सप्तविधमन्नं पुरुषो न कुर्यात्। तर्हि सर्वदाद्यमानत्वात्। ह निश्चयेन क्षीयत इत्यर्थः । सोऽन्नमिति प्रतीकेनेति मन्त्रमनूद्य प्रतीकेन देहेनेति प्रतीतिन्निरासाय तद्व्याचष्टे। स इति। प्रतीकं मुखं ततश्च प्रतीकेनेत्येतत मुखेनेत्यर्थमाहेत्यर्थः। स देवानपीत्यादिमन्त्रद्वयमनूद्याक्षरार्थस्यातिरोहितत्वात्तात्पर्यमाह । स देवानपीति । प्रशंसा भगवतः सप्तान्नसृष्टिकर्तृत्वज्ञानिन इति शेषः। स सप्तान्नोपासको देवपदयोग्यत्वात् देवात् देवत्वं गच्छति प्राप्नोति । स उपासक ऊर्जमपि देवान्नमपि उपजीवति॥ २ ॥

**त्रीण्यात्मनेऽकुरुतेति मनोवाचं प्राणं तान्यात्मनेऽकुरुत। अन्यत्रमना अभूवं नादर्शमन्यत्र मनाअभूवं नाश्रौषमिति। मनसा ह्येव पश्यति मनसा शृणोति । कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ।**

त्रीण्यात्मन इतिमन्त्रमनुद्य कानि तानि त्रीणीत्याशङ्कापरिहाराय-

व्याचष्टे । त्रीणीति । एवं त्रीणीति पदार्थमुक्त्वा वाक्यार्थमाह । तानीति । तानि मनोवाक्प्राणरूपाणि त्रीण्यन्नानि जीववर्गायाकुरुतेत्यर्थः । साधारणाद्यन्नानामिव मनोवाक्प्राणानां भगवद्विषयकाणां भगवत्तुष्टिहेतुत्वेन भगवदन्नत्वमपि द्रष्टव्यम् । ननु चक्षुरादिषु ज्ञानकरणेषु सत्सु मन एव कस्मादात्मान्नमकुरुतेत्यतस्तस्य प्राधान्यादितिभावेन तत्प्राधान्यं व्यतिरेकेण समर्थयते--अन्यत्रेति । पुरुषोऽवस्थितं गजं किं त्वं दृष्टवानसीति केनचित्पृष्ट आह, अन्यत्र विषयान्तरे गतं मनो यस्य सोऽहमन्यत्रमना अभूवमतो-नादर्शम् । तथा इदं मदीयं वचः किं श्रुतवानसीति पृष्ट आह—अन्यत्रमना-अभूवमतो नाश्रौषमिति । एवमितरेन्द्रियेष्वपि मनोव्यतिरेकेण ज्ञानव्यतिरेको द्रष्टव्यः । मनसि व्याकुले चक्षुरादिभिर्ज्ञानं नोत्पद्यत-इत्येतदुपपादयति—मनसा हीति । हि यस्मान्मनस्यव्याकुल एव चक्षुषा पश्यति श्रोत्रेण शृणोतीत्यर्थः। ननु विष्णुभक्तिकामतत्पूजाकरणसंकल्पादीनामपि भगवत्तुष्टिहेतुत्वेन तदन्नत्वसम्भवात् कथं मनोवाक् प्राणानामेव भगवदन्नत्वमुक्तमित्यतो मनोग्रहणेनैव कामसङ्कल्पादयोऽपि गृहीता इतिभावेन कामसंकल्पादीनां मनोवृत्तित्वमाह—काम इति ।

एकविषयेच्छाकामः । अनेकगोचरेच्छा विचिकित्सा । एतत्सर्वं मन एव । मन उपादानकमेव । विषयेन्द्रियसंयोगादेव ज्ञानोत्पत्तौ किं मनसेत्यतो विषयेन्द्रियसंयोगस्य प्रयोजकत्वमाह—तस्मादिति ।

**तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्चनशब्दो वागेव सैषा ह्यन्तमायत्ता एषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एव एतन्मयो वा अयमात्मा वाङ्मयोमनोमयः प्राणमयः ॥ ३ ॥**

वाह्येन्द्रियजन्यज्ञानस्य मनोधीनत्वात् पृष्ठत उपस्पृष्टोऽपि मनसा विजानाति । मनस्यव्याकुल एवानेनाहं स्पृष्ट इति त्वचा विजानातीत्यर्थः । स्पृष्टोऽपीत्यपिपदेन विषयेन्द्रियसन्निकर्षमात्रस्याप्रयोजक

त्वमभिप्रैति । ननु ध्वनिवर्णात्मकविष्णुनामरूपशब्दस्यैव भगवत्तुष्टि-हेतुत्वाद्वाचः कथं तुष्टिहेतुत्वेनान्नत्वमित्यत आह । यः कश्चेति । कश्चनशब्दोध्वनिवर्णात्मकोऽसौ वागेव तथा च वाचोऽन्नत्वोक्तो सर्व-स्यापि शब्दस्यान्नत्वमुक्तमेवेति भावः । यत्किञ्चिच्छब्दोच्चारणहेतुभूत-वाचः कथं विष्णवन्नत्वमित्यत आह । सैषाऽऽतीति । हि यस्मात् सैषा सर्वशब्दोच्चारणहेतुभूता वाक् । अन्तं सर्वान्तस्थं विष्णुमायत्ता-विषयीकुर्वन्ती । सर्वेषामपि ध्वनिवर्णात्मकशब्दानां विष्णुनामत्वात् अतो वाक् विष्ण्वन्नमित्यर्थः । कथं वाक् विष्णुमायत्तेत्यतो वेदद्रष्टार आहुः। एषा हि न इति । नोऽस्माकं एषा वाक् विष्णु-मायत्ता हि प्रसिद्धमित्यर्थः ॥ ननु विष्णुपूजादिसत्कर्महेतुप्राण-स्यैव तदन्यकर्मसंत्यागादिहेत्वपानादेरपि तत्तुष्टिहेतुत्वेन तदन्नत्वात् कथं प्राणस्यैव तदन्नत्वोक्तिरित्यत आह--प्राण इति । नोऽस्माकं विष्णुकर्महेतुभूतः प्राणः, तदन्यकर्मसंत्यागहेतुरापानः, तद्विरोधिनिरा-सहेतुर्व्यानः, तद्योगहेतुरुदानः । तद्विषयकमनोवागादीन्द्रियनियमन-हेतुः समानः । इत्येतत्सर्वं प्राण एव प्राण भेद एवेत्यर्थः । एतन्मयो वै इति । वैशब्दः प्रसिद्धौ । एतन्मयइत्यस्यार्थमाह । वाङ्मय इति । प्राचुर्य्ये मयट् ॥ ३ ॥

वाङ्मनः प्राणान्सर्वात्मकत्वेन स्तौति ।

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः । प्राणोऽसौ लोकः ॥ ४ ॥**

एतच्छब्दार्थं विवृणोति । वागेवायमिति । वागभिमानिनी-सरस्वत्ययं लोकः पृथिवीलोकाभिमानिनी । मनो मनोऽभिमानीब्रह्मान्त-रिक्षलोकाभिमानी । प्राणः—प्राणाभिमानी वायुरसौ लोकः स्वर्ग-लोकाभिमानीत्यर्थः ॥ ४ ॥

**त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥**

देवाः पितरो मनुष्या एत एव वागेव देवाः मनः पितरः प्राणो मनुष्याः ॥ ६ ॥

त्रयो वेदा एत एवेत्यारभ्य प्राण एनं तद्भूत्वावतीत्यन्तमेतस्य ग्रन्थस्य व्याख्यानं द्रष्टव्यम् ॥५।६॥

पिता माता प्रजैत एव मन एव पिता वाङ् माता प्राणः प्रजा ॥ ७ ॥

प्रजा पुत्र इत्यर्थः ॥ ७ ॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्च विज्ञातं वाचस्तद्रूपम् । वाग्घिविज्ञाता । वागेवैनं तद्भूत्वाऽवति ॥८॥

यत्किञ्च विज्ञातं विज्ञानविषयं तत्सर्वं वाचोरूपम् । कुतः हि यस्मात् वाक् विज्ञाता वाचा विज्ञायमानाः सर्वेऽपि वागेव तदधीन-प्रकाशत्वात् सैवेत्यर्थः। वाच उपकारकत्वं दर्शयति वागेवैनमिति । तद्वाचा विज्ञायमानं पदार्थजातमेनं विज्ञातारं यदवति रक्षत्युपकरो-तीति यावत्। तद्वागेव भूत्वाऽवति । वाचा विज्ञायमानेन पदार्थेन य उपकारः स सर्वोऽपि वागाद्यधीन एव तस्माद्वाच उपकारकत्वं सिद्ध-मिति भावः एवमुत्तरत्रापि द्रष्टव्यम् ॥ ८ ॥

यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥ ९ ॥

यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणोह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥ १० ॥

तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक् तावत्येव पृथिवी यावानयमग्निः ॥ ११ ॥

विजिज्ञास्यं जिज्ञासाविषयं मनसस्तद्रूपम् । एनं विज्ञातारम् । तद्भूत्वा मनोभूत्वाऽवति रक्षति ॥ ९ ॥

अविज्ञातं विज्ञानाविषयं प्राणस्येन्द्रियागोचरत्वादितिभावः। पूर्वसुकृतवशादचिन्तितं यदुपकरोति तद्भूत्वा प्राण उपकरोतीत्यर्थः ॥१०॥ एवं प्रशस्य त्रयाणामधिष्ठातॄंश्च दर्शयति तस्यैववाच इत्यादिना तस्य वागिन्द्रियस्य पृथिवी शरीरमायतनं जिह्वागोलस्थं पार्थिवांशमाश्रित्य वागिन्द्रियं तिष्ठतीत्यर्थः। ज्योतीरूपमयमग्निः। ज्योतिर्ममयाधिष्ठातृदेवता-स्वरूपमयमग्निरित्यर्थः। तद्यावत्येवेति यत्र यत्र वागिन्द्रियं तत्र तत्र तदधिष्ठानतया पृथिव्यस्ति अधिष्ठातृतयाऽप्यग्निरस्तीत्यर्थः ॥११॥

**अथैतस्य मनसो द्यौः शरीरम् । ज्योतीरूपमसावादित्यस्तावदेवमनस्तावती द्यौस्तावन्मसावादित्यः। तौ मिथुनँ समैताम्। ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नः। द्वितीयो वै सपत्नो न हास्य सपत्नो भवति य एवं वेद ॥१२॥**

एतस्य मनसः द्यौ द्युराकाशः शरीरं हृदयं च्छिद्ररूपाकाशमाकाशायतनमित्यर्थः। ज्योतीरूपमित्यस्य पूर्ववद्व्याख्या। तौ मिथुनमिति। तावग्न्यादित्यौ मिथुनं समैतां मिथुनभावमागच्छताम्। ततो मिथुनीभावानन्तरं प्राणोवायुरजायत तस्य प्राणस्य महिमानमाह—स इति। स वायुरिन्द्रः परमैश्वर्यशाली इन्द्रियान्तरापेक्षया प्राणस्येश्वरत्वादिति भावः। स एष वायुरसपत्नोऽशत्रुः। प्राणस्यासपत्नत्वं चक्षुरादिषु स्वसदृशास्वप्रतिस्पर्धिरहितत्वमिति भावः। वायोरसपत्नत्ववेत्तुफलताह—कस्येति। योऽधिकारी एवं वायुरसपत्न इति वेदास्य सपत्नः शत्रुः कोऽपि न भवतीत्यर्थः ॥१२॥

**अथैतस्य प्राणस्यापः शरीरम् । ज्योतीरुपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्यआपस्तावानसौ चन्द्रः त एते सर्व एव समाः सर्वेऽनन्ताः। स यो हैतानन्तवत उपास्तेऽन्तवन्तँ स लोकं जयत्यथ योहैताननन्तानुपास्तेऽनन्तँ स लोकं जयति ॥ १३ ॥**

पानीयं प्राणिनां प्राणा विश्वमेव चैतन्मयमित्यायुर्वेदविदः । अतः प्राणस्यापएवायतनम् । ज्योतीरूपमिति पूर्ववत् । त एते वाङ्मनः प्राणाः सर्व एव समाः । हस्तिमशकादीनां सर्वेषां समानाः सर्वेऽनन्ताः । आनन्त्यञ्चाकल्पस्थायित्वम् । अनन्तत्वेन प्राणोपासकस्यैव फलप्राप्तिर्नत्वितरथेत्याह । स य इति । स यः कश्चिदेतान् प्राणान् । अन्तवन्त इतरवदल्पगुणानुपास्ते सोऽन्तवत्तं नाशवन्तं लोकं जयति । तमःप्राप्तिर्भवतीत्यर्थः । अथ योऽधिकारी एतान् । अनन्तानितरापेक्षयाबहुगुणानुपास्ते सोनन्तं नाशरहितं लोकं जयति प्राप्नोतीत्यर्थः ॥१३॥

**स एष सम्वत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला स रात्रिभिरेव चाऽऽपूर्यते अपक्षीयते ।**

प्राणाधिदेवताभूतस्य चन्द्रस्य महिमानमाह । स एष इति । स एष चन्द्रमाः सम्वत्सरसंज्ञः तस्य सर्वर्त्तुप्रवर्त्तकत्वेन सम्वत्सरसंज्ञकत्वं द्रष्टव्यम् । स एष चन्द्रमाः प्रजापतिः प्रजानां पालनात् षोडशकलः । तस्य चन्द्रमसः रात्रय एव पञ्चदशकलाः । पञ्चदशकलाः केन निमित्तेन रात्रिनामिकास्तत्राह । स इति । स चन्द्रमाः रात्रिभिः शुक्लपक्षप्रतिपदमारभ्य पौर्णमासीपर्य्यन्तं पञ्चदशरात्रिभिरेव पञ्चदशकलाभिरापूर्यते च कृष्णपक्षप्रतिपदमारभ्यामावस्यापर्यन्तं पञ्चदशरात्रिभिरपक्षीयते च । शुक्लपक्षकृष्णपक्षयोरेकैकस्यां रात्रौ कलानां क्षरणात् क्षयाच्च कलाः रात्रिनामिका इत्यर्थः । षोडश्याः कलाया नाशाभावाद् ध्रुवत्वमितिद्रष्टव्यम् ।

**सोऽमावास्या ᳫ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते । तस्मादेता ᳫ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥**

स चन्द्रमा अमावस्यायां रात्रौ एतया ध्रुवया षोडश्याकलाय सर्वमिदं प्राणभृत । अनुविश्य ततः प्रातः- प्रति यदि जायते द्वितीयकला

युक्तो भवति । तस्मादमावास्यां रात्रौ चन्द्ररूपदेवताया सर्वप्राणभृत्सु स्थितत्वात् । एतां रात्रिम् । एतस्यां रात्रौ प्राणभृतो जीवतः प्राणं न विच्छिन्द्यात । महापापहेतुप्राणिवधो न कर्त्तव्य इति किमु वक्तव्यम् । कृकलासस्यापि अल्पदोषहेतुवधस्यापि प्राणं न विच्छिन्द्यात् ॥ तस्यां कृकलासवधोऽपि महादोषहेतुरित्यर्थः । हिंसानिषेधस्य प्रयोजनमाह— एतस्या इति । एतस्याः सर्वप्राणभृत्स्थायाश्चन्द्रदेवताया अपचित्या एव पूजार्थमेवेत्यर्थः ॥ १४ ॥

**यो वै सम्वत्सरः प्रजापतिःषोडशकलोऽयमेव स योऽयमेवंवित्पुरुषः तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला सवितेनैवाऽऽचापूर्यतेऽपक्षीयते । तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तम् ॥**

षोडशकलचन्द्रविद्याफलमाह । य इति । यथा चन्द्रः षोडशकल एवं तद्वेत्ता पुरुषोऽपि षोडशकलो भवतीत्यर्थः । पुरुषस्य षोडशकलत्वमेवोपपादयति । तस्येति । उपचयापचयशालिगवादिवित्तं पञ्चदशकलास्थानीयं शरीरन्तु ध्रुवकलास्थानीयम् । आत्माशरीरं नभ्यं नाभिमर्हति । नाभिनभञ्चेति नमादेशः । नाभिस्थानीयमितियावत् । वित्तन्तु प्रधिः परिवारभूतमरनेमिस्थानीयमिति ।

**तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेद्यज्जीवति प्रधिनाऽगादित्येवाऽऽहुः ॥ ५ ॥**

सर्वज्यानिम् । ज्यावयोहानौ सर्वनाशो यथा भवति तथेति यावत् । जीयते । श्यनिग्रहिज्येतिसम्प्रसारणम् । नश्यतीत्यर्थः । तथाऽप्यात्मना शरीरेण चेज्जीवति प्रधिना प्रधिस्थानीयेन = वित्तेनागात्संगतवानित्येवाहुः ॥ १५ ॥

**अथ त्रयो वाव लोका मनुष्यलोकः । पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः । देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशꣳसन्ति ॥१६॥**

सप्तान्नविद्यावेत्तुः फलं वक्तुं तदुपयुक्तमाह । अथेति के ते त्रयोलोका इत्यत आह । मनुष्यलोक इति तेषां साधनमाह । सोऽयमिति । पुत्रेणैव औरसेन शिष्येण च नान्येन कर्मणेति । यद्यपि पुनः पुनः कर्मकरणलक्षणो मनुष्यलोकजयः । स्वेनैव कर्मणा जन्मान्तरं प्राप्य सम्पादयितुं शक्यः तथापि स्वस्य जन्मान्तर विनोक्तमनुष्यलोकजयोऽस्तु पुत्रेणैव पुत्रपौत्रादिकृतफलभाक्त्वात्स्वस्यैति भावः । केवलकर्मणा ज्योतिष्टोमादिना पितृलोकोऽन्तरिक्षलोकः । विद्यया काम्यविद्याविशेषेण देवलोकप्राप्तिरित्यर्थः । देवलोकः भगवल्लोकः । यतो विद्यया एव श्रेष्ठलोकसाधनत्वमतो विद्यां स्तुवन्तीत्यर्थः ॥ १६ ॥

**अथातः सम्प्रत्ति स यदा प्रैष्यन् मन्यन्ते । अथ पुत्रमाह त्वं ब्रह्मत्वं यस्त्वं लोक इति सः पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकता ।**

पुत्रेण मनुष्यलोकजय इत्युक्तं स किं यादृशतादृशपुत्रेण भवतीत्यतः सुशिक्षितेनेति भावेनाह । अथेत्यादिना । पुत्रादिसाधनं साध्यविशेषसम्बन्धकथनानन्तरं । अतः फलसद्भावात् । सम्प्रतिः सम्प्रदानमुपदेशः । पित्रा पुत्रं प्रति क्रियमाण उपदेशप्रकारो निरूप्यत इत्यर्थः । यदा पिता प्रैष्यत् । अरिष्टादिदर्शनेन स्वयं मरिष्यन् मन्यते अथ तदा पुत्रं त्वं ब्रह्मयज्ञः त्वं लोक इत्याह । स एवमुक्तः पुत्रोहं ब्रह्माहं यज्ञोहं लोक इति प्रतिवचनमाह । ब्रह्मादिपदानां तिरोहितार्थत्वात् श्रुतिस्तद्व्याकरोति । यद्वा इति । यत्किञ्च वै प्रसिद्धमनूक्तम् । अनुवचनं वेदादि त्रयीश्रुतिर्नित्यवाक्भेदोऽनुवचनं तथेत्यभिधानात् । तस्य सर्वं ब्रह्मेत्येकता । ब्रह्मशब्देन ग्रहणमित्यर्थः ये केच वै द्रव्ययज्ञास्तपोयज्ञा इत्यादिप्रमाणसिद्धयज्ञास्तेषां सर्वेषां यज्ञ-

इत्येकता यज्ञशब्देन ग्रहणमित्यर्थः । ये केचन वै प्रसिद्धालोकाः स्वर्गा दयस्तेषां सर्वेषां लोक इत्येकता लोकशब्देन ग्रहणमित्यर्थः । तथाच त्वं ब्रह्म वेदाध्यनकर्त्ता भव तदनन्तरं त्वं यज्ञो यज्ञकर्ता भव तदनन्तरं त्वं लोको लोकसम्पादको भवेति वाक्यार्थः ॥

**एतावद्वा इदं सर्वमेतस्मा सर्वं सन्नयमितोऽभुनजदिति । तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः । स यदैवं विदस्माल्लोकात्प्रैत्य-थैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रोनाम सपुत्रैणैवास्मिल्लोके प्रतिष्ठति । अथैनमेते देवाः प्राणा अमृता अविशन्ति ॥ १७ ॥**

अन्यदपि कर्त्तव्यं पित्रा कस्मान्नोपदिष्टमित्यतः श्रुतिः स्वयमाह । एतावद्वेति इदं सर्वं कर्त्तव्यतयोपदेष्टव्यमेतावदेव । वेदादिकमधीत्य तदुक्तप्रकारेण यज्ञादिकर्म कृत्वा मोक्षादिलोकमापादयेदेत्येतावदेवेत्यर्थः । पिता किमर्थमेवं पुत्रमनुशास्तीत्यत आह । एतस्मादिति । सन्नुत्तमोयं मनुष्यत्वमंशेन प्राप्तः सप्तान्नोपासको देवः । इतः प्राप्तः पुत्रमिति शेषः । पुत्रोस्थित इत्यर्थः । एतस्मादनुशिष्टात् पुत्रात्सर्वं तत्कृतवेदाध्ययनफलमभुनजत् अभुङ्क्त इति यस्मात्तस्मादनुशिष्टं पुत्रं लोक्यं लोकसाधनमाहुर्विद्वांसः । यस्मात् लोक्यमाहुस्तस्मादेनं पुत्रं त्वं ब्रह्मेत्यनुशास्ति पिता । ननु मृतस्य पुत्रेऽवस्थानाभावात् कथमेतदित्यत—आह । स इति । एवं वित् सप्राप्तान्नोपासकः । स देवो मनुष्यत्वप्राप्तः यदास्माल्लोकात्प्रैति मृतो भवति । अथ तदा एभिरेव प्राणैः स्ववाङ्मनोभिः सह स्वांशरूपसामर्थ्याच्च पुत्रमाविशति । सप्तान्नोपासकस्य पुत्रात्फलान्तरमाह । स इति । अनेन पित्रा सप्तान्नविदा यदि कदाचिदक्ष्णया च्छिद्रेण पापेन किञ्चित् कर्मकृतं भवति तदा सपुत्रस्तस्मात्कर्मण एनं स्वपितरं मुञ्चति मोचयति । पापकर्मफलानुभवं परिहरतीत्यर्थः । तस्मादेव पुनः छिद्रकर्मणः-त्राणाद्रक्षणात्पुत्रोनाम ।

एवं येन पुत्रतः फलं प्राप्तं तेनैव मनुष्यलोको जित इत्याह। स इति। स पितैवं विधेन पुत्रेण मृतोऽपि सन्नमृतोऽस्मिन्नेवलोके प्रतितिष्ठति। एनं सप्तान्नविदं परलोकगतं पुरुषं प्राणाः प्राणशब्दवाच्या देवा मनआदावाविशन्तीत्यर्थः ॥ १७ ॥

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै देवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥**

उक्तार्थं विशदयति। पृथिव्याश्चाग्निश्च दैवी वाक् परलोकगतं पुरुषमाविशति। एतस्यै वाचः पृथिवीशरीरं ज्योतरूपमसौ चन्द्र इति प्रागुक्तेर्वाचः पृथिव्यायतनत्वादग्न्यधिष्ठितत्वाच्च ताभ्यां हेतुभ्यां दैवी वागाविशतीत्यर्थः। का सा दैवी वागित्यत आह। सेति। यया वाग्देव्या प्रेरितः यद्यद्वदति तत्तद्भवत्येव शापानुग्रहसमर्था वाग्दैवीत्यर्थः १८

**दिवश्चैनामादित्याच्च दैवं मन आविशति तद्वैदैवं मनो येनाऽऽनन्द्येव भवत्यथो न शोचति ॥ १९ ॥**

एवं दिवश्चैनमित्यादिकं योज्यम्। अमोघसङ्कल्पमानन्दैककारणं मनो दैवं मन इत्यर्थः ॥ १९ ॥

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति।**

यो विद्वान् सञ्चरंश्चासंचरंश्च न व्यथते सर्वसामर्थ्ययुक्तत्वात् अथो तस्मादेव न रिष्यति न म्रियत इत्यर्थः। संचरन् व्यथते रिष्यति च मनुष्यो सञ्चरन् व्यथते रिष्यति चाश्व इति सञ्चरश्चासंचरश्चेत्युक्तम्। एवं जीवोपकरणानां तेषां परलोके सामर्थ्यातिशयमभिधायैवं विदः फलान्तरमाह। स य इति।

**स एवं वित्सर्वेषां भूतानामात्मा भवति यथैषा दैवतैवम्।**

य एवंवित् सप्तान्नोपासको देवः स सर्वेषां भूतानामात्मा व्यापको भवति। तत्रदृष्टान्तमाह। यथेति। यथा एषा प्राणरूपा देवता सर्वेषाभूतानामात्मैवमित्यर्थः ॥

स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति । यदु किञ्चेमाः प्रजाः शोचन्त्यमैवाऽऽसां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ॥ २० ॥

यथा वागादिदेवतां सर्वेऽपि पूजयन्ति एवमेवंविदमपि पूजयन्तीर्थः ॥ ननु सप्तान्नोपासकस्य सर्वभूतव्यापकत्वे तत्तद्देहस्थित्या भूतशोके शोकः स्यादित्यत आह–यदुकिञ्चेति । इमाः प्रजाः यदुकिञ्च यत्किञ्चदपि शोचति तत्शोचनमासां प्रजानामेव भवति । तत्स्थसप्तान्नोपासकानां कुतः यतः प्राणिकृतपुण्यमेवामुं सर्वप्राणिस्थं सप्तान्नोपासकं प्रति गच्छति न पापं तदपि कुतः । यतो नियामकतया प्राणिदेहस्थान् देवान् पापं न गच्छति ह वा इति प्रमाणप्रसिद्धिकथनम् ॥२०॥

अथातो व्रतमीमांसा प्रजापतिर्हि कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवान्यान्यपि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत् । तान्याप्त्वा मृत्युरवारुन्ध । तस्माच्छ्राम्यत्येव वाक् श्राम्यति श्रोत्रम् ।

अथाधिकारिस्वरूपनिरूपणानन्तरम् । अत उक्तफलसद्भावात व्रतार्थं मीमांसा । प्राणविषयकमुपासनमनुष्ठेयमित्यतस्तत्स्वरूपविचारः क्रियत इत्यर्थः तत्राख्यायिकामाह प्रजापतिरिति । प्रजापतिः कर्माणि कर्मज्ञानेन्द्रियाणि सृष्टवान् । तानि सृष्टानि कर्मज्ञानेन्द्रियाणि अन्योन्येनास्पर्धन्त अहमेवान्यापेक्षां विना वदिष्यामि नान्यः कश्चिन्मत्तो वक्तुं समर्थ इत्यभिमानं दध्रे वाक् धृतवती । चक्षु दध्रे एवमन्यान्यपीन्द्रियाणि यथास्वविषयमभिमानं धृतवन्तीत्यर्थः । मृत्युः श्रमो भूत्वा श्रमकरो भूत्वोपयेमे समीपं प्राप्तः । श्रमरूपो मृत्युस्तानीन्द्रियाणि

प्राप्तवान् । अवरोधं कृतवान् कार्यासमर्थमकरोत् । तदेवोपपादयति-तस्मादिति । श्राम्यति श्रमं प्राप्नोतीत्यर्थः ।

**अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः तानि ज्ञातुं दध्रिरे अयं वै नःश्रेष्ठो यःसंचरथंश्चासंचरंश्च न व्यथते ऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणा इति । तेन ह वव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद य उहैवं विदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियन्त इत्यध्यात्मम् ॥ २१ ॥**

अथेतरदेवानां श्रमप्रत्यनन्तरम् इदमेव नाप्नोत्, कं योऽयं मध्यमः प्राणः तानि श्रान्तानीन्द्रियाणि अस्माकं कः श्रेष्ठ इति ज्ञातुं प्रवृत्तानि । अयं प्राणः नोऽस्माकं मध्ये श्रेष्ठ इतिज्ञातवन्तश्च । कुतश्श्रैष्ठ्यमित्यत उक्तम् य-इति । प्राणोऽत्र सञ्चाररूपः । सञ्चारेऽपि न व्यथते । अथोशब्दोऽप्यर्थः । न रिष्यति न हिंस्यतेऽपि तस्मादस्य मुख्यप्राणस्य सर्वे वयं रूपमसाम तदधीनप्रवृत्तयो भवामेतिनिश्चित्यैतस्यमुख्यप्राणस्येतरे प्राणास्तदधीनप्रवृत्तयोऽभवन् ॥ इदञ्च वाक्यं प्राणपादे त इन्द्रियाणीत्यधिकरणे ब्र०सू० २।४।१७ चिन्तितम् । तस्मादिति । यस्मात्कारणद्वागाद्याः प्राणस्यैव रूपमभवन्नतः प्राणनाम्नैव प्राण इत्येवोच्यन्ते । वेत्तुः फलमाह तेनेति । योऽधिकारी एवं प्राणशब्देनेन्द्रियाण्याख्यायन्त इति वेद जानाति स यस्मिन् कुले भवति तत्कुलं तेन तद्वाक्शब्देनाख्यायते । अमुष्येदं कुलमित्याचक्षते । किञ्च य उयःकश्चिदेवंविदा एवंविधप्राणविदा स्पर्धते प्रतिपक्षं करोति सोऽनुशिष्य दीर्घकालं शोकं प्राप्यैवान्ततो म्रियते ह न सहसा ऽनुपद्रुतो म्रियते उपसंहरति इत्यध्यात्ममिति ॥२१॥

**अथाधिदैवतम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतम् सयथैषां प्राणानां मध्यमः प्राणएवमेतासां देवतानां**

**वायुः म्लोचन्तीहान्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः ॥ २२ ॥**

अथाध्यात्मं प्राणस्य श्रैष्ठ्यकथनानन्तरम् अधिदैवतं प्राणस्य श्रैष्ठ्यमुच्यते । ज्वलिष्यामीति पूर्ववत् । एवमन्या देवताः यथा दैवतं तत्तद्देवतायोग्यं कार्यं करिष्याम इति दध्रिरे । अग्न्यादयः श्रमरूपेण प्रजापतिना प्राप्ताः मृत्युनाऽवरुद्धाः । प्राणस्तु नेत्युक्तमत्राप्यतिदिशति-स यथेति । स वक्ष्यमाणो दृष्टान्तो यथा-एषां वागादीनां प्राणानां मध्ये मध्यमः प्राणो यथाश्रमरूपेण प्रजापतिना न प्राप्तः । अत एव न मृत्युनाऽवरुद्धोऽतएव श्रेष्ठश्च । तथैतासां देवतानामग्न्यादीनां मध्ये वायुरित्यर्थः । अन्या देवता मृत्युनावरुद्धत्वादेव म्लोचन्ति म्लाना भवन्ति । न वायुर्म्लोचति, कुतः सैषाऽनस्तमिता देवता । यद्वायुर्यो-वायुः सैषा देवतानस्तमिता यद्यस्मादित्यर्थः ॥२२॥

**अथैष श्लोको भवति । यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेतीति तं देवाश्चक्रिरे धर्मꣳ स एवाद्य स उ श्व इति । यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति ।**

देवानां वाय्वधीनत्वे मन्त्रोऽप्यस्तीत्याह-अथेति । तमुदाहरति-यत इति । सूर्यशब्दो देवतान्तरोपलक्षकः,मन्त्राभिप्रेतं ब्राह्मणं स्वयमाह-प्राणाद्वा इति । अत्र प्राणो वायुः वायुप्रेरणाधीनत्वादादित्याद्युदयानामितिभावः । मन्त्रशेषमुदाहरति-तमिति । देवास्तं प्राणमुद्दिश्य धर्मं चक्रिरे,प्राणोपासनमेवश्रेयःसाधनमिति निश्चितवन्तः। स एव धर्मोऽद्यापि वर्त्तते,स एव श्वोऽपि वर्तिष्यत इत्यर्थः । मन्त्रं व्याचष्टे-यद्वा इति । वैशब्दोऽवधारणे । यदेवधर्मसाधनव्रतम् । अमुर्हि अमुष्मिन्काले प्राणश्रेष्ठत्वनिर्णयकाले अध्रियन्त धृतवन्तस्तदेव व्रतमेतेकुर्वन्ति, अपिशब्देन श्वः करिष्यन्तीत्यस्य समुच्चयः ।

तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च । नोन्मा पाप्मा मृत्युराप्नुवदिति यद्युचरेत् समापिपयिषेत् । तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥२३॥

इति बृहदारण्यकोपनिषदि प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

यदर्थं प्राणस्योत्तमत्वं प्रसाधितं तदाह—तस्मादिति । प्राणस्य सर्वदेवतोत्तमत्वात् मा मां पाप्मा मृत्युर्नैत् नैवाप्नुवदिति मन्वानोऽधिकारी एकमेव प्राणमात्रविषयकमेव व्रतं चरेत् । किं तदित्यत उक्तम्—प्राण्यादिति । प्राण्यात् श्वासं कुर्यात् । अपान्यात् उच्छ्वासं कुर्यात् आरब्धं प्राणव्रतं मध्ये न विसर्जनीयमित्याह—यदीति । यद्युचरेत् प्राणव्रतं प्रारभेत, तर्हि समापिपयिषेत् । समापयेदित्यर्थः । तस्य फलमाह-तेनेति । तेन प्राणव्रतसमापनेन एतस्यै देवतायै एतस्याः प्राणदेवतायाः सायुज्यं सालोक्यञ्च प्राप्नोतीत्यर्थः ॥ २३ ॥

इति बृहदारण्यकोपनिषत्तत्त्वकाशिकायां टीकायां
पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

त्रयं वा इदं नामरूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थम् । अतो हि सर्वाणि नामान्युत्तिष्ठन्ति एतदेषां साम एतद्धि सर्वैर्नामभिःसमम् । एतदेषां ब्रह्म एतद्धि सर्वाणि नामानि बिभर्त्ति ॥ १ ॥

त्रयमिति । इदं जगत्त्रयं त्रिविधम् ॥ त्रैविध्यमेव दर्शयति-नामरूपं कर्मेति । तेषां नामरूपकर्मणां मध्ये वागिति शब्दनिर्दिष्टमेतद्वस्तूक्थमुत्पादनम् । तदेव प्रदर्शयति--अत इति--हि यस्मादतो वचो भारत्याः सर्वाणि नामानि उत्तिष्ठन्ति उत्पद्यन्ते वागिन्द्रियाधीन-

वात्सर्वेषां नाम्नामभिलप्यत्वेति भावः । वाचो महिमान्तरमाह—एत-दिति । वागित्येतदेषां नाम्नां साम कुतः, हि यस्मादेतद्वागित्येतन सर्वैर्नामभिः शब्दैः सहैव रूपाणि कर्माणि च माति जानाति च समम् । महिमान्तरमाह—एतदिति । वागित्येतत एषां नाम्नां ब्रह्म कुतः । हि यस्मात् वागित्येतत् सर्वाणि नामानि बिभर्त्ति ॥१॥

**अथो रूपाणां चक्षुरित्येतदेषामुक्थम् । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति एतदेषाꣳ सामैतद्धि सर्वै रूपैः समम् । एतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्त्ति ॥२॥**

रूपाणां सितासितप्रभृतीनां चक्षुरुक्थम् उत्पादनम् । अतो हि सर्वाणि रूपाणि उत्तिष्ठन्ति । रूपज्ञानस्य चक्षुरुत्थितत्वात रूपस्य चक्षुरुत्थितत्वव्यवहारः । एतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वरूपज्ञानजनकत्वाच्चक्षुषः कारणस्य कार्यसमत्वोक्तिरिति भावः ॥ चक्षुषो रूपभरणं ज्ञानद्वारा द्रष्टव्यम् ॥२॥

**अथकर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषा सामैतद्धि सर्वैःकर्मभिःसममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयꣳ सदेकमयमात्माऽऽत्मै कः सन्नेतत्त्रयं तदेतदमृतꣳ सत्येनच्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणच्छन्नः ॥३॥**

इति प्रथमाध्याये षष्ठं ब्राह्मणम् ॥६॥

---

इति बृहदारण्यकोपनिषदि प्रथमोऽध्यायः ॥१॥

---

कर्मणां पुण्यपापरूपाणाम् । आत्मा प्रत्यगात्मा, एतेषां कर्मणा-मात्मशब्दनिर्दिष्टः प्रत्यगात्मा उक्थम् । उत्पादनम् । शेषं पूर्ववत् ।

तदेतदिति । यथोक्तं नामरूपं कर्मत्रयं सदैकमयमात्मा । नामरूपकर्माण्यात्मनाऽगृहीतविवेकानि पामराणामेकमिव भवन्तीत्यर्थः । तदेतद् द्रढयति—आत्मैक इति । विवेकिनां त्रयमेतत् , अविवेकिनामेक आत्मेत्यर्थः । प्राणो जीवात्मा । सत्यं कर्मफलं ह्यवश्यंभावितया सत्य भवति । ततश्च कर्मफलभूताभ्यां नामरूपाभ्यां सम्पिण्डितोऽयमात्मा व्याधकुलसम्वर्धितराजकुमारवत्ताभ्यां प्रच्छन्नो भवति ॥ ३ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां

प्रथमोऽध्यायः ॥ १ ॥

---

तद्धेदं तर्ह्यव्याकृतमासीदिति प्रथमाध्यायेऽभिहितं तेन ब्रह्मणो- जगत्कारणत्वमुक्तं भवति तस्यैव प्रपञ्चनाय द्वितीयोऽध्याय आरभ्यते ।

**दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥**

बलाकस्यापत्यं बालाकिः । गर्गस्य गोत्रापत्यं गार्ग्यः । ब्राह्मणः अनूचानो वेदाध्ययनादिसम्पन्नः, अत एव दृप्तोऽहंकारी आस ह किल स गार्ग्यः । काश्यां भवं काश्यम् । अजातशत्रुं राजानमभिगम्य ते ब्रह्म ब्रवाणीत्युवाच ह, एवमुक्तः स अजातशत्रुः "त्वं ब्रह्म ब्रवीतुमसमर्थ, इति सूचयन्नुवाच । एतस्यां वाचि ब्रह्मोपदेशरूपायां यदि त्वं ब्रह्म ब्रूयास्तर्हि तुभ्यं वयं सहस्रं दद्मः,कुत एव मुपहास इत्यत आह । जनक इति । यदि त्वं ब्रह्मवक्तुंसमर्थस्तर्हि ब्रह्मशुश्रूषो जनाः समीपस्थं ब्राह्मणं त्वां परित्यज्य जनको जनक इति क्षत्रियं प्रतिधावनं न कुर्युः, कुर्वन्ति च ॥ अतोन तव सामर्थ्यमित्यर्थः ॥१॥

एवमुपहासितः स्वाभ्यस्ताः वह्वीः ब्रह्मविद्या आह—

**स होवाच गार्ग्यो य एवासावादित्ये पुरुषस्तमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठाः। अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा ऽहमेतमुपास इति।**

आदित्यमण्डलवर्त्तिनं पुरुषमहमुपासे। राजा इतोऽधिकमपि तत्र जानामीति भावेनाह—स होवाच इति। मा माम्। एतस्मिन् विषये मा संवदिष्ठाः सम्वादं माकार्षीः, ज्ञातज्ञापनं न कार्यमिति भावः। सर्वेषां भूतानां मूर्धा उत्तमः। राजते दीप्यत इति राजेत्युपास इत्युवाचेति सम्बन्धः। अतिष्ठा अतीत्य भूतानि तिष्ठतीत्यतिष्ठाः॥

**स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति॥ २॥**

स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति। यथागुणमुपासनमेव फलं भवति॥ तं यथायथोपासते तदेव भवातीति श्रुतेः॥ २॥

**स होवाच गार्ग्यो य एवासो चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् सम्वदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्हि सुतः प्रस्रुतो भवति नास्यान्नं क्षीयते॥३॥**

चन्द्रमण्डलवर्त्तिपुरुषस्तमेवाहं ब्रह्मोपासे त्वंचेत्थमुपास्स्वेत्युक्ते मामेत्यादिना प्रत्युवाच। वृहत्पाण्डुरं शुक्लं वासो यस्यासौ तथोक्तः शुक्लाम्बरधरमितिवचनात्। अस्योपासकस्य गृहे अहरहः प्रतिदिनं सोमस्सुतो भवति प्रसूतो भवतीति निरन्तरं प्रकृतिविकृत्यात्मकयागानुवृत्तिर्भवतीत्यर्थः॥ ३॥

**स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् सम्वदिष्ठास्तेज-**

स्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

प्रजापुत्र इत्यर्थः । शिष्टं पूर्ववत् ॥ ४ ॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्सम्वदिष्ठाः पूर्णमप्रवर्त्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥

हृद्याकाशे पूर्णमप्रवर्ति चेति विशेषणद्वयम् पूर्णत्वविशेषणफलमिदं पूर्यते, प्रजया पशुभिरप्रवर्त्तिरुद्वर्तनं यस्य स अप्रवृत्तिः । अस्य प्रजासन्ततिरस्माल्लोकान्नोद्वर्त्तते नोन्मूल्यत इत्यर्थः ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् सम्वदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

इन्द्रः परमेश्वरः । योऽयं पवत एष देवतानां ग्रह इति वायोर्देवलोकत्वप्रसिद्धेः । तत्सामान्याद्वैकुण्ठत्वम् । न परैर्जितपूर्वाऽपराजिता सेना मरुतां गणत्वप्रसिद्धेरुपासनाफलमपि । जिष्णुर्ह जयनशीलोऽपराजिष्णुर्नच परैर्जितस्वभावो भवति ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेव मुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजाभवति ॥७॥

विषासहिर्मर्षयिता परेषाम् । शिष्टं स्पष्टम् ॥ ७ ॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् सम्वदिष्ठाः प्रतिरूप इति

वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपं हैवैन-मुपगच्छति नाप्रतिरूपमथोप्रतिरूपोऽस्माज्जायते ॥ ८ ॥

प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यनुकूल इत्यर्थः। फलं प्रतिरूपं श्रुति-स्मृतिशासनानुरूपमेवैनमुपगच्छति प्राप्नोति न विपरीतमन्यच्चास्मात्त-थाविध एवोपजायते ॥ ८ ॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मो-पास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा रोचि-ष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वां-स्तानतिरोचते ॥ ९ ॥

रोचिष्णुः प्रकाशनशीलः। अथोऽन्यच्च फलं यैर्विद्वद्भिः संनिग-च्छति सङ्गतो भवति, तान्सर्वानतिरोचते अतिक्रम्य प्रकाशते ॥ ९ ॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमे-वाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वं हैवा-स्मिँल्लोके आयुरेति नैनं पुराकालात्प्राणो जहाति ॥१०॥

यन्तं गच्छन्तम्। अनु पश्चात् पृष्ठतः शब्द उदेति उत्पद्यते। तस्मिन् गच्छत् पश्चात् शब्दो य एवायं पुरुषः असुः। आयुष्यप्रदः। सर्वमायुरेतीत्यभिप्रायमाह—नैनमिति। कालात् कालमृत्योः पुरा अप-मृत्युं न प्राप्नोतीत्यर्थः ॥ १० ॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मो-पास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा द्वितीयोऽन-पग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीय-वान् ह भवति नास्माद् गुणश्छिद्यते ॥ ११ ॥

दिशां सुग्मभूताश्विदैवत्यत्वात् द्वितीयत्वेनोपासनोपपत्तिः । अपगच्छतीत्यपगः न विद्यतेऽपगः परिवारो यस्य स अनपगः । अपरिवार इत्यर्थः । गणः परिवारः ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति सहोवोचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमुपास्ते सर्वं हैवास्मिंल्लोकआयुरेति नैनं पुरा कालान् मृत्युरागच्छति ॥ १२ ॥

छायामयः छायागतः । मृत्युर्मारकः ॥ १२ ॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमतमुपास इति स य एतमेवमुपास्त आत्मन्वीह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥

आत्मनि हिरण्यगर्भे । आत्मन्वी चित्ताभिमानिचतुर्मुखवानित्यर्थः । आत्मन्वोभवति । चित्तवान् भवति । ततः परमुत्तरास्फूर्त्त्यौ तूष्णीं बभूव ॥ १३ ॥

स होवाचाजातशत्रुरेतावन्नु ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥१४॥

एवं स्वाभ्यस्तविद्या उक्त्वा गार्ग्यस्तूष्णीमास ह किल स अजातशत्रुः तूष्णीं स्थितं गार्ग्यम् । एतावदेव ब्रह्म विदितं किमित्युवाच एतावद्धि एतावदेव ब्रह्मविदितमिति गार्ग्यः प्रत्युवाच । एवमुक्तवन्तं गार्ग्यं प्रत्यजातशत्रुः नैतावता ब्रह्म विदितं भवतीत्युवाच एतावताऽऽत्मादिगतपरमात्मोपासनमात्रेण मोक्षार्थं वेदितव्यं विदितं न भवति । स्वहृद्गतपरमात्मरूपविशेषोपासनस्यैव मोक्षसाधनत्वादिति भावः । स गार्ग्यो मोक्षसाधनविद्याश्रवणार्थं त्वा त्वां उपयानि शिष्यत्वेनोपयामीत्युवाच ॥ १४ ॥

स होवाचाजातशत्रुः प्रतिलोमं वैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञापयिष्यामि तं पाणावादायोत्तस्थौ तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहत्पाण्डुरवासः सोमराजन्निति स नोत्तस्थौ तं पाणिनाऽपेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥

एवमुक्तः स अजातशत्रुरुवाच ह क्षत्रियो मे ब्रह्म वक्ष्यतीति ब्राह्मणः क्षत्रियं शिष्यत्वेनोपेयादिति यत् एतत्प्रतिलोमं विपरीतं वै तस्मात् वि एवेति पदच्छेदः त्वा त्वां प्रति ब्रह्म विज्ञापयिष्याम्येव विज्ञापनमेव करिष्यामि नोपदेशमित्यर्थः । तं गार्ग्यं पाणावादाय हस्ते गृहीत्वोत्तस्थौ । तौ गार्ग्याजातशत्रू क्वचित्प्रदेशे सुप्तं पुरुषं प्रत्याजग्मतुः पूर्वोक्तं विशेषसम्बन्धज्ञापनार्थं तं सुषुप्तपुरुषान्तर्गतं परमात्मानं बृहत्पाण्डुरवासः सोमराजन्नित्येतैर्नामभिः । आमन्त्रयांचक्रे सः सुषुप्तान्तर्गतो नोत्तस्थौ नोत्थापयामास जीवं हृद्गतरूपविशेषवाचकासाधरणनामापेक्षया शरीरे पाणिपेषणस्य । विशेषसम्बन्धसत्त्वेन शीघ्रप्रबोधोपायत्वात् सुप्तं पाणिना पेषं कृत्वा बोधयांचकार स सुप्तः पाणिपेषणेनोत्तस्थौ ॥ १५ ॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदगादिति तदुह न मेने गार्ग्यः ॥ १६ ॥

एवमर्थविशेषसम्बन्धं ज्ञापयित्वा स्पष्टं दर्शयितुं पृच्छति । सहेति । एषः जीवः । एतत् । एतस्मिन् शरीरे यत्र यस्मिन् परमेश्वरे सुप्तः । एष सुप्ताधारः पुरुषः परमात्मा विज्ञानमयः सम्यक् ज्ञानस्वरूपः । य एषः प्रसिद्धो विज्ञानमयः पुरुषः । एषःतदा सुषुप्तिसमये क्वाऽभूत् कुत्रस्थितः । एतत् एतस्मिन् प्रबोधकाले कुत आगादिति योजना तत् सुषुप्तकालीनं परमात्मवासस्थानं तदागमनावधिञ्च गार्ग्यो न मेने ॥ १६ ॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय एषोन्तर्हृदय आकाशस्तस्मिन् शेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥१७॥

एवमप्रतिबुद्धयमानं प्रश्नकर्त्ता। अजातशत्रुरुवाच। यत्रैष एतत् सुप्तोऽभूत्। इत्याद्यनुवादः। य एष विज्ञानमयः पुरुषः परमात्मा। तदा सुषुप्तिकाले एषां प्राणानामिन्द्रियाणां विज्ञानं विज्ञानजननशक्तिं। विज्ञानेन विज्ञानपूर्वकमादाय एष अन्तर्हृदये हृदयस्थान्तराकाशोऽस्ति तस्मिन् शेते विज्ञानमयः पुरुषः परमात्मा तानि विज्ञानजननशक्तिमन्ति इन्द्रियाणि। यदा गृह्णाति अथ तदा एष चासौ पुरुषश्चैतत्पुरुषः जीवः। यद्वा एतत् एतस्मिन् परमात्मनि शरीरे वा पुरुषः स्वपितिनाम। तानि गृह्णातीत्युक्तं विवृणोति। तद्गृहीतएवेति। प्राणो घ्राणेन्द्रियं त्वगिन्द्रियञ्च। एवं काभूदित्यस्य परिहारोक्तौ कुत आगादित्यस्य परिहारः तत एवागादिति सुज्ञान एवेति पृथङ्नोच्यते ॥१७॥

स यत्रैतत् स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवति उतेव महाब्राह्मण उतेवोच्चावचं निगच्छति यथा महाराजो जानपदान् गृहीत्वा स्वजनपदे यथाकामं परिवर्त्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वेशरीरे यथा कामं परिवर्त्तते ॥ १८ ॥

स्वहृदिस्थस्य स्वस्मिन्विशेषसम्बन्धप्रदर्शनार्थमेव स्वप्नावस्था प्रवर्त्तकत्वमप्याह। स इति। स परमात्मा यत्र यदा एतदेतस्मिञ्छरीरे स्वप्न्या नाड्या चरति जीवं चारयति च। परमात्मा नाड्या कुतश्चर तीत्यत आह। ते हेति। ह यस्मात्। ते नाडीविशेषाः। अस्य परमात्मनो लोकाः। तस्मात्तया चरतीति सम्बन्धः जीवेश्वरयोरुभयोरपि

स्वप्नावस्थागतत्वे कोविशेषस्तयोरित्यतस्तदा जीवव्यापारं तावदाह । तदुतेवेति । तत् तदा महाराज इव भवति तद्वदात्मानं पश्यति महाब्राह्मण इव भवतीतिसम्वन्धः किं बहुना यदुच्चं गजादि यच्चावचं श्वमार्जरादि तद्वदात्मानं निगच्छति पश्यति उत शव्दाः परस्परसमुच्चये एवं जीवस्वरूपमुक्त्वा परमात्मस्वरूपं सदृष्टान्तमाह। स इति जनपदान् देशान् गृहीत्वा स्ववशे कृत्वा एष परमात्मा एतत् प्राणान् एतस्य जीवस्य मनोव्यतिरिक्तेन्द्रियाणि स्वे स्वाधीने शरीरे ॥१८॥

**अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हितानाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते। यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ १९ ॥**

प्रागुक्तसुप्तिस्वरूपं स्मारयन् यदा सुषुप्तो भवतीत्युक्तं विवृणोति । यदेति। यदा जीवः कस्यचन किञ्चन न वेद तदा याः जीवस्य सुखहेतुत्वेन परमात्मना निहितत्वेन वा हितानाम द्वाभ्यामधिकसप्ततिः द्वासप्ततिः सहस्राणि नाड्यः हृदयात् हृदयमारभ्य वर्त्तमानं पुरीततं शिरः पर्य्यन्तं शरीरे व्याप्तं सुषुम्नाख्यनाडीविशेषमभि परितः प्रतिष्ठन्ते। ताभिर्नाडीभिः प्रत्यवसृत्य चरित्वा पुरीतति सुषुम्नाख्यनाडीविशेषे शेते आत्मा। स दृष्टान्तं सुषुप्तिस्थितिप्रकारमाह। स यथेति। कुमारो रुद्रः महाराजो वायुः। महाब्राह्मणो ब्रह्मा। आनन्दस्यानन्दरूपस्य परमात्मनोऽतिघ्नीं समीपे गत्वा सुखमासीत एवमेवैष जीवः एतदेतस्मिन् सुषुम्नासंस्थिते परमात्मनि शेते। सुखमास्ते ॥१९॥

**स यथोर्णनाभिस्तन्तुनोच्चरेत्। यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे**

**देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥२०॥**

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

---

न केवलं सुप्तप्राप्यत्वं परमात्मनः किन्तु तदुत्थानहेतुत्वञ्चेति भावेन हृद्गतस्य परमात्मनो माहात्म्यं सदृष्टान्तमाह। स यथोर्णनाभिरिति। यथोर्णनाभिर्लूताख्यः कीटविशेषस्तन्तुजालमध्यस्थित आहारग्रहणाय तन्तुद्वारा निर्गच्छेत्। यथा क्षुद्राः विस्फुलिङ्गाः अग्नेर्व्युच्चरन्ति। एवमेवास्माद्विज्ञानमयादात्मनः परमात्मनः सर्वे प्राणाः इन्द्रियाणि सर्वे लोका भूरादयः सर्वे देवाः चतुर्मुखादयः सर्वाणि तदन्यानि भूतानि प्राणिनो व्युच्चरन्ति उत्पद्यन्ते। उपलक्षणमेतत्। नश्यन्तीत्याद्यपि ग्राह्यम्। अन्तर्यामिणं गोप्यं नामधेयमाह। तस्येति। तस्य हृद्गतस्य परमात्मनः सत्यस्य सत्यमित्युपनिषद्रहस्यं नाम तद्व्याचष्टे। प्राणा इति प्राणन्तीति प्राणाः। इन्द्रियलोकदेवभूतानि तेषामेष परमात्मा सद्भावमुत्पत्तिं यापयति इति सत्य इति ॥२०॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां
द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

**यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि। अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाऽऽधानमिदं प्रत्याधानं प्राणः स्थूणाऽन्नं दाम ॥ १ ॥**

साधानं सप्रत्याधानं सस्थूणं सदामं शिशुमुपासीतेति भावेन तथोपास्तौ फलमाह। यो ह वा इति। योऽधिकारी साधानं सप्रत्याधानं सस्थूणं सदामं शिशुमुपास्ते सः। द्विषतः विषयाभिधावनहेतून्।

अतएव भ्रातृव्यान् शत्रून् सप्तमनोबुद्धिसहितश्रोत्रादिज्ञानेन्द्रियरूपान् तदभिमान्यसुरांश्चावरुणद्धि जितेन्द्रियो भवतीति यावत्। कः शिशुः किमाधानादिकमित्यत आह—अयं वावेति। योयं प्रागुक्तः सर्व प्राणिषु संस्थितो मध्यमः प्राणः। अयमेव शिशुः गोवत्सरूपः। तस्य सर्वप्राणिगतगोवत्सरूपप्राणस्य। इदमेव प्रमाणप्रसिद्धं जीवसूक्ष्मशरीरमेवाधानम्। आधीयतेऽस्मिन्नित्याधानम्। अवस्थानं गृहमित्यर्थः। इदं जीवस्थूलशरीरमेव प्रत्याधानं वितानं गृहाश्रयप्रदेशविस्तारः। प्राणो नारायणः। स्थूणा वत्सबन्धनस्तम्भः। अन्नं श्रीः दाम बन्धकरज्जुः। तथा च जीवस्थूलशरीराख्यप्रदेशविस्तारस्थतल्लिङ्गशरीररूपगृहे नारायणाख्यायामन्नाख्यश्रीरूपदाम्ना बद्धं गोवत्सरूपप्राणं योवेदेति पूर्ववाक्याभिप्राय इति भावः ॥

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनँ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो याकनीनका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधारयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥**

तं दक्षिणाक्षिस्थितं प्राणम्। अक्षितयः। अक्षीणज्ञानमनसः। एताः वक्ष्यमाणाः रुद्राद्याः सप्तदेवता उपतिष्ठन्ते। कः किमधिष्ठायोपास्त इत्यत आह—तद्या इति। तत्तत्र सप्तसुमध्ये रुद्रः या इमाः प्रसिद्धाः। अक्षन्नक्षिणि लोहिन्यो राजयो रेखाः ताभिरधिष्ठानभूताभिः ता अधिष्ठायेति यावत्। एनमक्षिस्थं प्राणमन्वायत्त अनुगत उपतिष्ठत इति यावत्। अथान्यत अक्षन्याः। आपो धूमादिसंयोगेनाभिव्यज्यमानाः ताभिः पर्जन्योऽन्वायत्तः या कनीनका चक्षुषि कृष्णावर्णवर्तुलमण्डलमध्यस्था तया आदित्योऽन्वायत्तः। यत्कृष्णं चक्षुषि तेनाग्निरन्वायत्तः यच्छुक्लं तेनेन्द्रोऽन्वायत्तः। अधरया वर्त्तन्या चक्षुर्गतोदकादिनिस्सरणमार्गेणैनं प्राणं पृथिव्यन्वायत्ता द्यौरुत्तरया वर्त्तन्या

एनमन्वायत्ता एवं प्राणविदः फलमाह--नास्येति। योऽधिकारी एवं रुद्राद्युपास्यमानमक्षिस्थं प्राणं वेद। अस्य वेत्तुरन्नं न क्षीयते॥२॥

**तदेष श्लोको भवति अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपं तस्याऽसतऋषयः सप्त तीरे वागष्टमी ब्रह्मणा सम्विदानेति अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्राह्मणासम्विदानेति वागष्टमी ब्राह्मण सम्वित्ते ॥ ३ ॥**

दक्षिणाक्षिस्थं प्राणं रुद्राद्या उपासत इत्युक्तार्थे मन्त्रमुदाहरति। तदेष इति। मन्त्रं पादश अनूद्याऽऽप्रतीतेर्व्याचष्टे अर्वाक्बिल इति। इति मन्त्रभागे यदुक्तं तत्। इदं प्रतीयमानं शिरः। कुतः? हि यस्मात्। एष शिरोलक्षणश्चमसः। अर्वाग्बिलः बिलं मुखादि तस्य बुध्नापेक्षयाऽर्वाक्स्थितत्वात्। ऊर्ध्वबुध्नः। बुध्नाकारस्य शिरसः उपरिभागे दृश्यमानत्वात्। तस्मात् शिर एवोक्तलक्षणश्चमसः। चमसविवक्षया एष इति पुल्लिङ्गः। तस्मिन् यशो निहितं विश्वरूपमित्येतद्वाक्यं प्राणानाह तत्र हेतुमाह--प्राणा वै यशो विश्वरूपम्। प्राणस्य प्राणापानादिबहुरूपतया यशोवत् प्रसृतत्वाद्यशस्त्वेन निरूपणम्। वृत्तिभेदात् प्राणा इति बहुवचनम। तस्येति। साक्षिश्रोत्रनासिकास्योपाधिसम्बन्धिनः सप्तशीर्षण्याः प्राणास्तस्यसमीपे वर्त्तन्त इत्यर्थः ब्रह्मणा वेदेन सम्विदाना सम्वादं कुर्वती सम्वित्ते समीत्येकीकारे वित्तशब्दोज्ञापनपरः ब्राह्मणैकप्रत्ययैकबुद्धिः। ब्रह्मणा वेदेनैककण्ठा वेदवादिनीति यावत॥ ३॥

**इमावेव गौतमभारद्वाजौ अयमेव गौतमोऽयं भरद्वाजः। इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयमेव जम-**

दग्निः । इमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपः । वागेवात्रिर्वाचा ह्यन्नमद्यते अत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥४॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥ २ ॥

---

सप्तऋषयः क इत्यत्र कर्णौ प्रदर्शयन्नुवाच इमावेवेति कर्णावेव गौतमभरद्वाजौ । अयमेवेति । तयोर्मध्यएको गौतम एको भरद्वाजः॥ चक्षुषी उपदिशन्नुवाच । इमावेवेति । चक्षुषोर्मध्ये एकं विश्वामित्रः । अपरं जमदग्निः । नासिके उपदिशन्नाह—इमावेवेति । दक्षिणः पुरो भवति वसिष्ठः । उत्तरः कश्यपः पूर्ववत् । वागेवात्रिरिति । वागिन्द्रियाधिष्ठानभूतेनाऽऽस्येनान्नमद्यत इति वागिन्द्रियमेवात्रिः । अत्तिरिति । अत्तृत्वादत्तिरित्येतन्नामसदत्रिरितिपरोक्षेणोच्यते वागत्रित्वज्ञानस्य फलमाह । सर्वस्येति । अत्र सर्वस्यात्ता भवतीत्यर्थस्य सिद्धत्वात् सिद्धस्य कीर्त्तनमनुकूलत्वभोग्यकीर्त्तनमिति द्रष्टव्यम् ॥ ४ ॥

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥ २ ॥

---

द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च सच्च यच्च त्यच्च ॥ १ ॥ तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत् सत् तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥

ब्रह्मणः परमात्मनो मूर्त्तममूर्त्तञ्चेति द्वे रूपे शरीरे वावेति-प्रसिद्ध्यर्थः मूर्त्तं कठिनममूर्त्तमकठिनम् । मूर्तामूर्त्तयोर्विशेषणानि-संकलय्याह मर्त्यञ्चेति। मर्त्यं मरणधर्मकं विनश्वरमित्यर्थः । अमृतं तदितरत् । स्थितमव्यापकम् । सत्प्रत्यक्षोपलभ्यम् । यद्व्यापकम् । एति गच्छति सर्वानिति यद्व्यापकमित्यर्थः । त्यत्तदितरदित्यर्थः ॥ १ ॥ किं तन्मूर्तमित्यत आह—तदेतन्मूर्त्तमिति। वायोश्चान्तरिक्षात् यदन्यत् पृथिव्यप्तेजोलक्षणम् उक्तविशेषणानि कानीत्यत आह—एतन्मर्त्यमिति। एतन्मूर्त्तं मर्त्यं मरणधर्मोपेतम् । एतत्स्थितं मूर्त्यस्थितं सत् सच्छब्द-बोध्यम् । उक्तविशेषणानुवादपूर्वकं मूर्त्तसारं निरूपयति—तस्येति। य एष तपति मण्डलरूपेणेत्यर्थः । आदित्यमण्डलं सच्छब्दितस्य तेजोवन्नस्य रसः । तेजोवन्नवन्मण्डलस्य प्रत्यक्षोपलभ्यमानत्वादादित्य-मण्डले मूर्तत्वादिचतुष्टययुक्ते तेजोवन्नरसत्वबुद्धिः कर्त्तव्येत्यर्थः ॥२॥

**अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यं तस्यै-तस्यामूर्त्तस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥३॥**

अथ मूर्तकथनानन्तरम् । अमूर्त्तमुच्यत इति शेषः वायुश्चान्त-रिक्षंचामूर्त्तम् । एतदमूर्त्तममृतम् । अमूर्तत्वामृतत्वयत्वत्यत्वलक्षण-धर्मचतुष्टयाश्रयवाय्वन्तरिक्षरसत्वबुद्धिरादित्यमण्डलस्थपुरुषे कर्त्त-व्येति समुदितार्थः ॥ ३ ॥

**अथाध्यात्मम् । इदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चा-यमन्तरात्मन्नमृताकाशः एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्त्त-स्यैतस्य स्यैतस्यस्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥ अथामूर्त्तं प्राणश्च यश्चायमन्तरात्मन्ना-काशएतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त-स्यैष रसः ॥ ५ ॥**

एवमधिदैवतमुपासनाप्रकार उक्तः। इतः परमध्यात्मं मूर्तामूर्त-रसोपासनचिन्ताप्रकारो वर्ण्यते। अथेति अध्यात्मम्। आत्मनि देह इत्यर्थः। किं तन्मूर्त्तमिदमेव। किञ्चेदं यदन्यत् प्राणाच्च यश्चा-पान्तरअभ्यन्तर आत्मन्नात्मन्याकाशः प्राणहार्दाकाशव्यतिरिक्तं यद-न्यच्छरीरारम्भकं भूतत्रयमेतन्मर्त्यमित्यादिसमानमन्यत् पूर्वेण। शरी-रान्तर्वर्त्तिभूतत्वादिचतुष्टयाधारभूतं यत्तस्य चक्षुरेव रसः। अमूर्त्तत्वा-दिचतुष्टयाश्रयप्राणाहार्दाकाशयोर्दक्षिणाक्षिस्थः पुरुषः परमात्मा रस इत्यर्थः॥ ४। ५॥

**तस्य हैतस्य पुरुषस्य रूपम्। यथा महारजनं वासो यथा पाण्डवाविकं यथेन्द्रगोपः यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदा-थात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ-नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्॥ ६॥**

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये तृतीयं ब्राह्मणम्॥३॥

---

तदेव बुद्ध्यारोहणाय दृष्टान्तेनाह। यथेति। महारजनं हरिद्रा मांजिष्ठा वा तया रक्तं महारञ्जनं वासोयथेत्यर्थः। यथापाण्डुआविकम् ऊर्णानिर्मितं सूक्ष्मवस्त्रं तद्वदित्यर्थः। इन्द्र गोपः— कीटः। यथाऽग्न्यर्चिः-अग्निज्वालाः। यथा पुण्डरीकम् अम्भोजम्। यथा सकृद्विद्युतम्। सकृत् सकृत् प्रवृत्तविद्युदिवेत्यर्थः। एवं रूपमस्य भवतीतिपूर्वेणान्वयः। सकृ-द्विद्युतेव हास्येति विद्युतेव विद्युदिवास्य श्रीः प्रकाशात्मना भवति। द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्चेत्यादिना तेजोऽवन्नात्मकं वाय्वा-काशात्मकञ्चेतिपञ्चभूतात्मकस्थूलरूपं निर्दिष्टं तत्र ब्रह्मण एतावत्त्वं प्रतिषेधयितुमुपक्रमते। अथेति। अत्रादेशशब्देनोपदेश उच्यते।

अथातश्शब्दौ वाक्यान्तरोपन्यासार्थौ । यन्मूर्तामूर्तप्रपञ्चमेताव-देव ब्रह्म न भवतीति प्रतिपाद्यते, न तु प्रपञ्चस्वरूपं निषि-ध्यते, अतत्परत्वाद्वाक्यस्य, द्वौ नञौ द्वित्वसङ्ख्यावच्छिन्नरूप-मेतावत्त्वं प्रतिषेधतः । न ह्येतस्मादिति । नेत्यन्यत् परमस्तीति, एत-स्मात् पूर्वोक्तादन्यत् ब्रह्मस्वरूपं नहीति न वक्तव्यम्, अन्यत्परम-स्तीति एतस्मात्परमुत्कृष्टमिन्द्रियाग्राह्यमेतन्नियन्तृपुरुषोत्तमाख्यमन्य-त्स्वरूपमस्तीत्यर्थः । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' इतिश्री-मुखवचनात् । अथ किं तदित्यपेक्षायामाह—अथ नामधेयमिति । तस्य निर्वचनं प्राणा वै सत्यमिति । अत्र प्राणशब्देन प्राणवन्तो जीवा उच्यन्ते, ते हि वियदादिवदनुत्पाद्याः, अतस्तेषां सत्यशब्द-वाच्यत्वं परन्तु तेप्यनादिकर्मवशाद्देहयोगेन जन्मभाजः ज्ञानसङ्को-चविकाशरूपविकारवन्तश्च, एतत्परमात्मनो नास्तीति तेषां प्रत्यगात्मनां मध्ये, एष-परमात्मा सत्यं निर्विकारमित्यर्थः । इदं वचनमुभयलिङ्गपादे प्रकृतैतावत्त्वम् । ब्र० सू० ३।२।२२॥ सूत्रे चिन्तितम् ।

तस्य वृत्तौ कौस्तुभप्रभायां परमतनिराकरणपूर्वकस्वाभिमतार्थ-स्य प्रदर्शनमभिहितं तत्रास्याः श्रुतेरर्थो द्रष्टव्यः ।

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

---

**मैत्रेयीति होवाच याज्ञवल्क्यः ; उद्यास्यन्वा अरेऽहमस्मा-त्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥१॥**

याज्ञवल्क्यो मैत्रेयीति स्वस्त्रियं सम्बोध्य इत्युवाच किमिति अरे मैत्रेयि, अहमस्मात् स्थानात गृहस्थाश्रमात् उद्यास्यन्नस्मि ऊर्ध्वं-गन्तुमिच्छन्नस्मि । अहन्ते तवानया कात्यायन्या अन्यथा स्वभार्यया सह अन्तं निर्णयं विभागं करवाणीति हन्तेत्यास्वादने ॥१॥

**सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी**

**वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति स होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतस्य तु नाशाऽस्ति वित्तेनेति ॥२॥**

**सा हो वाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥**

स एवमुक्ता मैत्रेयी उवाच किल किमिति। हे भगोः भगवन् यत् यदा मे इयं सर्वा पृथिवी वित्तेन पूर्णा स्यात्तदा तेन वित्तपूर्णपृथिवीरूपोपायेनामृता मुक्ता स्यां कथं किं नु वितर्के । इतिपृष्टो याज्ञवल्क्यो नेति नानेन मुक्ता भविष्यसीति होवाच । किं तत्सर्वात्मना व्यर्थमित्यतोऽभिप्रायमुद्घाटयति । यथैवेति । यथा लोक उपकरणवतां धनादिसाधनसम्पत्तिमतां सुखेन जीवितमेव स्यात् तथा वित्तेन जीवितमेव स्यात् । न तु तेनामृतत्वस्याशाऽस्ति ॥ २ ॥

एवमुक्ता सा मैत्रेयी उवाच येन वित्तादिनाऽहममृता न स्यां तेनाहं किं कुर्यां । ततो मोक्षसाधनत्वेन भगवान् यदेव वेद तदेव मे ब्रूहीति ॥ ३ ॥

**स होवाच याज्ञवल्क्यः प्रिया वतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥**

एवं तयोक्तो याज्ञवल्क्य उवाच । अरे मैत्रेयि त्वं सती पतिव्रता । नः प्रिया प्रीतिविषया । नः प्रियं यथा भवति तथा भाषसे एहि । आस्स्व उपविश मोक्षसाधनं व्याख्यास्यामि । व्याचक्षाणस्य तु मे वचो निदिध्यासस्व व्यासङ्गं विहाय मनोधत्स्वेति ॥ ४ ॥

**स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तुकामाय जाया प्रिया**

भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्या-त्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति।

ब्रवीतु भगवानित्युवाच मत्रयीति प्राह्यम्। स एवमुक्तो याज्ञवल्क्यो। वक्ष्यमाणमहिमाविशिष्टात्मपरोक्षज्ञानमेव मोक्षसाधन-मितिभावेन तावत् पत्युर्यज्जायादिप्रियत्वं तद्धेतुत्वरूपमात्ममहिमान-मुवाच। ननु पत्युः स्वेच्छयैव जायाप्रियत्वोपपत्तौ। किमात्मेच्छ-येत्यत आह—न वा इति। अरे मैत्रेयि पत्युः कामाय चतुर्थी तृतीयार्थे कामेन पतिः प्रियो जायाया इति शेषः। नैव भवति। अस्वतन्त्रत्वात्। किन्तु आत्मनस्तु परमात्मन एव कामायेच्छया पतिः प्रियो भवति जायया इति शेषः तस्य स्वतन्त्रत्वादित्यर्थः। एव-मुत्तरवाक्यान्यपि व्याख्येयानि। जायायै--जायायाः वित्तस्य-विताभि-मानिनः कुवेरस्य। ब्रह्मणः-चतुर्मुखस्य।

न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति। आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भव-त्यात्मनस्तु कामाय सर्वं प्रियं भवति।

क्षत्रं क्षत्रियवर्णः। स्वर्गाद्याः लोकाः। शिष्टं स्पष्टम्।

आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासि-तव्यः। मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञाने-नेदं सर्वं विदितं भवति। ५॥

ततः किमित्यत्राह। आत्मेति। यस्मात् पतिजायादीनां प्रियत्वं यत्सङ्कल्पायत्तं तस्मात् तस्य परमात्मनोऽनुग्रहाय परमात्मा द्रष्टव्यः। स हि परमात्मदर्शनेन प्रसन्नः सन्सर्वेषामपि वस्तूनां पतिजायादिव ततोऽधिकं वा प्रियत्वमापादयितुं शक्नोति। न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। छान्दो० ७। २६। इति श्रवणादिति भावः। अत्र स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थदर्शनात्तन्निर्णयाय स्वयमेव गुरुमुखान्न्यायं युक्तार्थग्रहणलक्षणश्रवणे प्रवर्त्तते। इति श्रवणस्य प्राप्तत्वाच्छ्रोतव्य इत्यनुवादः स्वात्मन्येव युक्तिभिःश्रुतार्थप्रतिष्ठापनलक्षणमननस्य श्रवणप्रतिष्ठार्थतया प्राप्तत्वान्मन्तव्य इति चानुवादः॥ अनवच्छिन्नस्मृतिसन्तानरूपं ध्यानमेव निदिध्यासितव्य इति विधीयते। तस्य किं फलमित्यतआह—मैत्रेय्यात्मन इति। आत्मनो दर्शनेन श्रवणेन मत्या मननेन विज्ञानेन निदिध्यासनेन इदं सर्वं जगत् तत्प्रसादात् विदितं भवति अनुकूलत्वेन विदितं भवति सर्वं प्रियं भवतीत्यर्थः। परमात्मनः प्राधान्येन तज्ज्ञाने सति तत्फलंप्रधानजगज्ज्ञानफलमन्तर्भवतीति भावः कुतः परमात्मनः प्राधान्यमिति चेत्। सर्वस्य जगतः परमात्माश्रितत्वादितिभावेन तद्विपरीतज्ञानिनोऽनर्थमाह। ब्रह्म तमिति॥ ५॥

**ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्त्रं तं परादाद्योऽन्यत्रात्मनः क्षत्त्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद इदं ब्रह्मेदं क्षत्त्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा॥६॥**

यः पुमान् ब्रह्म ब्राह्मणजात्यात्मकं चतुर्मुखम्। आत्मनःपरमात्मनोऽत्यन्तभिन्नत्वेन वेद। तं वेत्तारं। ब्रह्म परा लोकालोकस्य परतः। अन्धे तमसि अदात् पातयेदित्यर्थः। एवमुत्तरत्रापि। ननु ब्रह्मज्ञानेन

तद्भिन्नस्य जगतो ज्ञानासम्भवात्तस्मिन् विज्ञाते इदं सर्वं विदितमिति-निर्देशो नोपपद्यत इत्याशङ्क्य सर्वेषामपि चेतनाचेतनवस्तुमात्रपराणां शब्दानां तत्तत्पदार्थवाचकत्वे तत्तदात्मभूतब्रह्मपरत्वं ब्रह्मणः सर्वात्मकत्वात् यथा देवदत्तादिपिण्डा देवदत्तादिशब्दानां शक्यास्तदवच्छिन्नास्तत्तच्चेतयितारश्च उभयेऽपि देवदत्तादिशब्दैर्विधातुं सुशक्यास्तेषां देवदत्तादिपिण्डतत्तदवच्छिन्नक्षेत्रज्ञाभिधानपरत्वे तेषामन्तरात्मत्वाद्ब्रह्माभिधानपरत्वं वक्तुं शक्यते। एतदभिप्रेत्य वस्तुजातस्य ब्रह्मत्वमाह। इदं ब्रह्मेदमिति। ततश्चात्मनि विज्ञाते इदं सर्वं विदितं भवति सर्वस्य ब्रह्मात्मकत्वात् यो यदात्मकः स तदभेदव्यपदेशार्हः सुवर्णकुण्डलादिवदिति भावः॥ ६॥

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्-ग्रहणा यदुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दोगृहीतः॥७॥**

परमात्मनो जगत्कारणत्वाज्जगतस्तदधीनत्वात्प्राधान्यमितिभावेन जगत्कारणत्वादौ दृष्टान्तमाह। स यथेति। स वक्ष्यमाणो दृष्टान्तो यथा। हन्यमानस्य दुन्दुभेर्दर्शने सति श्रूयमाणशब्दान् बाह्यांस्तत्तदन्यमुरजादिकारणजन्यांस्तदधीनान् ग्रहणाय गृहीतुं न शक्नुयात् किन्तु दुन्दुभेस्तदाघातस्य वा पूर्वभावितया ग्रहणेन सशब्दोगृहीतस्तज्जन्यतया तदधीनत्वेन वा एवं भगवन्तं तदिच्छां च जानन् जगदन्यजन्यमन्याधीनमिति न गृह्णाति। किन्तु भगवदिच्छाजन्यं तदधीनमित्येव गृह्णातीति भावः॥ ७॥

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्शब्दाञ्शक्नु-याद् ग्रहणाय शङ्खस्य तु ग्रहणाय तु ग्रहणेन शङ्खध्मस्य वा शब्दोगृहीतः॥ ८॥ स यथा वीणायै वाद्यमानायै न बाह्या-ञ्शब्दाञ्शक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वाशब्दोगृहीतः॥ ९॥**

**स यथार्द्रैधाग्नेरभ्याहितात् पृथग् धूमा विनिश्चरन्ति । एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतत् । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैव निःश्वसितानि ॥ १० ॥**

स यथेति पूर्ववत् । वीणायै वीणायाः वाद्यमानायै वाद्यमानायाः ॥ ६ ॥

ब्रह्मणः जगत्कारणत्वमेव दृष्टान्तेनाह—स यथेति । यथार्द्रैरेधोभिः काष्ठादिभिरिद्धोऽग्निः । तस्मादभ्याहितात् । अभितः प्रज्वलितात् । पृथक्नानाप्रकारं धूमाः । उपलक्षणमेतत् । विस्फुलिङ्गादयोऽपि विनिश्चरन्ति । एवं वा एवमेवैतत् वक्ष्यमाणस्य महतोभूतस्य परमात्मनः निःश्वसितं निर्गतं किन्तदित्यत आह । यदिति विद्यामूलश्रुतिः । श्लोकाः पञ्चरात्रसंहिताः । सूत्राणि ब्रह्मसूत्राणि । व्याख्यानानि वेदव्याख्यानानि । अनुव्याख्यानानि तद्विस्तारभूतानि अनुव्याख्यानानीति यदित्यर्थः । यद्यपि सूत्रस्मृतिपुराणादयो व्यासाद्युद्गता इति पुराणेषु प्रसिद्धिस्तथापि तेषां भगवदंशत्वाद्भगवन्निःश्वसितोक्तिरुपपद्यत इति द्रष्टव्यम् । शब्दप्रपञ्चस्य तज्जन्यत्वमुक्त्वा अर्थप्रपञ्चस्यापि तदाह । अस्यैवेति । एतानि प्रमाणप्रसिद्धानि सर्वाणि महदादीनि । अस्यैव सकाशात् निःश्वसितानि निर्गतानि । सृष्टावायासाभावसूचनाय निःश्वसितमित्युक्तम् ॥ १० ॥

परमात्मन उपासनस्योपकरणभूतकरणग्रामस्य नियमनं कर्त्तव्यमित्याह । स यथेति ।

**स यथा सर्वासामपाᳬं समुद्र एकायनमेवᳬं सर्वेषाᳬं स्पर्शानां त्वगेकायनम् ॥**

समुद्रस्यापामयनत्वं तदुपादातृत्वमेवं त्वचः स्पर्शायतनत्वं नाम तदुपादातृत्वम् । स दृष्टान्तो यथा येन प्रकारेण सर्वासां नदीवापीत-

डागादिगतानामपां समुद्रोऽब्धिरेकायनं मुख्याश्रयः । एवं सर्वेषां स्पर्शानां मृदुकठिनकर्कशादीनां त्वगेकायनमित्यर्थः ।

एवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनम् । एवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थमेकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वगानां पादावेकायनम् । एवं सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥

एवमिति पूर्ववत् । अवस्थाविशेषविशिष्टं मनोहृदयमित्युच्यते । अध्वगानामध्वगमनानामित्यर्थः । एकेन्द्रियवृत्तिविशेषा अनन्ताः । ततश्चात्मसाक्षात्कारार्थिनैते वृत्तिविशेषा निरोद्धव्या इत्यभिप्रायः ॥ ११ ॥

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायैव स्यात् .तो यतस्तदाददीत लवणमेव एवं वा अरे महद्भूतमनन्तमपारं विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति होवाच याज्ञवल्क्यः ॥ १२ ॥

मोक्षोपायप्रवृत्तिप्रोत्साहनायस्वनियम्यभूतजीवात्मतयाऽवस्थितस्य परमात्मनो व्यापकत्वमाह—स यथेति । सिन्धुः समुद्रोदकं तत्र भवः सैन्धवः सचासौ खिल्यश्च सैन्धवखिल्यो लवणशकलम् । उदके समुद्राश्रितोदके प्रास्तः प्राक्षिप्तः सन्नुदकमनुखिल्यारम्भकत्वेन तदवयवभूतमुदकं विलीयमानमन्वेव विलीयते । कश्चिदपि अस्य विलीनस्य खिल्यस्योद्ग्रहणाय पूर्ववत् विशिष्य गृहीतुं नैव शक्तः स्यात् । हेति प्रसिद्धिमाह । कुतः । यतो यतो यस्माद्यस्माद्देशात् । तत् उदकमाददीत

गृहीत्वाऽऽस्वादयेत् । तत्र तत्र लवणमेव लवणरसोपेतमेव गृह्यते न खिल्यभाव इति । तथाच विलीनभावस्य सैन्धवखिल्यस्य सर्वासामपाञ्च समुद्र एकायनमितिग्राह्यम् । यथाऽयं दृष्टान्तः । एवमरे मैत्रेयी विज्ञानघनो जीव एव तेभ्यो भूतेभ्य अवादिभ्यः समुत्थाय तदुपादानकदेहसम्बन्धेनोत्पाद्य । तानि लीयमानानि देहारम्भकभूतानि । अन्वेव विनश्यति । सर्वथा देहवियोगलक्षणमुक्तिः प्राप्नोति भूतबन्धनस्तु संसारो । मुक्तिस्तेभ्यो विमोचनमिति वचनात् । ततश्चेदं महद्भूतमनन्तमपारं भगवन्तं श्रीवासुदेवं पूर्वमुक्ताश्रयं प्राप्नोति । अत्र वरुणवत् अपां खातवद्वा भगवान् समुद्रजलवत्पूर्वमुक्ताः । सैन्धवखिल्यवत् मुच्यमान जीव इति विवेकः । न ह्यस्योद्ग्रहणायेत्युक्तसैन्धवखिल्यसाम्यमुच्यमानस्याह । न प्रत्येति । प्रेत्य चरमदेहयोगं प्राप्य मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन संज्ञाऽस्त । समीत्येकीकारे ज्ञाधातोर्ज्ञानमर्थः । ततश्च भूतसङ्घातेनैकीकृत्य ज्ञानं संज्ञाशब्दार्थः यद्वा मुक्तानां संज्ञा नामधेयम् । उपलक्षणमेतत् । तत्स्वरूपं चामुक्तैः सम्यक् ज्ञायत इति संज्ञा शास्त्रं विना सम्यक् ज्ञानं नास्तीत्यरे । अहं ब्रवीमीति याज्ञवल्क्य उवाच ॥ १२ ॥

**सा होवाच मैत्रेय्यत्रैव मा भगवनमूमुहन्न प्रेत्य संज्ञाऽस्तीति । स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥**

सा एवमुक्ता मैत्रेयी मोक्षरूपं सम्यक् ज्ञातुकामा सर्वथा ज्ञानाभावोऽनेनोक्त इत्यारोप्योवाच । भगवन् अत्रैवावश्यं वेदितव्य एव विषये मा माम् अमूमुहत् अमोहयत् । कथं मोक्षानन्तरसंज्ञा ज्ञानं नास्तीति । नचेदं सम्यक्ज्ञानं परमपुरुषार्थे मोक्षे ज्ञानाभावस्यासम्यक्त्वादिति । स एवमुक्तो याज्ञवल्क्यः । अहं मोहं मोहकवाक्यं न ब्रवीमि । त्वन्तु मुक्तसंज्ञाप्यमुक्तैर्न ज्ञायत इति मदभिप्रायमज्ञात्वा अन्यथा कल्पयसीत्युवाच । पुनस्तस्याः विशेष

जिज्ञासां ज्ञात्वा मुक्तस्वरूपमुपदिशति । अलमिति । इदं मुक्तजातं विज्ञानाय यथायोग्यपरमात्मस्वरूपादिकं विशेषेण ज्ञातुमलं समर्थम् ॥ १३ ॥

**यत्रहि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरमभिवदति तदितर इतरमभिशृणोति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत् तत्तत्केन कं विजानीयात् । येनेदं सर्वं विजानाति तं केन विजानीयात् । विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥**

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

यत्र यस्यामवस्थायां द्वैतमिव भवति स्वनिष्ठतया परमात्मनः पृथगिव भवति स्वतन्त्र इव भवतीति यावत् स्वातन्त्र्यस्याप्रामाणिकत्वद्योतनाय इवशब्दः तदितर इतरं जिघ्रति । तत्तदेतरो भिन्नात्मक इतरं भिन्नात्मकं जिघ्रति । अत्रेतरेणेत्याध्याहार्यम् । उत्तरत्र तत्केन कं पश्येदिति दर्शनात् । इतरेण स्वतन्त्रेण करणेन जिघ्रतीत्यर्थः । यत्र त्वस्येति । यत्र यस्यां ध्रुवास्मृत्याख्यावस्थायामस्य विदुषः सर्वं कर्तृकरणकर्मादिकारकजातमात्मैवाभूदिति । आत्मशब्दोऽत्र विश्वात्मभूतब्रह्मपरः ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात्तच्चाविधानमविरुद्धम् । ब्रह्मैव ब्रह्मापृथक्सिद्धमभूत् तर्हि केन स्वतन्त्रसत्त्वावच्छिन्नकरणेन कं वा स्वतन्त्रत्वेन पृथक् वस्तुजातं कर्मकारकरूपं को वा स्वतन्त्रभूतो द्रष्टा कर्तृकारकरूपः पश्येदितियोजना सर्वकारकजातस्य तत्प्रयोज्यतया केषु चिदपि कर्त्रादिषु स्वातन्त्र्याभावेन स्वतन्त्रः कर्त्तेति' सूत्रोक्तकर्तादिकारकलक्षणसमन्वयेन तत्ताभावात् तदात्मकतत्प्रयोज्यतदाधेयतद्व्याप्यत्वावच्छिन्नैस्तत्कारकैस्तत्तत्कर्मकारयिता श्रीपुरुषोत्तम एव । 'एष एव साधुकर्म कारयतीति' श्रुतेः । येन परमात्मना प्रसन्नेना-

नुगृहीतः सर्वज्ञो भवति तं परमात्मानं केन हेतुना विजानीयात् 'क इत्था वेद यत्र सः'। कठ १। २। २५॥ इतिवत् भगवदनुग्रहमन्तरेण परमात्मा दुरवबोध इत्यर्थः। विज्ञातारं परमात्मानं सार्वज्ञ्याश्रयं श्रीवासुदेवं प्रक्रमोदितध्यानं विना केनकेवलयज्ञाद्युपायेन विजानीयात्॥ उक्तञ्च श्रीबादरायणाचार्यैः वासुदेवानुग्रहादृते तस्य दुरवगमत्वं परं तं केन विजानीयादितिपूर्ववाक्यमुपासनातिरिक्तकेवलयज्ञदाना-द्युपायान्तरनिषेधपरं विज्ञातारमरे केन विजानीयादित्युत्तरवाक्यमिति ततश्च भगवदनुग्रहपरमात्मोपासनयोर्द्वयोरप्यावश्यकत्वं द्वाभ्यां वा-क्याभ्यां प्रतिपादितं भवति। इति शब्दः प्रतिवचनसमाप्तौ इति मैत्रेयीब्राह्मणम्॥

इदञ्च ब्राह्मणं समन्वयाध्याये चतुर्थपादे चिन्तितम्। न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्युपक्रम्य आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिना मैत्रेयीं प्रति याज्ञ-वल्क्येन द्रष्टव्यतयोपदिष्ट आत्मा किं तन्त्रसिद्धः पञ्चविंशकः। उत परमात्मा इतिसंशये तत्रोपक्रमे पतिजायापुत्रवित्तमित्रपश्वादि-प्रियत्वसम्बन्धस्य मध्ये च॥ एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-विनश्यति न प्रेत्य संज्ञास्ति। इत्युपपत्तिविनाशसम्बन्धितया सांसारि-कस्वभावप्रतीतेश्च। अन्ते च। विज्ञातारमरे केन विजानीयादिति। विज्ञातृत्ववचनस्य च तन्त्रसिद्धे पुरुष एव सम्भवात्सएवेति कृत्स्नमपि प्रकरणं जीवपरमेवेति पूर्वपक्षं कृत्वा समाधत्त आचार्यः 'वाक्या-न्वयात्। ब्र० सू०। १। ४। १९॥ परमात्मैवात्र द्रष्टव्यत्वादिना निर्दिश्यते कुतः वाक्यान्वयात्। वाक्यं नामैकार्थप्रतिपादनपरत्वे स-त्याकाङ्क्षादिमत्पदसमुदायस्तस्य सर्वस्य पूर्वापर्यालोचने तत्रैवान्वयात् तथाहि अमृतत्वस्य तु नाशास्ति वित्तेनेति याज्ञवल्क्याद्धनादेर्मोक्षानु-पायत्वं श्रुत्वा एतदेव मे ब्रूहीत्यमृतत्वमाशासानया मैत्रेय्या प्रार्थि-तेन याज्ञवल्क्येन द्रष्टव्यत्वादिनोपदिष्टोऽयमात्मा परमात्मैव। तमेव विदित्वाऽतिमृत्युमेति तमेवं विद्वानमृत इह भवति नान्यः पन्था

विद्यतेऽयनाय यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः तदा देवम विज्ञाय दुःखस्यान्तं निगच्छति । इत्याद्यन्वयव्यतिरेकवाक्यैर्मोक्षस्य तदेकज्ञानोपायकत्वमवगम्यते। प्रकृतिवियुक्तात्मस्वरूपज्ञानन्तु न स्वातन्त्र्येण मोक्षोपायः किन्तु परमात्मज्ञानोपयोगित्वेनैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि परमात्मन्येव सम्भवति तस्य सर्वात्मत्वात् । इदं सर्वं यदयमात्मा इत्येकात्म्योपदेशोऽपि तत्रैवोपपद्यते इदंशब्देन चिदचिन्मिश्रप्रपञ्चनिर्देशात् । अतएव परमात्मनोऽत्यन्तभिन्नतया सर्वविदोनिन्दोच्यते सर्वं तं परादादिति सर्वविश्वकारणत्वमपि कर्मपरवशानां जीवानां न सम्भवति । यत्तूपक्रमे । आत्मनस्तु कामाय पतिः प्रियो भवतीत्यादिना पत्यादिप्रियसम्बन्धितया मध्ये चोत्पत्तिविनाशसम्बन्धितया सांसारिकस्वभावप्रतीतेर्जीवात्मनोऽन्वेष्टव्यत्वमाशङ्कितं तन्न युक्तं तत्रात्मशब्देन परामात्मन एवाभिधानात् तस्य सर्वकारणतया सर्वात्मतया च सर्वशब्दवाच्यत्वात् ॥ ततश्चायं मैत्रेयिब्राह्मणनिष्कर्षः। वित्तादिकमनादृत्य मोक्षोपायं पृच्छन्त्या स्वतन्त्र्या मैत्रेय्या । यदेव भगवान् वेत्थ तदेव मे ब्रूहीति प्रार्थितेन याज्ञवल्क्येन । न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामायेत्यारभ्य । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यन्तेन परमात्मोपासनं मोक्षोपायत्वेन कथितम् । "आत्मनस्तु कामाय" इत्यत्रात्मशब्दस्य जीवात्मपरत्वे "आत्मा वा" इति परवाक्येनानन्वयापत्तिस्तस्यां च सत्यां वाक्यभेदस्तस्मिंश्च सति पूर्ववाक्यस्य न किञ्चित्प्रयोजनं दृश्यते ॥ आत्मावाऽरे द्रष्टव्य इत्यात्मनोद्रष्टव्यत्वोपयिकत्वेन तदुपदेशात् उभयत्र जीवात्मपरत्वे तु परमात्मैकान्तधर्मश्रुतिर्व्याकुप्येत । अतोऽरे हे-मैत्रेयि पत्यादेः कामाय कामोऽभिलापो मत्प्रयोजनायाहमस्य प्रियः स्यामित्येवं रूपस्तन्निवृत्तये। पत्यादयः प्रिया न भवन्ति अपित्वात्मनः कामाय स्वाराधकप्रियप्रतिलम्भनरूपाभिलापसिद्धय इत्यर्थः। परमात्मा हि कर्मभिराराधितः स्वाराधकानां सर्ववस्तुगतं प्रियत्वमापादयति ।

एषह्येवानन्दयातीति श्रुतेः "योगक्षेमं वहाम्यहमिति स्मृतेश्च। ततश्च आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणं ब्रह्म तं परादादित्यादिना च ब्रह्मणोऽत्यन्तभिन्नचिदचित्सर्वपदार्थज्ञातृनिन्दापूर्वकं सर्वस्य ब्रह्मात्मकत्वेन तदभिन्नत्वात्। इदं सर्वं यदयमात्मेति चिदचिद्वस्तुनो ब्रह्मणाऽभेदमुपदिश्य दुन्दुभ्यादिदृष्टान्तश्चोपासनोपकरणभूतकरणनियमनञ्च सामान्यतोऽभिधाय "स यथाद्रेन्धनाग्नेरित्यादिना। स यथा सैन्धवखिल्यउदके प्रास्त" इत्यादिना मोक्षोपायप्रवृत्तिप्रोत्साहनाय स्वनियम्यभूतजीवात्मतयाऽवस्थितस्य परमात्मनो व्यापकत्वम्। उक्तं मैत्रेयीब्राह्मणे च। स यथा सैन्धवघन इत्यादिना जीवात्मतया तदभेदेनावस्थितस्य परमात्मनोऽवच्छिन्नैकस्वरूपत्वमुपपाद्य "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यनेन च तमनुपासीनस्य जीवस्य संसारं न प्रेत्य संज्ञास्तीत्यनेन च तमुपासीनस्य मोक्षमभिधाय पुनरपि "यत्र हि द्वैतमिव भवतीत्यादिना च विनष्टसर्वाज्ञानस्य ध्रुवास्मृतिमतो निखिलविश्वस्य ब्रह्मात्मकतया ब्रह्माभिन्नं सर्वं वस्तु पश्यतोब्रह्मभिन्नवस्त्वन्तराभावेन भेददर्शनं निराकृत्य येनेदं सर्वं विजानाति तं केन विजानीयात्। इत्यनेन च जीवो येन स्वात्मतयावस्थितेन परमात्मना बोधितः सन्निदं सर्वं विजानाति तं केन विजानीयात् इत्यनेन च जीवो येन स्वस्मिन्नात्मतयावस्थितेन परमात्मना बोधितस्सन्निदं सर्वं विजानाति तं केन विजानीयादिति सर्वविज्ञातारं सर्वजगदेककारणभूतं पुरुषोत्तममुपक्रमोक्तात्तदुपासनादृते केन विजानीयान्न केनापीति तदुपासनमेवाऽमृतत्वोपायः परमात्मप्राप्तिरेवामृतत्वमित्युपसंहृतम्। अतः परमात्मैवात्र प्रकरणे निर्दिश्यते स एव निखिलविश्वकारणं न तन्त्रसिद्धः पुरुषस्तदधिष्ठाता प्रकृतिरिवेति स्थितमितिवाक्यान्वयाधिकरणे पूज्यपादैः श्रीकेशवकाश्मीरिभट्टाचार्यैः वेदान्तुकौस्तुभप्रभायामभिहितम्।

इत बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां द्वितीयाध्याये
चतुर्थं ब्राह्मणम् ॥ ४ ॥

इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषः। अयमेव स सोऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१॥

इयं पृथिवी सर्वेषां भूतानां मधु मधुवत् आश्रयत्वादिना सुखदा। अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि मधु शुश्रूषादिना सुखदानि यश्चायमस्यां पृथिव्यां विद्यमानस्तेजोमयः स्वयं प्रकाशः ज्ञानमयः। अमृतमयो नित्यः मरणधर्मशून्य इति यावत्। पुरुषः। यश्चाध्यात्मम्। देहेन्द्रियमनः प्राणजीवसङ्घातस्तस्मिन् यः शारीरः शरीरान्तर्यामी तेजोमयोऽमृतमयश्च यः पुरुषः। अत्र शरीरस्य पृथिवीविकारत्वादधिभूतं पृथिव्याः स्थानेऽध्यात्मं शरीरस्य निवेशः। स अयमेव। अयं कः यः पूर्वोक्तः। आत्मा वारे द्रष्टव्य इत्यादिना सोऽयमेव पृथिव्यन्तर्यामी शरीरान्तर्यामी चायमवेत्यर्थः। इदममृतमुपकोशलविद्यादौ। अमृतत्वब्रह्मत्वादिना निर्दिश्यमानमपीदम्। सर्वं प्रपञ्चजातमिदं ब्रह्म ब्रह्मात्मकं ब्रह्माभिन्नाभिन्नमिति यावत् ॥१॥

इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥२॥

रेतसि स्थितः रैतसः। आपो रेतो भूत्वा शिश्नं प्राविशन्। ऐ०।२।२। इति श्रुतेः। अपां स्थानेऽध्यात्मं रेतसो निवेशः ॥२॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव सयोऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥३॥

अग्न्यभिमानिकत्वाद्वाचः । अग्निर्वाग्भूत्वा मुखं प्राविशत् । ऐ० २ । ४ । इति श्रुतेश्चाध्यात्मं तत्स्थाने वाचोनिवेश उपपद्यते ॥३॥

अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥४॥

अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥५॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशां सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषः यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥६॥

श्रौत्रः श्रोत्रगतः सन् प्रतिशृणोतीतिप्रातिश्रुत्कः ॥६॥

अयं चन्द्रः सर्वेषां भूतानां मध्वस्यचन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव सयोऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥७॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥८॥

तैजसः। कौक्षेयतेजः सम्बन्धीत्यर्थः ॥ ८ ॥

अयं स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिंस्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ९ ॥

शब्दो वागिन्द्रियेणोच्चार्यमाणशब्दान्तर्यामी। तस्य विशेषणम्। सौवर इति। स्वरे भवः सौवरः। द्वारादित्वादैजागमः ॥ ९ ॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं हृद्याकाशस्तेजमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १० ॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य सर्वाणि भूतानि मधु यश्चामस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥

धर्मः श्रुतिस्मृतिप्रतिपाद्यः ज्योतिष्टोमादिलक्षणः धार्मस्तु तत्फलभूतसुखदुःखादिलक्षणः ॥ ११ ॥

इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १२ ॥

सत्यं सत्यवचनं सात्यं तत्फलभूतं सुखादिलक्षणम् ॥ १२ ॥

इदं मानुषं सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि

**भूतानि मधु यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १३ ॥**

पुमान् येन जातिविशेषेण सम्बद्धो भवति सजातिविशेषो-मानुषादिः तत्र मानुषातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परो-पकार्योपकारकभावेन वर्त्तमाना दृश्यन्ते । अतोमानुषादिजातिरपि सर्वेषां भूतानां मधु ॥ १३ ॥

**अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोमृतमयः पुरुषो यश्चा-यमध्यात्ममात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽय-मात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १४ ॥**

अयमात्मा प्रत्यगात्मा यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः सर्वेषु यश्चायं तेजोमयोऽमृतमयः पुरुषो निर्दिष्टः सोऽस्मिन्न-वस्थितोऽन्तर्यामीत्यर्थः । सोऽपि क इत्याह । यश्चायमात्मेतिपूर्व-वदर्थः ॥ एतदुक्तं भवति । सर्वान्तर्यामिणः परमात्मनोवासुदेवस्या चेतनवर्गाद्भिन्नत्वं स्वरूपेण सर्वचेतनेभ्योभिन्नत्वञ्च श्रुतिवचनेभ्यः समर्थितं भवति ॥ १४ ॥

**स वाऽयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एव-मेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ १५ ॥**

परमात्मनो महिमानं दर्शयति । स वा इति । सर्वेषां भूतानां जीवानाम् । उपलक्षणमेतत् । सर्वेषामात्मानां विरिञ्चानाञ्चाधिपति-राधिक्यात् पालनात् राजा नियन्ता एतेन सर्वात्मत्वसर्वनियन्तृत्वसर्व-व्यापकत्त्वस्वतन्त्रसत्वसर्वाधारत्वादियोगेन ब्रह्मणश्चेतनाचेतनयोश्च स्व-

रूपेण भेदः । ब्रह्मात्मकत्वतन्नियम्यत्व तद्व्याप्यत्वतन्त्रसत्वपराधेयत्वादियोगेन चाभेद इत्युक्तं भवति । एतदेव सदृष्टान्तमुपपादयति । तद्यथेति । तत् वक्ष्यमाणं निदर्शनं यथा च शब्दौ परस्परसमुच्चयौ । रथस्य नाभिर्नाम रथचक्रस्य मध्यवर्त्तिसरन्ध्रं काष्ठं नेमिर्नाम बाह्यं वलयाकारं काष्ठम् । एतयोस्तु मध्यवर्तिशालाका अरा यथा नाभिनेम्याश्रिता एवं देवलोकप्राणजीवाः परमात्माश्रिता इत्यर्थः ॥ १५ ॥

**इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । तद्वां नरा सनये दंसउग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ङाथर्वणो ह वामश्वस्याशीर्ष्णा प्रयदीमुवाचेति ॥ १६ ॥**

इयं मधुविद्याऽतिप्रशस्ता पूर्वैरनुष्ठितत्वात् उपदिष्टत्वाच्चेत्याह । इदमिति दध्यङ्नामा आथर्वणगोत्रोत्पन्नो ब्राह्मण इदं प्रमाणप्रमितं तत् मधु मधुविद्यामश्विभ्यामुवाच । वा इति अस्यार्थस्यप्रमाणसिद्धत्वमाह । पश्यन्वै वेदद्रष्टा ऋषिः तदेतत् दध्यङ्ङाथर्वणोऽश्विभ्यामुवाचेत्येतत् प्रमेयमुवाच तां ऋचं पठति ।' तद्वामिति । हेनरा सुपांसुलु० इत्यादिना द्विवचनस्यादेशः । हे नरौ दिव्यपुरुषावश्विनौ वां युवयोः सनये सनिर्लाभो विद्यालभाय । उग्रं क्रूरं शिरश्छेदनपुनः प्रतिसन्धानरूपं दंसः कर्मास्ति । तत्तन्यतुः पर्जन्यो वृष्टिं न वृष्टिमिव न शब्द इवार्थे यथा पर्जन्यो वृष्टिं प्रकाशयत्येवं तत्कर्माऽऽविष्करोमि प्रकाशयामि । किं तदाविष्क्रियत इत्याह दध्यङ्ङिति । ह प्रसिद्धौ हेऽश्विनौ वां युवयोर्दध्यङ्ङाथर्वणोऽश्वस्य शीर्ष्णा स्वशिरोव्यतिरिक्तेनाश्वशिरसा प्रोवाचेति यत्तदाविष्कृणोमीत्यर्थः । एवं महता यत्नेनाश्विभ्यां दधीचो विद्या गृहीतेति विद्या स्तुता भवति । अत्रेयमाख्यायिका दध्यङ्ङाथर्वण इन्द्रान्मधुब्राह्मणं प्राप्तवानिन्द्रेण च तदुपदेशसमयेऽन्यस्मै नैतदुपदेष्टव्यमन्यथा शिरश्छेत्स्यामी-

त्युक्तेऽप्यसौ लाभादश्विनोः समीपमागत्येन्द्रः शिरश्छेत्स्यतीतिभीतोऽस्मि तद्भयं निवार्यते चेद्युवयोर्मधुब्राह्मणमुपदेक्ष्यामीत्युक्तवान् ततस्ताभ्यामुपदेशकाल आवामेव त्वदीयं शिरश्छित्वाऽन्यत्र स्थापयित्वाऽन्यदीयशिरसा त्वां योजयिष्यावस्तेन शिरसाऽऽवाभ्यामुपदिश। उपदेशकुपितेनेन्द्रेण तच्छिरसि च्छिन्ने त्वदीयमेव शिरो यथापूर्वं प्रतिसन्धास्याव इत्युक्तम्। तथैव तेनोपायेन विद्यां प्राप्तवन्तौ ततः पूर्वं शिरो यथा पूर्वं प्रतिसंधितवन्तौ चेति ॥ १६ ॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥**

तदेतत् दध्यङ्ङाथर्वणोऽश्विभ्यां मधु उवाचेत्येतत् तां ऋचं पठति। आथर्वणायेति। हे दस्रौ शत्रुभेदकौ अश्विना अश्विनौ युवामाथर्वणाय दधीचे अश्वियम्। अश्वसम्बन्धिशिरः प्रत्यैरयत्तं प्रतिसमाधत्तं सः सन्धिताश्वशिरा दध्यङ् ऋतायन् वां युवयोर्मधु वक्ष्यामीति पूर्वं प्रतिज्ञातं सत्यं कुर्वन्वां युवाभ्यां मधु मधुविद्यां यत् त्वाष्ट्रं त्वष्टुः पुत्रेण विश्वरूपेणेन्द्रायोक्तं कक्ष्यं नारायणकवचं तदपि प्रवोचत् प्रावोचदित्यर्थः। अडभावश्छान्दसः ॥ १७ ॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः सपक्षी भूत्वा पुरुष आविशदिति। स वाऽयं पुरुषः सर्वासु पूर्षु पुरिशयः नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ॥ १८ ॥**

यश्चायमध्यात्मं शरीर इति सर्वेषु शरीरेषु भगवांस्तिष्ठतीति यदुक्तं तत्र मन्त्रं वक्तुमाह ॥ इदमिति। पश्यन्नृषिः तदेतत् सर्वशरीरस्थत्वमुवाच। तं मन्त्रमुदाहरति। पुर इति। स पुरुषो द्विपदः पुरः -शरीराणि चक्रे चतुष्पदः पुरश्चक्रे ततः पक्षीभूत्वा द्विपदः पुरश्चतुष्पदश्च

पर आविशत्। पुरुषो जीव इति प्रतीतिं निवारयन् पुरुषशब्दं निर्वक्ति। स वा अयमिति। स एव परमात्मा पुरुष उच्यते। कुतः यतः सर्वासु पूर्षु देहेषु। पुरि हृत्पुर्यपि शेत इतिशयः न केवलं पुरस्थितिमात्रं किन्तु अन्तर्बहिर्व्याप्तिश्चास्तीत्याह। नैनेनेति। एतेनानेनात्मना किञ्चिनाऽनावृतमव्याप्तं न किन्तु व्याप्तमेव। असंवृतमनाच्छादितम्॥ १८॥

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। रूपँ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शता दशेति अयं वै हरयोऽयं वै दश च शतानि सहस्राणि बहूनि चानन्तानि तदेतद्ब्रह्म। अपूर्वमनपरम्। अनन्तरमबाह्यम्। अयमात्मा ब्रह्म सर्वानुभूः। इत्यनुशासनम॥१६॥**

इतिबृहदारण्यकोपनिषदि द्वितीयाध्याये पञ्चमं ब्राह्मणम्॥ ५॥

---

रूप्यंत इति रूपं दृश्यं वस्तु। वीप्सायां द्वित्वम्। प्रतिवस्त्विवतियावत। प्रतिरूपः सदृशरूप इत्यर्थः। तत्तद्रूपसदृशतयाऽन्तर्यामितया स्थित इति यावत। प्रतिचक्षणं व्यवहारः 'चक्षिङोभावे ल्युट्'। व्यवहाराय यद्व्यवहर्त्तव्यमिति यावत्। तत्सर्वमस्य परमात्मनो रूपं शरीरमित्यर्थः। ननु शरीरसम्बन्धस्य कर्माधीनत्वात् कर्मारब्धस्य व्यवह्रियमाणप्रपञ्चस्य कथं तद्रूपत्वमित्याशङ्क्याह। इन्द्र इति। इन्द्रः परमेश्वरः इदि परमैश्वर्य इति धातुः, मायाभिः मायावयुनं ज्ञानमिति नै घंटुकाः मायाभिः सङ्कल्परूपज्ञानैर्विचित्राश्चर्यकारित्वाज्ज्ञानरूपत्वाच्च मायाशब्दितत्वं सङ्कल्पस्योपपद्यते। पुरुरूपो बहु शरीरः स्वेच्छागृहीतानन्तदेह इति यावत्। अस्यानन्तप्रपञ्चस्य युक्तायोग्यास्तदनुरूपसङ्ख्याशालिनः शतानि दश हरयः शतानि दशानन्ता इति यावत्। अनन्ताहरयः अन्तर्यामिविगृह्यानन्त्यादनन्ताहरय इत्युक्तिरितिद्रष्टव्यम्। अयमिति। अयमेक एव हरिः शतानि सहस्राणि बहूनि हरयो भवन्ति। विचित्रशक्तेः परमात्मनः काऽनपयत्तिरितिभावः

एवमियत्ता प्रबन्धेन निर्दिष्टं ब्रह्मेत्युपसंहरति । तदेतद्ब्रह्मेति । ब्रह्मशब्दि-तत्रिविधपरिच्छेदराहित्यमुपपादयति । अपूर्वमिति । पूर्वोत्तरकालशून्यं कालापरिच्छिन्नमित्यर्थः । अनन्तरम देशपरिच्छेदशून्यमित्यर्थः । बाह्याभ्यन्तरव्यवहारानर्हमिति भावः । सर्वोत्कृष्टत्वलक्षणवस्तुपरिच्छे-दाभावमुपपादयति । अयमात्मा ब्रह्मेति । सर्वनियन्तृतया सर्वोत्कृष्ट मि-त्यर्थः सर्वानुभूः सर्वज्ञः । इदं जगत्कारणत्वनियतृत्वाद्यिप्रसर्वशक्तित्वा-दिगुणानामप्युपलक्षणं द्रष्टव्यम् । इत्यनुशासनमिति । अनुशासन-मुपदेशः ॥ १६ ॥

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां द्वितीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

अज्ञातसम्प्रदायाया विद्याया अभ्युदयफलकत्वाभावेनानादरणी-यत्वात् आचार्यवंशो ज्ञेयः इतिश्रवणाच्च विद्याप्रवर्तकाचार्यपरम्परा मुपदिशति ।

**अथ वंशः पौतिमाष्यो गौपवनात् गौपवनः कौशिका-त्कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥**

अथ वंशः कीर्त्यत इति शेषः । सर्वतः प्रथमान्तैः शिष्यनिर्देशः पञ्चम्यन्तैराचार्य्यनिर्देशः । पौतिमाष्य आचार्यो गोपवनात्प्राप्तविद्य इति शेषः एवमुत्तरत्रापि द्रष्टव्यम् कौशिकाच्च गौतमाच्चेति तस्याचार्यद्वय-मितिभावः ॥ १ ॥

**अग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चान-भिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्यां । सैतवप्रा-चीनयोग्यौ पाराशर्यात्पराशर्यो भारद्वाजाद्भारद्वाजः भारद्वाजा-द्गौतमाच्च गोतमः भारद्वाजाच्च भारद्वाजः पाराशर्यात्पराशर्यो वैजपायनाद्वैजपायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥**

घृतकौशिकाद् घृतकौशिकः पराशर्यायणात् पराशर्यायणः पराशर्यात् पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चाऽऽसुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाच्च भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहरितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः ॥

पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात् प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनकात्सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ।

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

---

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायः ॥ २ ॥

---

ब्रह्म स्वयम्भु स्वयमेव भवति जानातीति स्वयंभु । अध्यायान्तेमङ्गलमाचरति वेदपुरुषः ब्रह्मणे नम इति सर्वगुरवे ब्रह्मणे परमात्मने मनः ।

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

---

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां द्वितीयाध्यायः ॥२॥

---

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवां सहस्रमवरुरोध दश दशपादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥

मधुकाण्डे त्वाष्ट्रं कद्यञ्चेति व्याख्यातं सम्प्रति तत्काण्डसिद्धमेव सर्वान्तर्यामित्वं प्रकारान्तरेणास्मिन्नध्याये उपदिश्यते । तत्रादौ मीमांसाप्रकारमेवाख्यायिकयाह । जनक इति विदेहानां वंशभवो वैदेहो जनक नाम ह किल बभूव स च बहुदक्षिणेन यज्ञेन 'शाखान्तर' एतन्नाम्नाप्रसिद्धेन बहुदक्षिणाविशिष्टेनाश्वमेधादिना वा । ईजे अयजत । तत्र तस्मिन् यज्ञे विद्वद्भूयिष्ठकुरुपाञ्चालदेशेभ्यो ब्राह्मणा अभिसमेता बभूवुः । तान् दृष्टवतस्तस्य जनकस्य वैदेहस्य । कः स्वित कोऽनु एषां ब्राह्मणानां मध्येऽनूचानतमोऽतिशयेनानूचानो ब्रह्मिष्ठ इति विजिज्ञासा विशेषेण ज्ञातुमिच्छा बभूव । पश्चात्स जनको ह तद्विज्ञानोपायभूतं गवां सहस्रं गोष्ठे ( यज्ञवाटसमीपे ) अवरुरोधावरोधं कारयामास । तासामेकैकस्याः गोः शृङ्गयोः दशादशपादाः पलस्य चतुर्थभागः पादः । एवम्भूतासुवर्णस्य दशदशपादा आबद्धा बभूवुः । शृङ्गयोरिति द्विवचनात् प्रतिशृङ्गं पञ्चपञ्च पादा आबद्धा इत्यर्थः ॥ १ ॥

75-6 तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एतागा उदजतामिति । ते ह ब्राह्मणा न दधृषुः । अथ ह याज्ञवल्क्यःस्वयमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेति । अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति

**स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयंस्म इति तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥**

एवं गा अवरुद्ध्य जनकस्तान् ब्राह्मणान् किल उवाच हे ब्राह्मणाः भगवन्तः पूजार्हा इति सम्बोध्य यो वो युष्माकं मध्ये ब्रह्मिष्ठोऽतिशयेन ब्रह्मज्ञः । स एता अवरुद्धा गा उदजातां स्वगृहं प्रत्युद्गमयत्वित्युक्ते । ते ब्राह्मणा ह किल न दधृषुः धैर्य्यवन्तो नाभवन् । आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुमितिशेषः । अथानन्तरं याज्ञवल्क्यो ह किल स्वं स्वीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच किं हे सोम्य सामश्रवा ३ इतिप्लुतिर्दुराह्वानार्था । सामविधिं शृणोतीति सामश्रवास्तत्सम्बोधनं सामश्रव एता गा उदज अस्मद्गृहं प्रति उद्गमय। एवं गुरुवचनं श्रुत्वा किल ह ब्रह्मचारी। ता गाः उदाचकार उत्कलितवान् नीतवानाचार्यगृहं प्रति। एवं ब्रह्मिष्ठाय गवामपहरणात् याज्ञवल्क्येन स्वात्मनो ब्रह्मिष्ठत्वस्वीकरणादस्माकमब्रह्मिष्ठता प्रतिज्ञायत इतिमन्वानास्ते ह ब्राह्मणाश्चुक्रुधुः क्रोधं कृतवन्तः । तेषां क्रोधाभिप्राये निमित्तमाह । कथमिति । नोऽस्माकमेकैकप्रधानानामग्रे ब्रह्मिष्ठोस्मीति कथमयं ब्रवीति कथयेत् । इतिशब्दोऽभिप्रायसमाप्तिद्योतकः। अथ क्रोधानन्तरं ह जनकस्याश्वलोनाम होता ऋत्विग्बभूव । स ब्रह्मिष्ठाभिमानी राजाश्रयात् धृष्ठस्सन् एनं याज्ञवल्क्यं पप्रच्छ । कथं हे याज्ञवल्क्य नोऽस्माकमग्रे त्वं नु खलु ब्रह्मिष्ठोसीति प्लुतिर्भर्त्सनार्था । अनौद्धत्यं ब्रह्मविदोलिङ्गमिति सूचयन् याज्ञवल्क्योह उवाच। वयं ब्रह्मिष्ठाय नमस्कुर्मः । किमिति तर्हि ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रति प्रस्थापिता इत्यत आह । गोकामा इति। वयं गोकामा एवस्म । अतो गोग्रहणं कृतवन्त इतिमुनिनोक्ते । ततो ब्रह्मिष्ठपणस्वीकारादेव होताश्वलस्तं द्रष्टुं दध्रे धृतवान्मनः। याज्ञवल्क्ये ।

**याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाप्तं सर्वं मृत्युनाभिसम्पन्नम्। केन यजमानो मृत्योराप्तिमतिमुच्यते इति होत्रर्त्विजा-**

ग्निना वाचा। वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता समुक्तिः साऽतिमुक्तः ॥ ३ ॥

ति सम्बध्योवाच। किमिदं सर्वं प्राणिजातं यत् येन मृत्युना आप्तं प्राप्तं नकेवलमेतावत्। किन्तु मृत्युनाभिपन्नं ग्रस्तञ्च तस्य मृत्योराप्तिं यजमानः केनोपायेनातिक्रम्य मुच्यते इति पृष्टो याज्ञवल्क्य उतरमाह। होत्रेति। होत्रा ऋत्विजा अग्निना वाचा। तदेव दर्शयति। वाग्वैयज्ञस्येति। कर्माङ्गभूतेहोतर्यग्न्यभिन्नत्वेन ध्यातायाः वाचो दृष्टौ कृतायां कर्मणो वीर्यवत्तया ब्रह्मोपासनद्वारा जीवदशायामेव विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितहरत्वलक्षणा मुक्तिर्भवति शरीरवियोगानन्तरं प्रकृत्यतिकान्तपदाधिरोहणलक्षणाऽतिमुक्ति र्भवतीत्यर्थः। तद्येयं तत्सा होतर्यध्यस्यमानावागित्यर्थः स मुक्तिः सातिमुक्तिरिति कारणे कार्योपचारः ॥३॥

याज्ञवल्क्येति हो वाच यदिदं सर्वमहारात्राभ्यां व्याप्तं सर्वमहोरात्राभ्यामभिसम्पन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणात्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोसावादित्यः सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥ ४ ॥

अहोरात्रयोराप्तिर्नामकतिपयाहोरात्रैर्विनश्वरत्वम्। शेषं पूर्ववद्व्याख्येयम् ॥ ४ ॥

याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तं सर्वं पूर्वपक्षापरपक्षाभ्यामभिन्नं केन यजयानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यते। इत्युद्गात्रत्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योयं प्राणः स वायुः स उद्गाता स मुक्तिः सातिमुक्तिः ॥ ५ ॥

पूर्वपक्षापरपक्षयोराप्तिर्नाम कतिपयपक्षविनश्वरत्वं शेषं पूर्ववत् ॥ ५ ॥

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिवकेनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति । ब्रह्मणार्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः सातिमुक्तिरित्यतिमोक्षा-अथसम्पदः ॥ ६ ॥**

अनारम्बणमिव रलयोरभेदः । अनालम्बनमिव दृश्यते तत्केनाक्रमेण क्रमणसाधनेन केन वातिक्रम्य यजमानः स्वर्गं भगवल्लोकमाक्रमते । प्राप्नोतीत्यर्थः । समाधत्ते । ब्रह्मणार्त्विजेति । चन्द्राभिन्नत्वेन ध्यातं मनोदृष्ट्योपासिता ब्रह्मा भगवल्लोकक्रमणसाधनमित्यर्थः ॥ उक्तमुपसंहरति । इत्यतिमोक्षा । इति । अनेन प्रकारेणाति मोक्षप्रश्नाः समाप्ताः । अथ मोक्षप्रश्ननिरूपणानन्तरं उच्यन्ते येनाग्निहोत्रादीनां फवत्कर्मर्णा तत्फला इति शेषः । यसम्पादं सा सम्यत् ॥६॥

**याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होताऽस्मिन् यज्ञे करिष्यतीति तिसृभिरिति कतमास्ता स्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किंचेदं प्राणभृदिति ॥ ७ ॥**

अयं होताऽद्य यज्ञे काले कतिभिऋग्भिरस्मिन् यज्ञे करिष्यतीतिहोत्रमिति शेषः ॥ उतरमाह । तिसृभिरिति । पुनः प्रश्नः । कतमेति । सङ्ख्येयर्विशेषविषयोऽयं प्रश्नः । पूर्वस्तु सङ्ख्याविषयः । उत्तरमाह । पुरइति । यागकालात्प्राक्प्रयुज्यमाना ऋचः पुरोनुवाक्याः यागसाधनभूता ऋचो याज्याः । शस्यार्था ऋचः शस्याः जात्यभिप्रायेणैकवचनं द्रष्टव्यम । तिसृष्वेव हौत्रिणामृचामन्तर्भाव इति भावः ॥ प्रश्नः किं ताभिरिति । समाधानमाह । यत्किञ्चेदमिति । तत्सर्वं जयतीति शेषः ॥ ७ ॥

याज्ञवक्येति होवाच कत्ययमद्याध्वर्युरस्मिन् यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्रइति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशरते । किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीव्यत इव हि देवलोकः । या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयतीवहि पितृलोकः । या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥८॥

प्रश्नः कत्पयमिति किंसङ्ख्यका आहुतीर्होष्यतीत्यर्थः उत्तरमाह । तिस्र इति । पुनः प्रश्नः कनमेति । या हुताः सत्य उज्ज्वलन्ति समिदाज्याहुतय इत्यर्थः । या हुता अतिनेदन्तेऽतीवशब्दं कुर्वन्ति । णिदिशब्दकुत्सायाम् शीत्कारशब्दं कुवन्तीत्यर्थः । या हुता अधिशेरते । अध्यधोगत्वा शेरते पयः सोमाद्याहुतय इत्यर्थः । पुनः प्रश्नः किन्ताभिरिति । समाधानमाह । याहुतेति । तत्र हेतुं प्रदर्शयति । दीव्यत इवाऽऽभासते अत उज्ज्वलानां समिदाज्याहुतीनामुज्ज्ववलदेवलोकसाधनत्वमुपपद्यत इत्याशयः । कुतसितशब्दयुक्ताभिराहुतिभिः कुत्सितशब्दयुक्तं पितृलोकं जयतीत्यर्थः । पित्रलोकसम्बन्द्धायां हि यामिन्यां पुर्यां वैवस्वतेन पात्यामानानां हा हतोस्मीतिशब्दो भवति । अतः पित्रलोकस्य कुत्सितशब्दयुक्तत्वमिति द्रष्टव्यम् । याहु तेति । ऊर्ध्वलोकापेक्षया मनुष्यलोक अध इव हि वर्त्तते ऽतस्तत्सामान्यात मयुष्यलोकं जयतीत्यर्थः ॥ ८ ॥

याज्ञवल्क्येति हो वाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

अद्य ब्रह्माऽऽहवनीयस्य दक्षिणतो दक्षिणभागे ब्रह्मासने स्थित्वा कतिभिर्देवताभिर्यज्ञं गोपायतीति अन्यत् पूर्ववत् । मन

एवेति । तं स्तौति । अनन्तं वा मन इति मनसऽनन्तत्वमुपपादयति । अनन्ता इति । यदधिष्ठाता विश्वेदेवाप्यनन्ताः । अत्र देवशब्देन इन्द्रियत्वं विवक्षितम् । तदधीनानां सर्वेषामिन्द्रियाणामानन्त्यात् मनसश्चानन्त्यमिति भावः । तत्फलमाह—अनन्तमेवेति । तदुपासनया अनन्तं विष्णुलोकं जयति ॥ ९ ॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यन्तीन्ति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्याः किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयन्त्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम ॥ १० ॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

स्तोत्रियाः समारूढऋचः ता ऋचः कतिस्तोष्यतीति । उत्तरम् । तिस्र इति । पुनः प्रश्नः कतमा इति । पुरोनुवाक्येति पूर्ववत् । कतमास्ता या अध्यात्ममिति । ताः पुरोनुवाक्याद्या अध्यात्मं कतमा भवन्ति । तासु किमाध्यात्मदृष्टिः कर्त्तव्येत्यर्थः । पुनः पृच्छति किं ताभिरिति । प्राणादिदृष्टिविशिष्टपुरोनुवाक्यादिभिः कं लोकं जयतीत्यर्थः उत्तर माह—पृथिवीलोकमेवेति । तदर्थस्तुपूर्ववत् । एवप्रश्नानामुत्तरे दत्ते प्रष्टव्यन्तराभावाद्धोतोरुपररामेत्यर्थः ॥ १० ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकायां तृतीयाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

---

अथ हैनं जरत्कारव आर्त्तभागः पप्रच्छ यज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावति ग्रहा इति एतेऽष्टौ ग्रहा अष्टावति ग्रहाः कतमे त इति ॥ १ ॥

अथाश्वलोपरमानन्तरम् । जरत्कारुगोत्रापत्यं जरत्कारवः । ऋतभागस्यापत्यमार्त्तभागः । एनं याज्ञवल्क्यं पप्रच्छ याज्ञवल्क्येति सम्बोध्योवाच । गृह्णन्ति विषयानितिग्रहा इन्द्रियाणि । कति कति संख्याकाः । ग्रहं गृह्णन्ति स्वाभिमुख्येनाहरन्तीत्यतिग्रहाः विषयाः कतीत्यर्थः । इति पृष्टो याज्ञवल्क्योत्तरमाह--अष्टाविति संख्येयान् पृच्छति । एत इति । एतेष्टौ ग्रहा अष्टावतिग्रहाश्चोक्तास्ते कतमेक इत्यर्थः ॥ १ ॥

**प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतो पानेन हि गन्धान् जिघ्रति ॥ २ ॥**

**वाग्वैग्रहः स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥**

**जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान् विजानाति ॥ ४ ॥**

उत्तरमाह--प्राणा वा इति प्राणो घ्राणेन्द्रियं वै ग्रहः । अतिग्रहत्वप्रदर्शनपूर्वकं प्राणातिग्रहं दर्शयति--स इति । स प्राणो पानेनापानाभिमन्यमानेन गन्धेनातिग्रहेण गृहीतः अनेन घ्राणं गृह्णाति स्वाभिमुख्येनाहरतीति गन्धस्यातिग्रहत्वमुक्तं भवति । प्राणस्य ग्रहत्वं दर्शयति । अपानेति। अपानाभिमन्यमानेन घ्राणेन हि यस्मात् गन्धंजिघ्रति तस्मात प्राणो वै ग्रह इत्यर्थः॥ वागतिग्रहत्वं दर्शयति स—इति । सवाग्रूपो ग्रहो नाम्नातिग्रहेण गृहीतः। वाचो ग्रहत्वं दर्शयति । वाचाहीति । एवमुत्तरत्रापि ॥ ४ ॥

**चक्षुर्वैग्रहः स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥**

**श्रोत्रं वै ग्रहः सशब्देनाति ग्रहेणा गृहीतः श्रोत्रेण शब्दान् शृणोति ॥ ६ ॥**

मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते ॥ ७ ॥

हस्तौ वै ग्रहः स कर्मणातिग्रहेण गृहीतो हस्ताभ्यांꣳ हि कर्म करोति । ८ ॥

त्वग्वैग्रहः स्पर्शेनातिग्राहेण गृहीतस्त्वचाहि स्पर्शान् वेदयते इत्यष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

कामेन काम्येन । उपसंहरति । इष्टविति । पादपायूपस्थानां हस्त एवान्तर्भाव इति भावः । अत एव सकर्मणातिग्राहेणेति कर्ममात्रस्य हस्तातिग्रहत्वमुक्तं ॥ ९ ॥

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमिति । अग्निर्वै मृत्युः सोऽपामन्नम् । अपपुनर्मृत्युं जयति ॥ १० ॥

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्यहो३नेतिनेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्रयत्याध्मातो मृतः शेते ॥ ११ ॥

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेति अनन्तं वै नाम अनन्ता विश्वेदेवाः अनन्तमेव स तेन लोकेन जयति ॥ १२ ॥

प्रमेयान्तरं पृच्छति । याज्ञवल्क्येति यदिदं प्रमाणप्रसिद्धं सर्वं यस्य मृत्योरन्नं स मृत्युः का देवता सच मृत्युः यस्या देवताया अन्नं सा च देवताकेति योजना प्रथमप्रश्नोत्तरमाह--अग्निरिति । अग्नावेव सर्वे देवा विलीयन्त इतिश्रुतेरित्यर्थः द्वितीयप्रश्नोत्तरमाह—स इति । सोऽग्निरपां सूर्यस्यान्नम् । अत्र सर्वदेवतावाचकापूशब्देन सूर्यो ग्राह्यः । यद्वा वरुणवत्सूर्योऽप्यपामभिमानी अधमाभिमान्यमानकस्योत्तमाभिमन्यमानकत्वात् तत अपूशब्देन सूर्यग्रहणम् । कुत एवं व्याख्येय-

मितिचेत् सूर्योऽग्नियुक्त इत्यग्नेः सूर्यान्नकत्वस्योक्तत्वात । यद्वा यस्य मृत्योरिदं सर्वमन्नं स मृत्युः कस्या देवताया अन्नम् । उत्तरमाह—अग्निर्वेति । अग्निना हि सर्वं दह्यते सोऽद्‌भिर्नाश्यते । अतोऽपामग्न्यन्नकत्वमिति भावः । अपामग्न्यन्नकत्ववेदनस्य फलमाह—अप इति । य एवं वेद सोऽपमृत्युं जयति ॥ १० ॥

यत्र पदायं जीवो म्रियते किमस्मान्म्रियमाणात् प्राणा उत्क्रामन्ति जीवं विहाय यथायथं गच्छन्त्युत तत्संयुक्ता एव सन्त स्तेन सहैवोत्क्रामन्तीप्रश्नार्थः । उत्तरमाह-- नेतिहोवाचेति । अत्रैवात्मनि समवनीयन्ते संयोज्यन्ते समीत्येकीकारे एकीभूततया संयुक्ता भवन्तीत्वर्थः । न तं विहायोत्क्रामति नहैनोत्सहैवोत्क्रामन्तीत्यर्थः स पुरुषोमृत उत्क्रान्तमाणः सज् श्वपथुं प्राप्नोति । अध्मायति वाह्यवायुना पूर्यते अध्मातोवाह्यवायुना पूरितः सञ्शेते यद्यप्युच्छूनत्वादिदेहधर्मो न तु तस्मादिति निर्दिष्टम्रियमाणजीवधर्मत्तथापि देहात्मनोरभेदोपचारेण तथानिर्देशो द्रष्टव्यः ॥ ११ ॥

पूर्वत्र प्राणं म्रियमाणं न जहातीत्युक्तं सम्प्रति प्राणेभ्योऽन्यश्च किं वा म्रियमाणं न जहातीतिप्रश्नमाह--यत्रायं पुरुष इति । समाधत्ते । नामेति । तदत्याग एव प्रदर्श्यते प्रसिद्धया अनन्तमिति । देहे नष्टेऽपि युधिष्ठिरादीनां नामानुवृत्तिर्दर्शनान्नो नाशो नास्तीत्यर्थः । नामाभिमानिदेवता अप्यनन्ता इत्याह । अनन्ता इति । एवं वेत्तुः फलमाह—अनन्तमेवेति । य एवं वेद इति शेषः अनुवृत्तेन नाम्ना शाश्वतपुण्य लोकं जयतीत्यर्थः ॥ १२ ॥

**याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्याग्निं वागप्येति वातं प्रणश्चक्षुरादित्यं मन श्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मा ओषधीर्लोमानि वनस्यतीन्केशाः अप्सु लोहितश्च रेतश्च निधीयते क्वायं तदाऽयं पुरुषो भवतीति ॥**

यत्र यदा मृतस्य पुरुषस्य वाक् । वागभिमानी अग्निरग्निं स्व·

मूलरूपमेकेन रूपेणाप्नोति । एवमुत्तरत्रापि । सूत्रितञ्च भगवता बादराय- णेन अग्न्यादिगतिश्रुतेरितिचेद्भाक्तत्वात् । ब्र०सू०। ३ ।१ । ४।। इति । व्याख्यातञ्चैतत् पूज्यपादैः श्रीनिवासाचार्य्यैः वेदान्तकौस्तुभे । ननु प्राणानां जीवेन सह गमनं नोपपद्यते 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि'त्यादिना वागादिप्राणानां देहमरण- समयेऽग्न्यादिषु देवेषु गतेर्लयस्य श्रवणादिति चेन्न कुतः भाक्तत्वात् । भज्यते मुख्यावृत्तिर्यया गौण्या वृत्या सा भक्तिस्तत्रभवं भाक्तं वागादी- नामग्न्यादिष्वप्ययश्रवणमौपचारिकमधिष्ठातृदेवताप्रक्रमणपरमित्यर्थः ॥

आकाशमात्मेति । आत्मा देहान्तर्गताकाश इत्यर्थः । लोमा- भिमानिदेवता औषध्यभिमानिदेवतामप्येति लोमाभिमानित्वं परित्यज्य केवलमोषध्यभिमानी भवतीत्यर्थः ॥ निधीयते प्रक्षिप्यते। अयं पुरुषः क भवति कस्मिन् स्थाने तिष्ठतीत्यर्थः। पृष्टस्योत्तरं वक्तुं तस्यातिरहस्य- त्वातदयोग्येषु न प्रकाशनीयमितिभावेनोपोद्घातमाह--आहरेति ॥

**आहर सोम्य हस्तमार्तभागाऽऽवामेतस्यैव वेदिष्यावो न नावेतत्सजन इति तौ होत्क्रम्य मन्त्रयांचक्राते तौ ह यदू- चतुः कर्म हैव तदूचतुरथ यत्प्रशशँसतुः कर्म हैव तत् प्रशशँसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जरत्कारव आर्तभाग उपरराम ॥१३॥**

इति बृहदारण्यकोपनिषदि तृतीयाध्याये द्वितीय ब्राह्मणम् ॥ २ ॥

---

हेसोम्य हस्तमाहर देहि कुतः हेआर्त्तभागावामेवैतस्यैतत्तत्त्वं यत्पृष्टं तत्वं वेदिष्यावः । नौ आवाभ्यां स जनः अयोग्योजन एतत्प्रमेयं न जानीयादिति तौ याज्ञवल्क्यार्त्तभागौ उत्क्रम्य तस्मादेशादुत्क्रम्य निर्ज- नस्थानं गत्वा मन्त्रयांचक्राते । तौ किं मन्त्रयामासतुरित्यतः श्रुतिः स्वयमाह--तौ हेति । तौ मिलित्वा विचार्य निश्चित्य कार्यकारणसंघाता- त्मकशरीरपरिग्रहहेतुतया यदुक्तवन्तौ तत्कर्मैव हेतुषु यत्स्तुतवन्तौ

तत्कर्मैव यद्यपीश्वरसङ्कल्पकालादीनि कारणान्तराणि सन्ति तथापि तेषां साधारणत्वाच्छरीरपरिग्रहहेतुनां मध्ये कर्मैवासाधारणं कारणं पुरुषस्याश्रयभूतमिति स्तुतवन्तावित्यर्थः । तदेव दर्शयति । स मृतः यदि पुण्यकर्मा तर्हि पुण्येन कर्मणा पुण्यो भवति स्वर्गादिपुण्यलोकवान् भवति यदि पापकर्मा तर्हि पापेन कर्मणा पापो नरकादिलोकवान् भवति । अनेन केत्यस्य स्वर्गादावित्युत्तरमुक्तं भवति ततः स्वपृष्टप्रश्नानामुत्तरकथनाज्जरत्कारव आर्तभाग उपरराम ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिका टीकायां
तृतीयाध्याये द्वितीय ब्राह्मणम् ॥ २ ॥

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम । ते पतञ्चलस्य काप्यस्य गृहानैम तस्याऽऽसीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छाम अथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारीक्षिता अभवन् । स त्वा पृच्छामि याज्ञवल्क्य क्व पारीक्षिता अभवन्निति । १ ॥**

अथ आर्त्तभागोपरमानन्तरम् । लभ्यस्यापत्यं लाभ्यायनिः भुज्युरिति नामवान् । एनं याज्ञवल्क्यं पप्रच्छ । एतस्य प्रश्नस्य त्वयोत्तरं वक्तुं न शक्यत इति द्योतयितुं आख्यानकथामाह—याज्ञवल्क्येति । चरकाः तीर्थचारिणः सन्तो वयम् मद्रेषु मद्रदेशेषु पर्यव्रजाम पर्यटितवन्तः । ते वयं काप्यस्य कपिगोत्रोत्पन्नस्य पतञ्चलस्य पतञ्चलनाम्नः गृहान् आवसथान् । एम आगतवन्तः तस्य पतञ्चलस्य दुहिता गन्धर्वेण गृहीता आसीत । तं दुहितर्याविष्टं गन्धर्वं त्वं कः किं नामाऽसीति वयमपृच्छाम । सोऽस्मान् प्रत्यब्रवीत् नाम्ना सुधन्वा गोत्रेणाङ्गिरस इति । तत्स्वरूप ज्ञात्वा त गन्धर्वं यदा लोकानां लोकादीनाम । अन्तान् निर्णयान् । अवसानान्वा अपृच्छाम । अथ तदा

एनं गन्धर्वमत्रूमापृच्छाम पारिक्षिताः कस्मिल्लोकेऽभवन्निति । ततो गन्धर्वादवगततत्स्वरूपस्त्वं पृच्छामि पारिक्षिताः क्वाभवन्निति ॥१॥

सहोवाच उवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिंशतं वै देवरथाह्यान्ययं लोकः । तं समन्तं पृथिवी द्विस्तावत्पर्येति ताँ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशः तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्निति एवमिव वै संवायुमेव प्रशशँस तस्माद्वायुरेव व्यष्टिर्वायुरेव समष्टिः । अपपुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ ३ ॥

इतिबृहदारण्यकोपनिषदि तृतीयाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

---

स एवं भुज्युनापृष्ट याज्ञवल्क्योह उवाच । स सुधन्वांगिरसः तुभ्यमुवाच वै । अहन्तु ब्रवीमि । ते पारीक्षिताः तत्तत्र आगच्छन्वै क यत्र शताश्वमेधयाजिनो गच्छन्ति तत्तं लोकं ते परिक्षिता आच्छन्निति स गन्धर्वो युष्मभ्यमुवाच वै स उक्तवान् किल पुनः पृच्छति केति । तेषां स्थानं वक्तुं भुवनकोशपरिमाणमाह । द्वात्रिंशतमिति । द्वात्रिंशतं द्वात्रिंशत् देवरथः सूर्यरथस्तस्य गत्याऽह्नो यावद्देशपरिमाणं परिच्छिद्यते तद्देवरथाह्नयं तद्द्वात्रिंशद्गुणितदेवरथाह्नयानि तत्परिमाणोऽयं लोकालोकगिरिपरिवृतो देशः । तं लोकं समन्ततो द्विगुणा पृथिवीपर्येति । तां समन्तमिति । तां महापृथिवीं द्विगुणः समुद्रः पर्येति यंघनोदकमाचक्षते पौराणिकाः । तत्राश्वमेधलोकमार्गविवरपरिमाणमुच्यते । तद्यावतीति । यावती क्षुरस्य धारा अग्रम् । यावद्वामक्षिकायाः पात्रं तावान् । तत्तत्र सौवर्णाण्डे अन्तरेणाकाशोऽस्ति । तेन मार्गेण इन्द्रः सपर्णो भूत्वा वाहनं भूत्वा तान् पारीक्षितान् वायवे प्रायच्छत्

किञ्चित्प्रदेशमिन्द्र एव वायवे दत्तवानित्यर्थः। आत्मनीति। आत्मनि धित्वा आत्मनि स्थापयित्वा यत्र ब्रह्मलोकेऽश्वमेधयाजिनो गच्छन्ति तत्रागमन्। ततश्चेन्द्रस्यापि प्रवेशयोग्यरन्ध्रद्वारा वायुः पारक्षितांश्च चतुर्मुखलोकमगमदित्यर्थः। एवं याज्ञवल्क्य उक्त्वाऽस्योक्तस्य सम्वादं दर्शयति-एवमिवेति। एवं खलु स गन्धर्वो वायुं स्तुतवानित्यर्थः। तस्मादिति। पञ्चीकृतव्यष्ट्यात्मकब्रह्मलोकतदधस्तनलोकसञ्चारितया सूत्रात्मप्राणरूपेण सर्वनिर्वाहकतया व्यष्टिसमष्टिरूप इत्यर्थः। एवं वेत्तुः फलमाह। अपेति।

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां तृतीयाध्यायस्य तृतीयं ब्राह्मणम्॥ ३॥

---

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ। याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति एष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरः। यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः॥ १॥

भुज्यूपरमानन्तरमेनं याज्ञवल्क्यं चक्रस्यापत्यं चाक्रायणः उषस्तनामा पप्रच्छ याज्ञवल्क्येति सम्बोध्योवाच अपरोक्षादपरोक्षमित्यर्थः सुपांसुलक पा० सू० ७।१।३९। इत्यादिनाऽऽदादेशः। अपरोक्षत्वं नाम सर्वदेशकालसन्निहितत्वम्। 'ब्रह्म' सर्वगुणपरिपूर्णम्। यश्चात्मा सर्वेषां नियन्ता सर्वान्तरः। यस्तादृशं वस्तु मे व्याचक्ष्व विशेषेण वेति। उत्तरमाह एष इति। त य आत्मा स एव सर्वान्तर्यामी। अपरोक्षं मुख्यं ब्रह्म द्रष्टव्यश्चेत्यर्थः पुनः पृच्छति। कतमेति। सर्वान्तर एष इत्युक्तो यः स कतमः क इत्यर्थः। उत्तरयति। यः प्राणेनेति। प्राणादिव्यापारकर्त्ता यः स सर्वान्तर आत्मेत्यर्थः॥१॥

सहोवाचोषस्तश्चाक्रायणः । यथा विब्रूयादसौ गौर-सावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्-ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वा-न्तरः कतमो याज्ञवल्क्य सर्वान्तरः। न दृष्टेर्द्रष्टारं पश्ये-र्नश्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञाते-र्विज्ञातारं विजानीयाः ॥ एष त आत्मा सर्वान्तरः। अतो-ऽन्यदार्त्तम् । ततो होषस्तश्चक्रायण उपरराम ॥२॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

का गौः कोऽश्व इतिपृष्टे असौ चतुष्पात् गौरसौ चतुष्पादश्व यथा कश्चिद् ब्रूयात् वदेत् । एवमेव त्वया व्यपदिष्टमुक्तम् । यत्साक्षा-दपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व इति मामकप्रश्न एष त आत्मा सर्वान्तरो यः प्राणेन प्राणिति इति प्रणनादिकर्त्तुर्मदात्मनो जीवस्य सर्वान्तरत्वकथनं नोपपद्यते । अतः कतमो याज्ञवल्क्य सर्वा-न्तरः स तावद्वक्तव्य इत्यर्थः । समाधत्ते । न दृष्टेरिति । दृष्टेर्द्रष्टारमिति पाकंपचतीतिवन्निर्देशः। दृष्टेः दृष्टारं कर्त्तारं दृष्टिभेदमकृत्वा दृष्टिमात्रस्य कर्तारं न पश्येः । दृष्टेरिति कर्मणि षष्ठी । सा दृष्टिः क्रियमाणा घटवत्कर्म भवति । द्रष्टारमिति तृजन्तेन द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे तेनासौ दृष्टेर्द्रष्टा दृष्टेः कर्त्ता एवमुत्तरत्रापि । दर्शनश्रवणमनननिदि-ध्यासनानां कर्त्ता प्रत्यगात्मा स न द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि-ध्यासितव्यः । एष त इति । दर्शनादिकर्त्तुर्जीवादन्य एव दर्शनादिकर्मभूत-सर्वान्तरआत्मा परमात्मेत्यर्थः । अतोऽन्यदार्त्तम् । अतः परमात्मनो-ऽन्यद्व्यतिरिक्तं त्वदभिमतं प्राणितृत्वादिमज्जीवजातमार्तं दुःखीत्यर्थः ।

• इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकायां टीकायां तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः। योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथभिक्षाचर्यं चरन्ति।**

अथोषस्तोपरमानन्तरं कहोलो नामतः कुषीतकस्यापत्यं कौषीतकेयः। एनं याज्ञवल्क्यम् पप्रच्छ। याज्ञवल्क्येतिसम्बोध्योवाच यदेव साक्षादपरोक्षाद्ब्रह्म य एवात्मा सर्वान्तरः नत्वन्ये ब्रह्मादयो मुक्ता अपि तमेव मुक्तवैलक्षण्यविशिष्टं परमात्मानं मे व्याचक्ष्वेति। मुक्तपरमात्मनोर्वैलक्षण्यं वक्तुं परमात्मस्वरूपं तावदाह। एष इति। ते आत्मा नियामकः सर्वान्तर एषः। एष इति क इति पृच्छति कतम इति। उत्तरमाह। य इति। यः परमात्मा अशनायाऽशितुमिच्छा च पिपासा पातुमिच्छाचेत्यशनायापिपासे शोकं दुःखं मोहं मिथ्याज्ञानं जराम-त्येति स्वत एवाद्यनन्तकालेष्वतिक्रम्य वर्त्तते। एवं परमात्मस्वरूपं निरूप्य मुक्तस्वरूपमाह। एतमिति। एतं साक्षादपरोक्षत्वाशनायाद्यतीतत्वविशेषण विशिष्टं तं परमात्मानं विदित्वापरोक्षीकृत्यैव तत्प्रसाददेव पश्चात् पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थायैषणात्रयं हित्वा विरज्याथानन्तरं देहयात्रार्थं भिक्षाटनं कुर्वन्तीत्यर्थः।

**याह्यैव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा।**

किं तिस्रोप्येषणा परस्परं समप्रधानभावोपेताः नेतिभावेनाह। याहीति। या वित्तैषणा सैव पुत्रैषणा वित्तस्य प्रायः पुत्रार्थत्वात्। वित्तैषणा पुत्रैषणायामन्तर्भवति। यापुत्रैषणा या च वित्तैषणा सा लोकैषणापुत्रवित्तयोः स्वर्गादिलोकसाधनत्वात्। पुत्रैषणावित्तैषणयो-र्लोकैषणायामन्तर्भाव इत्यर्थ॥ ३॥

उभे ह्येते एषणे एव भवतः । तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यञ्च निर्विद्याथ-मुनिः । अमौनं मौनञ्च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव अतोऽन्यदार्त्तम् । ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥

इतिबृहदारण्यकोपनिषदि तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

ननु स्वर्गादिलोकस्य यागादिना प्रार्थ्यमानत्वात् तदेषणाय व्युत्थायेति कथमुक्तमित्यतस्तस्याऽपि दुःखरूपत्वात् ततोव्युत्थानं युज्यत इतिदर्शयितुमाह । उभ इति । पुत्रवित्तैषणे दृष्टविषयत्वात् एका अदृष्टविषयिणी लोकैषणा चापरेति । उभे दृष्टादृष्टविषये हि यस्मादेषणे तस्मादुःखस्वरूप एवेत्यर्थः । एवं यस्मात् ब्रह्मापरोक्ष-ज्ञानात मोक्षस्तस्माद्ब्राह्मणो ब्राह्मणत्वयोग्यः । पाण्डित्यमागमजं ज्ञानं प्राप्नुयात । एवं पाण्डित्यं निर्विद्य लब्धा बाल्येन युक्ति-बलसहितज्ञानेन तिष्ठासेत् स्थातुमिच्छेत । एवं बाल्यं पाण्डित्यञ्च निर्विद्याथमुनिर्ध्यानी भवति । एवं मौनमुपासनजं ज्ञानम् । चशब्दा-च्छ्रवणमनने च । अमौनं मौनादन्यत् । पूर्वनिर्दिष्टं बाल्यपाण्डि-त्यलक्षणं मौनञ्च निर्विद्याथ ब्राह्मणो ब्रह्मविद्भवति लब्धनिदिध्या-सनो भवतीत्यर्थः । स ब्राह्मणः केनेति । लब्धनिदिध्यासनो ब्रह्म-विदुक्तोपायादन्येन केन स्यादितिप्रश्नः । उत्तरम् । येनस्यात्तेनेदृश एव येन मौनपर्य्यन्तेन ब्राह्मणः स्यादित्युक्तं तेनैवैदृशः स्यान्नकेनाप्य-न्येनोपायेन । अतोऽन्यदार्त्तम् । अस्मात्परमात्मनो यदन्यत्प्राणि-जातं तत् दुःखीत्यर्थः ॥ १ ॥

बाल्येन तिष्ठासेदित्यत्र किं बालचरितं बाल्यं विदुषोपादेयम् । उत जितेन्द्रियतयादम्भदर्पादिराहित्यं भावशुद्धिमात्रं बाल्यमिति विषये तिष्ठन् मूत्रपूरीषादिकर्मबाल्यमितिपूर्वपक्षे प्राप्त उच्यते ।

अनाविष्कुर्वन्नन्वयात् । ब्र० सू० । ३ । ४ । ४१ ॥

बालो यथा स्वाभिमानाद्यनाविष्कुर्वन् दम्भदर्पादिरहितो वर्त्तते तथा विद्वानपि पाडित्यप्रयुक्तस्वमहात्म्याद्यनाविष्कुर्वन् दम्भदर्पादिराहित्येन बाल्येन वर्त्तेत कुतः । अन्वयात् तस्यैव विद्यान्वययोग्यत्वात् । कामचारादेस्तु नाविरतो दुश्चरितान्नशान्तो नासमाहितः । नशान्तमानसो वाऽपि प्रज्ञानेनैनमवाप्नुयादित्यादिभिर्विद्योत्पत्तिविरोधित्वावगमात् । तत्रैव तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेन् बाल्यं पाण्डित्यं निर्विद्याथमुनिरमौनं मौनञ्च निर्विद्याथ ब्राह्मण इति तत्र संशयः किमिह बाल्यपाण्डित्यवन्मौनमपि विधीयते १ आहोस्विदनूद्यत इति मौनं ज्ञानं तद्धिपाण्डित्यं निर्विद्येतिगतमेव मुनिनित्यनूद्यत इतिपूर्वपक्षेप्राप्त उच्यते ।

सह कार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विद्ध्यादिवत् ।
ब्र० सू० । ३ । ४ । ४६ ॥

तद्वतो विद्यावतस्तृतीयं बाल्यपाण्डित्ययोरपेक्षया तृतीयं साधनं मौनं विधीयते । एतदेवाह । सहकार्यन्तरविधिरिति । ब्रह्मसाक्षात्कारे साध्ये पाण्डित्यं बाल्यञ्च सहकारि तदपेक्षया सहकार्य्यन्तरं मौनं तस्यविधिरेव मुनिरिति । विध्यादिवत् । विधीयते उपकारितयेतिविधिः । यज्ञदानादिरूपः सर्वाश्रमधर्मः शमादिरूपश्च । आदिशब्देन पाण्डित्यं बाल्यञ्च गृह्यते तद्वत् । यत्तु मौनं ज्ञानं तद्धि पाण्डित्यं निर्विद्येति गतमेव मुनिरित्यनूद्यते इत्युक्तं तत्राह । पक्षेणेति । मुनिशब्दस्य "मुनीनामप्यहंव्यास" इत्यादौ प्रकृष्टमननशीले पक्षेण प्रसिद्धेः पाण्डित्यात्तृतीयं मौनमर्थान्तरमेवेत्यर्थः । "अथ भिक्षाचर्यं चरन्ती" इतिभिक्षाचरणपूर्वकः, "अथमुनिरितिमौनोपदेशः सर्वाश्रमधर्म प्रदर्शनार्थ इत्याह ।

मौनवदितरेषामप्युपदेशात् । ब्र० सू० । ३ । ४ । ४८ ॥

तथेहापि । ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणा-

याश्च व्युत्थायाथभिक्षुचर्य्यां चरन्तीति भिक्षाचरणपूर्वको मौनो-पदेशः सर्वाश्रमधर्मप्रदर्शनार्थः । कस्मात् यथा मौनमुपदिष्टं तद्वि-दितरेषां नैष्ठिकादिधर्माणामपि । त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचर्य्याचार्यकुलवासी तृतीयो-ऽत्यन्तमात्मामाचार्यकुलेऽवसादयन् सर्वे एते पुण्यलोका भवन्ति ब्रह्म-संस्थोऽमृतत्वमेत्यादावुपदेशात् । तस्मात्पाण्डित्यं बाल्यं तथैव मौन-श्चात्रविधीयत इति सिद्धम् ॥ प्रकृतमनुसरामः । उषस्तकहोलब्राह्मण-द्वयं गुणोपसंहारे ।

"अन्तराभूतग्रामवत्स्यात्मनोऽन्यथाभेदानुपपत्तिरितिचेन्नोपदेशा-न्तरवत् । ब्र० सू० । ३ । ३ । ३५ ॥

इत्यत्र चिन्तितम् तथाहि—किमत्र विद्याभेदः उत नेति । भेद इति कुतः प्रतिवचनभेदेन रूपभेदात् । पूर्वत्र प्राणनादिहेतुः प्रत्यगात्मा सर्वान्तरत्वेनोच्यते उत्तरत्राशनायाद्यतीतः परमात्मेत्युपा-सनाभेदाद्रूपं भिद्यते । इत्येवमाशङ्क्य परिहरति । अन्तरा य आत्मा सर्वान्तर उषस्तप्रश्नो भूतग्रामवतः स्वात्मनः प्रत्यगात्मन इत्यभ्युपगन्तव्यः । सर्वस्य देहादेरन्तरात्मत्वेन तस्य सर्वान्तरत्वोपपत्तेः । अन्यथा प्रश्नस्य मुख्यान्तरात्मपरमात्मपरत्वे प्रतिवचनभेदानुपपत्तिः पर-मात्मनश्चाशनायादिरहितत्वात प्राणितृत्वापानितृत्वाद्यसम्भवेन प्रति-वचनस्य तत्परत्वासम्भवादिति चेन्नेति न प्रश्नद्वयं प्रतिवचनञ्च भि-द्यते तयोरुभयत्र परमात्मविषयत्वात । तथाहि प्रथमप्रश्नः पर-मात्मविषय एव । तत्र ब्रह्मशब्दस्य कचिज्जीवादिष्वपि गौण्या वृत्त्या प्रयोगो दृश्यते तद्व्यावृत्त्यर्थं यत्साक्षादिति विशेषणम् । अपरोक्षत्व-मपि "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यनन्तत्वेनावगतस्य परमात्मन एव सर्व-देशकालसम्बन्धित्वेनोपपद्यते । सर्वान्तरत्वमपि सर्वान्तर्यामिणः परमात्मन एवान्तर्यामिब्राह्मणादवगतम् । तथैव प्रतिवचनमपि तद्वि-षयमेव । मुख्यप्राणनकर्तृत्वं हि परमात्मन एव । जीवस्य सुषु-प्तिमूर्च्छादौ प्राणनादिकं प्रति कर्तृत्वादर्शनात् । एवमजानतोषस्तेन

प्रतिवचनस्य प्रत्यगात्मसाधारणत्वं मन्वानेनासन्तोषात् पुनः पृष्टं प्रति तद्व्यावृत्तं मुख्यं सर्वप्राणिप्राणनादिकर्त्तारं परमात्मानमाह--न दृष्टेर्द्रष्टारमित्यादिना। करणाधीनदर्शनश्रवणादिकर्त्ता प्रत्यगात्मा प्राणिनादिकर्तृत्वेनोक्त इति न मन्वीथाः सुषुप्त्यादौ तस्य तदभावात्। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति परमात्मन्येव तच्छ्रवणात्। एवमुत्तरत्र प्रश्नप्रतिवचने अपि परमात्मविषये। अशनायाद्यतिक्रमणस्य तदसाधारणत्वात्। तत्र दृष्टान्तः, उपदेशान्तरवदिति। 'यथा स्तब्धोऽस्युततमादेशमप्राक्ष्म' इति प्रक्रान्तायामेकस्यामेव सद्विद्यायाम् भगवांस्त्वेव मेव तद्ब्रवीतु भूय एव मा भगवन्विज्ञापयतु। इति प्रश्नावृत्तिः प्रतिवचनभेदश्च वेद्यस्य महात्म्यविशेषप्रतिपादनपरतया दृश्यते। तद्वदिहापि वेद्यस्याशनायाद्यतीतत्व प्रतिपादनाय प्रश्नप्रतिवचनयोर्द्विराम्नातम्। अत एकस्यैव सर्वान्तर्यामिणो निखिलप्राणिप्राणनकारणत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपाभेदाद्विद्यैक्यम्। नन्वेवमप्युपास्यगुणस्य प्राणितृत्वाशनायाद्यतीतत्वस्य भेदेन रूपभेदात् प्रष्टृभेदाच्च विद्याभेदोऽवर्जनीय इत्यशङ्क्याह—

"व्यतिहारो विशिषन्ति हीतरवत्। ब्र० सू०। ३। ३। ३६॥

द्वयोः पृष्ट्रोः प्रश्नस्यैकरूपत्वेन सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे निश्चिते सत्येकस्मिन्नेवोपास्ये ब्रह्मण्युषस्तकहोलयोरितरेतरं बुद्धेर्व्यतिहारो व्यत्ययः कार्यः। उषस्तस्य या सर्वान्तरस्य ब्रह्मणः प्राणनादिहेतुत्वविषया बुद्धिः सा कहोलेनापि कार्या। तथाऽशनायाद्यतीतत्वविषयाबुद्धिरुषस्तेनापीति एवं सति ब्रह्मणो जीवव्यावृत्तिर्निश्चिता भवति। विशिंषन्ति ह्युभयत्र याज्ञवल्क्य प्रतिवचनान्येकं सर्वान्तरात्मानमेवोपास्यम्। इतरवत्। यथेतरत्र सद्विद्यायां सर्वाणि प्रतिवचनान्येकमेव सच्छब्दवाच्यं परं ब्रह्म प्रतिपादयन्ति तद्वदिति।

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिका टीकायां तृतीयाध्यायस्य पञ्चमं ब्राह्मणम्॥ ५॥

अथ हैनं गार्गी वाचक्नवी पप्रच्छ । याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतञ्च प्रोतञ्चेति कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति । वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति ॥

अथ कहोलोपरमानन्तरं गार्गी गर्गगोत्रोत्पन्ना वाचक्नवी वचक्नोरपत्ये स्त्री वाचक्नवी एनं याज्ञवल्क्यं पप्रच्छ यदिदं पार्थिवं सर्वं धातुजातं कारणभूतास्वप्सु प्रोतं च दीर्घपटतन्तुवदोतं तिर्यक्तन्तुवत्प्रोतञ्च अप्सु प्रोतत्वाभावे पार्थिवो धातुः सक्तुमुष्टिवद्विशीर्येत । ता आपः कस्मिन्नोताः प्रोताश्चेति उत्तरमाह वायाविति ॥

कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्चप्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्चप्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति,प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्चप्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्धा व्यपप्तत् ॥ अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽति प्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

अति अतिक्रम्य माप्राक्षीः ते मूर्धाशिरोमाव्यपप्तन्। तव मूर्धा-शिरो विस्पष्टं पतेत्। देवतायाः स्व प्रश्नः आगमविषयस्तत् प्रश्नविषय-मतिक्रान्तो गार्ग्याः प्रश्न अनुमानिकत्वात्स यस्या देवतायाः प्रश्नः साऽन-तिप्रश्न्या नातिप्रश्न्याऽनतिप्रश्न्या स्वप्रश्नाविषयैव केवलागमग्म्येत्यर्थः। तामनतिप्रश्न्यां वै देवतामतिपृच्छसि अतो गार्गि माऽतिप्राक्षीर्मर्त्तुं चेन्नेच्छसि ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिका टीकायां तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

**अथहैनमुद्दालक आरुणः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्या-सीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्क-वन्ध आथर्वण इति सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्योनाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकञ्च सर्वाणि भूतानि चाऽन्तरो यमयतीति ॥**

अथ हैनमुद्दालको नामत अरुणस्यापत्यमारुणिः पप्रच्छ स्वस्य सूत्रादिविद्याया गुरूपदेशपूर्वकत्वं ज्ञापयितुमाख्यायिकामारचयति-मद्रेष्विति। मद्रेषु देशेषु काप्यस्य कपिगोत्रोत्पन्नस्य पतञ्चलनाम्नो गृहेषु यज्ञमधीयाना याज्ञिकविद्याभ्यासं कुर्वाणा असाम। तस्य पतञ्चलस्य भार्या गन्धर्वेण गृहीता तदाविष्टासीत्। तं गन्धर्वंपतञ्चल-सहिता वयं याज्ञिकास्त्वंकोसीत्यपृच्छाम। एवं पृष्टः स गन्धर्वः।

अस्मभ्यमब्रवबीत् किं अहं नाम्ना कवन्धः । अथर्वणोऽपत्यमाथर्वण-इति । स गन्धर्वः काप्यं पतञ्चलं याज्ञिकांश्च प्रत्यब्रवीत् । हे काप्य तत्सूत्रं त्वं वेत्थ जानीषे किं । किंतत्सूत्रमित्यतस्तद्विशिनष्टि । येनेति । येन सूत्रेणायं लोकः भूरादिलोकः परश्च लोक अन्तरिक्षादि-लोकः सर्वाणि भूतानि संदृब्धानि सङ्गतानि तदाधारतयावस्थितानि भवन्तीति । स पृष्टः काप्यः पतञ्चलो हेभगवन् अहं तत्सूत्रं न वेदेत्य-ब्रवीत् । स एवमुक्तो गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च पुनरब्रवीत् । हेकाप्य त्वं तमन्तर्यामिणं वेत्थ नु किं कोसावन्तर्यामी कीदृशश्च स-इत्यत आह--य इति । य इमं लोकं परञ्चलोकं सर्वाणि भूतानि अन्त-रो यमयति । दारुयन्त्रमिव भ्रामयति स्वं स्वमुचितव्यापारं कारयतीति सोऽब्रवीदेवमुक्तः पतञ्चलः काप्यो नाहं तं जाने भगवन्निति सम्पूज-यन्नाह । सोब्रवीत् ।

सोऽब्रवीत्पतश्चलः काप्यो नाहं तं भगवन्वेदेति सोऽ-ब्रवीत्पतञ्चलं काप्यं याज्ञिकांश्च यो वै तत्काप्यसूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित् लोकवित् सदेववित्सवेदवित् सभूतवित्स आत्मवित् ससर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्यसूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवी-रुदसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तञ्चान्तर्यामिणमिति यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥

पुनर्गन्धर्वः सूत्रतदन्तर्यामिणोः स्वरूपवेत्तुः फलमाह । स इति । हेकाप्य यो वाऽधिकारी एतत्सूत्रं तमन्तर्यामिणञ्च इति येनायं लोक इति । य इमं लोकमिति स्वप्रतिज्ञातप्रकारेण विद्यात् स ब्रह्मवित् । स पूर्णवित् । सलोकांश्च भूरादीनन्तर्यामिणा नियम्यमानान् लोकान्वेति

स दवांश्चाग्न्यादींश्च लोकिनो जानाति वेदांश्च सर्वप्रमाणभूतान्वेत्ति भूतानि ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति स आत्मानञ्च कर्तृत्वभोक्तृत्वविशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति सर्वञ्च जगत्तथाभूतं वेत्तीत्येवं स्तुते सूत्रान्तर्यामिविज्ञाने प्रलब्धः काप्योऽभिमुखीभूतो वयञ्च तेभ्यश्चास्मभ्यमभिमुखीभूतेभ्योऽब्रवीद् गन्धर्वः सूत्रमन्तर्यामिणञ्च । तदहं सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन्। तच्चेद्याज्ञवल्क्यसूत्रं तं चान्तर्यामिणमविद्वांश्चेदब्रह्मवित् सन् यदि ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजसउन्नयसि त्वमन्यायेन ततो मच्छापदग्धस्य मूर्धा शिरस्ते तव विस्पष्टं पतिष्यति। एवमुक्तो याज्ञवल्क्य आह। वेद जानाम्यहं हेगौतमेति गोत्रतस्तत्सूत्रं यद्गन्धर्वस्तुभ्यमुक्तवान् यञ्चान्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयं तञ्चान्तर्यामिणं वेदाहमित्युक्त प्रत्याह। गौतमो यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात् कथं वेद वेदेत्यात्मानं श्लाघयन् किन्तेन गर्जितेन कार्येण दर्शय यथावेत्थ तथाब्रूहीति ॥१॥

**स होवाच वायुर्वै गोतम तत्सूत्रं वायुना वै गौतमसूत्रेणायं लोकः परश्चलोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतमपुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि गौतमसूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥२॥**

एवमुक्तस्सयाज्ञवल्क्य उवाच हेगौतम यत्त्वया पृष्टं तत्सूत्रं वायुरेव सूत्रस्योक्तलक्षणं वायौ दर्शयति—वायुनेति। वायोः सर्वलोकाधारत्वमनुभवारूढं करोति तस्मादिति। हेगौतम तस्माद्वै वायोः सर्वाधारत्वादेव प्रेतं मृतं वायुना परित्यक्तं पुरुषमाहुः। किमस्य प्रेतस्याङ्गानि करचरणादीनि व्यस्रंसिषत विशीर्णान्यभवन्निति। सूत्रापगमे मण्यादीनां प्रोतानामवस्रंसनदृष्टमेवं वायुः सूत्रं तस्मिन् मणिवत्प्रोतानि यद्यस्या-

ङ्गानिस्युस्ततो युक्तमेव तद्वाय्ववगमेऽवस्रंसनमङ्गानाम् । अतो वायुना हिगौतमसूत्रेण संदृब्धानि भवन्तीति निगमयति । एवमेवैतद्याज्ञवल्क्य ? सम्यगुक्तं सूत्रं तदन्तर्गतं त्विदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिणं ब्रूहीत्युक्त आह ॥ २ ॥

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा ऽन्तर्याम्यमृतः ॥ ३ ॥**

यः पृथिव्यां स्थितः सोन्तर्यामी । सर्वपृथिव्यां तिष्ठति सर्वत्र प्रसङ्गो माभूदिति विशिनष्टि । पृथिव्या अन्तरोऽभ्यन्तरः । तत्रैतत स्यात् पृथिवीदेवतैवान्तर्यामीत्यत आह यमन्तर्यामिणं पृथिवी देवतापि न वेद मय्यन्यः कश्चिद्वर्त्तत इति । यस्य पृथिवी शरीरं य ईदृगीश्वरोऽन्तःप्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति एषोऽन्तर्यामी ते अमृत आत्मा निरुपाधिकामृतत्वशालीआत्मेत्यर्थः । अत्र त आत्मेति व्यतिरेकनिर्देशादन्तर्यामिणो जीवस्य व्यतिरेकः सिद्धोऽमृतत्वविशेषणाच्च तद्विशेषणं जीवव्यावृत्यर्थम् । अन्तर्यामी त आत्मेत्युक्त आत्मशब्दस्य स्वरूपवचनत्वशङ्कयाजीवव्यावृत्तिर्न प्राप्नोतीति हि अमृत इत्युक्तम् । निरुपाधिकामृतत्वशाली आत्मा परमात्मेत्यर्थः ।

**योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याऽऽपः शरीरं योऽपोऽन्तरो यमत्येष त आत्मा ऽन्तर्याम्यमृतः ॥ ४ ॥**

अप्सु स्थितस्तदन्तर्गतस्तदवेद्यतच्छरीरकःसन् याऽन्तः प्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति एषोऽन्तर्यामी ते अमृत आत्मा । एवमुत्तरत्रापि ।

**योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥५॥**

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरोयमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥

यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥७॥ यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥

यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरोयमयत्येष त आत्माऽन्तर्याम्यमृतः॥१०॥ यश्चन्द्रतारके तिष्ठंश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥१२॥

यस्तमसि तिष्ठंस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥१३॥ यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥१४॥

यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥

यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥

यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥

यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं चक्षुर्नवेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥

यः श्रोत्रे तिष्ठञ् च्छ्रोत्रादन्तरो यं श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १९ ॥

यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः॥२०॥

यस्त्वचि तिष्ठंस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥

यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥

यो रेतसि तिष्ठन् रेतसोन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽतर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता-

नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽन्यदार्त्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

इति वृहदारण्यकोपनिषदि तृतीयाध्यायस्य सप्तमं ब्राह्मणम् ॥ ॥

---

अत्र विज्ञानशब्द आत्मपरः समानप्रकरणे माध्यन्दिनशाखायां विज्ञानशब्दस्थान, आत्मनि तिष्ठन्नित्यात्मशब्देन निर्देशदर्शनात् । द्रष्टृत्वं रूपसाक्षात्कारवत्त्वं नतु चक्षुर्जन्यज्ञानवत्त्वं तस्य-परमात्मन्यसम्भवात् । श्रोतृत्वं शब्दसाक्षात्कारवत्त्वं । मन्तृत्वं मन्तव्यविषयकसाक्षात्कर्तृत्वम् । विज्ञातृत्वं विज्ञानशब्दितनिदिध्यासनविषयसाक्षात्कर्तृत्वम् । द्रष्टृत्वादिकं जीवस्याप्यस्तीत्यदृष्टत्वादिकं विशेषितं, तादृशश्च न जीवस्यास्तीति भावः । अत्र द्रष्टृत्वादावुपाध्यनुक्तेर्निरुपाधिदृष्टृत्वमर्थसिद्धम् । नान्यतोऽस्ति द्रष्टेति । अन्यशब्दादेः सर्वनाम्नः पूर्वनिर्दिष्टसदृशान्यपरत्वस्य "समाने पूर्ववत्त्वात्"

जै० न्या० । ७ । १ । १३ ॥

इति साप्तमिकाधिकरणे व्यवस्थितत्वादत्राप्यन्यशब्देन पूर्वनिर्दिष्टादृष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारादिति मत्तोऽन्यस्तत्सदृशो द्रष्टा नास्तीत्यर्थः । एवमुत्तरत्रापि । इदञ्च ब्राह्मणमधिकृत्य समन्वयाध्याये चिन्तितम् । यः पृथिव्यां तिष्ठन् पृथिव्यान्तर इत्यारभ्य एष त आत्मान्तर्याम्यमृत इति । एतद्वाक्यैर्बोध्यमानः कश्चिदन्तरो यमयिताऽन्तर्यामी किं देवतात्मा किम्वा प्रत्यगात्मा । अहोस्वित सववेदैकवेद्यः परमात्मेति विचिकित्सा । देवतात्मा प्रत्येतव्यस्तस्य नियन्तृत्वोपपन्नत्वात् प्रत्यगात्मा वा वाक्यशेषेण तत्र द्रष्टृत्वादिधर्माणां श्रूयमाणत्वात् द्रष्ट्रन्तरनिषेधाच्चेतिप्राप्ते—उच्यते । अन्तर्याम्यधिदेवादिलोकादिषु तद्धर्मव्यपदेशात् ।१।२।१६॥ यो हि पृथिव्यादिष्वन्तर्यामित्वेनोच्यमानः स परमात्मैव स्यान्नान्यः कुतः, तद्धर्मव्यपदेशात् । तस्य परमात्मनो धर्माः सर्वात्मत्व-

सत्यसङ्कल्पत्वयमयितृत्वादयः श्रुतिषु निर्दिश्यमानास्तस्मिन्नेवोपपद्यन्ते नन्वत्र यदि देवतायाः परिग्रहस्तदा पृथिवी न वेदेति पृथ्वीदेवताविज्ञेयत्वोक्त्यनुपपत्तेः । यदि प्रत्यगात्मनो ग्रहणं तदा त इतिपष्ठ्यनुपपत्तेः । पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादि श्रुतेः । द्रष्टृत्वादेरपि परमात्मनि सम्भवात् । ननु नान्यतोऽस्ति द्रष्टा नान्यतोऽस्ति श्रोता नान्यतोऽस्ति मन्ता इति श्रुतौ द्रष्ट्रन्तरनिषेधात् कथं परमात्मनोऽन्तर्यामित्वमितिचेन्न, यतः यं पृथिवी न वेद द्रष्टुर्द्रष्टाऽश्रुतः श्रोता इत्यादिनान्यतोऽस्तीति वाक्ये अन्यशब्दादेस्सर्वनाम्नः पूर्वनिर्दिष्टसदृशान्यपरत्वस्य 'समाने पूर्ववत्त्वात्"

( जैमिनि सूत्रम् । ७ । १ । १३ ॥ )

इति साप्तमिकाधिकरणे व्यवस्थितत्वात् । अत्राप्यन्यशब्देन पूर्वनिर्दिष्टाद्रष्टृत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारमतोऽन्यस्तत्सदृशो द्रष्टा नास्तीत्यर्थः । अस्यां परिषदि यज्ञदत्त एव विद्वान्नान्य इत्युक्तेर्न विद्वद्मात्रं निषिध्यते किन्तु तत्सजातीयो द्वितीयो नास्तीति तथा प्रकृतेऽपि द्रष्टृन्तरं तत्सजातीयं निषिद्धयते, इत्यर्थः ॥ अदृष्ट्रत्वादिधर्मसम्पन्ने प्रधानेऽन्तर्याभिशब्दवाच्यत्वमाशङ्क्य परिहरति—

नच स्मार्त्तमतद्धर्माभिलाषात् । १ । २ । १९ ॥

स्मार्त्तं स्मृतिप्रतिपाद्यं प्रधानं नान्तर्यामिशब्देन व्यपदेशार्हं, कुतः, अतद्धर्माः स्वभावत एव सर्वात्मत्वसर्वनियन्तृत्वसर्वद्रष्टृत्वामृतत्वादयः श्रुतिभिर्निर्दिष्टा सर्वे धर्माः प्रधानेऽचेतने नोपपद्यन्ते । साङ्ख्यैरपि चेतनत्वद्रष्टृत्वादयो धर्माः प्रधाने नाप्युपगम्यन्ते, अतो नान्तर्यामित्वं प्रधानस्य वक्तुंशक्यमपि । चेतनत्वात्मत्वद्रष्टृत्वादिधर्माणां प्रत्यगात्मनि सत्त्वात्तस्यान्तर्यामित्वं स्यादिति चेत्तत्राह, "शारीरश्चोभयेऽपि भेदेनैनमधीयते" ।

( ब्र० सू० । १ । २ । २० ॥ )

शारीरो जीवात्मा नान्तर्यामित्वेन व्यवहर्त्तव्यः सर्वात्मत्वसर्व-

नियन्तृत्वसर्वज्ञत्वादिधर्माणामसत्वात् । हि यतः । उभयेपि काण्वा-माध्यन्दिनाश्च एनं शरीरं प्रत्यगात्मनोऽन्तर्यामिणो भेदेन पृथिव्या-दिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते यो विज्ञानेतिष्ठन्निति का-ण्वाः । य आत्मनि तिष्ठन्नितिमाध्यन्दिनाः । तस्मात् पृथिव्यादिवन्निय-म्यत्वमतोऽधिदेवादिष्वन्तर्यामी परमात्मैवेत्यर्थः ॥ विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च । यो विज्ञाने तिष्ठन् विज्ञानादन्तरः । ज्ञान-स्वरूपमत्यन्तनिर्मलं परमार्थतः ॥ इत्यादिश्रुतिस्मृतिभ्यो ज्ञानस्वरूपा एव प्रत्यगात्मान ज्ञाता" इति पूर्वपक्षे प्राप्त उच्यते--ज्ञोऽत-एव । २ । ३ । १८ ॥

अयमात्मा ज्ञ एव । ज्ञानस्वरूपत्वे सति ज्ञातृस्वरूप एव न पाणकल्पः, नापि ज्ञानमात्रः, कुत, अतएव श्रुतिभ्य एवेत्यर्थः । अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान्यश्यन् रमते न पश्यो मृत्युं पश्यति जानात्येवायं पुरुषः । एव हि द्रष्टा श्रोता घ्राता रसयितेत्यादिश्रुतिभ्यः । ज्ञातैवायमात्मा । ननु विभोरा-त्मनः स्वाभाविकज्ञानाश्रयत्वे तज्ज्ञानस्य सर्वपदार्थसम्बन्धात्सार्वज्ञं सर्वदा स्यादित्याशङ्क्याह—

उत्क्रान्तिगत्यागतीनाम् । ब्र॰ सू० । २ । ३ । १९ ॥

प्रत्यगात्माऽणुपरिणामक एव । कुतः उत्क्रान्तिगत्यागति-श्रवणात् । स यदास्माच्छरीरादुत्क्रामति सहैव तैः सर्वैरुत्काम-तीति । ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते गच्छन्ति" तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे" इति । नचैतासां विभुत्वं शक्यमुपपादयितुं यदि जीवानां विभुपरिणामत्वमिष्यते तदोत्क्रा-न्तिगत्यागतिभिश्रवणमेव न घटते तथात्वे उत्क्रान्त्यादिबोधकश्रुतयो व्याकुप्येरन्निति भावः । उत्क्रमणं मरणम् तच्चाचलतोऽपि सतः कर्मक्षये देहस्वाम्यनिवृत्त्या उपपद्यत इत्यत्राह—

स्वात्मना चोत्तरयोः । २ । ३ । २० ॥

चशब्दोऽवत्क्लृप्त्यर्थः यद्युत्क्रान्तेः शरीरवियोगरूपत्वेन सा कथञ्चित् स्थितेनापि सम्पाद्या स्यात् । उत्तरगत्यागत्योस्तु स्वात्मनैव सम्पाद्यत्वमिति विशेषः । किञ्च भूतकरणग्रामासंपरिष्वक्तस्यैव "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वाक्रामति । बृ०।४।४।१।।

शुक्रमादाय पुनरेति स्थानम् । बृ० ४ । ३ । ११ ।।

शरीरएवस्वात्मनैव गत्यागतिश्रवणाद्विभुत्वे च तयोरसम्भवान्न· विभुरात्मा ।। नाणु रतच्छ्रु तेरितिचेन्नेतराधिकारात् । २ । ३ । २१ ।।

ननु योऽयं विज्ञानमयः प्राणेष्विति प्राणसम्बन्धिनं जीवं प्रस्तुत्य स वा एष महातेज आत्मेति महत्वाम्नानान्नाणुरिति चेन्न तत्र जीवादितरस्य ब्रह्मणोऽधिकारात् । उपक्रमे जीपप्रस्तावे मध्ये यस्यानुवित्तः प्रतिवुद्ध आत्मेति परमात्मप्रतिपादनात् तदनुवन्धित्वाच्च महत्वाम्नानस्यचेत्यर्थः ।।

स्वशब्दोन्मानाभ्याञ्च । ब्र० सू० । २ । ३ । २२ ।।

एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन् प्राणः पञ्चधा संविवेशेति जीवस्य साक्षादणुत्वं श्रूयते वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्सविज्ञेयः स चानन्त्याय कल्प्यते । इति आराग्रमात्रो ह्यवरोऽपिदृष्टः इति च तस्याल्पपरिमाणत्वं श्रूयते ।। ननु प्रत्यगात्मनोऽणुत्वेसत्येकदेशस्थस्य कथं सकलदेहव्यापिवेदनोपलम्भ इत्यत्र मतान्तरेण परिहारमाह ।

अविरोधश्चन्दनवत । ब्र० सू० । २ । ३ । २३ ।।

यथाहरिचन्दनविन्दुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमाल्हादं जनयति तथैकदेशास्थितोऽपजीवस्सर्वाङ्गीणं सुखमनुभवति ।

अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमात हृदि हि ।
ब्र० सू० । २ । ३ । २४ ।।

ननु चन्दनदृष्टान्तेन नोक्तार्थः सम्पद्यते अविस्थितवैशे-

ब्यात । चन्दनविन्दोरवस्थितिर्देहैकदेशे प्रत्यक्षतो दृश्यते जीवस्यावस्थितिस्तु देहैकदेशे न ज्ञायते सर्वत्र चैतन्योपलब्धेरित्येवमुभयोरवस्थितिवैलक्षण्यादिति चेन्न कुतः । अभ्युपगमात् । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः । हृदि ह्ययमात्मेत्यादिश्रुतिभिः तस्यापि हृदयदेशे स्थित्यभ्युपगमात् । स्वमतेन परिहारमाह ।

गुणाद्वा लोकवत् । ब्र० सू० । २ । ३ । २५ ॥

वाशब्दो मतान्तरव्यावृत्यर्थः । जीवो हृदिस्थितोऽपि स्वगुणेन ज्ञानेन सकलदेहं व्याप्नोति । यथामणिद्युमणिर्वा एकदेशवर्त्तिभिः स्वालोकैरनेकदेशमित्यर्थः । नन्वात्मव्यतिरिक्तं ज्ञानं नास्तीत्यत्राह ।

व्यतिरेको गन्धवत् तथाहि दर्शयति ब्र० सू० । २ । ३ । २६ ॥

यथा गन्धस्य पृथिवीगुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकस्तथा जानामीत्यात्मगुणवत्त्वेनानुभूयमानस्य ज्ञानस्य जीवाद्व्यतिरेकः । अतएवात्मनश्चैतन्यगुणेनैव देहे व्याप्तिरित्यत्रश्रुतिमाह । तथाहीति । ज्ञानगुणेन सर्वदेहव्यापित्वमात्मनोदर्शयति श्रुतिः । "स एष इह प्रविष्ट आलोमभ्य आनखाग्रेभ्य" इति । ननु ज्ञानस्वरूप एवात्मा न ज्ञानगुणक इतिधर्मधर्मिभावो न युक्त इत्याशङ्क्याह ।

पृथगुपदेशात् । ब्र० सू० । २ । ३ । २७ ॥

प्रत्यगात्मज्ञानयोर्ज्ञानत्वाविशेषेऽपि धर्मधर्मिभावो युक्त एव प्रज्ञयाशरीरं समारुह्येति तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति जीवाद्विज्ञानस्य पृथगुपदेशात् । जानात्येवायं पुरुष इतिश्रुत्यापि तस्य ज्ञातृगुणत्वप्रदर्शनात् । नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतावपि ज्ञातृ ज्ञानयोः पार्थक्येन निर्देशाच्च ।

नन्‌ यदि प्रत्यगात्मनः स्वरूपतोऽणुत्वं स्वीक्रियते तदा नित्यं विभुं सर्वगतं सुसूक्ष्ममिति विभुत्वप्रतिपादिकाः श्रुतयो व्याकुप्ये-रन्निति शङ्कायामाह।

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् । ब्र०सू०।२।३।२८॥

तुशब्दः शङ्कानिरासार्थः स विभुज्ञानगुण एव सारो विभुत्व-व्यपदेशो मुख्यो यस्य तस्य भावस्तस्मात्तद्व्यपदेशः। विभुत्वव्यपदेशः तत्रैकदेशिदृष्टान्तमाह—प्राज्ञवदिति। यथा ब्रह्मणः प्राज्ञस्य ज्ञानमा-नन्दश्च सारभूतो गुण इति। सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेति व्यजानादिति ज्ञानानन्दव्यपदेशः। एवं प्रज्ञात्मनोऽपि विभुगुणत्वा-द्विभुत्वव्यपदेशो न स्वरूपेण, अन्यथा पूर्वोदाहृतानि श्रुतिस्मृति-सूत्राणि बाध्येरन्।

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् । ब्र० सू०।२।३।२९॥

यदि प्रत्यगात्मगुणानामागमापायित्वं स्यात् तदा विभुत्वव्य-पदेशो विरुद्ध्येत नत्वेवं तद्गुणानां यावदात्मवृत्तित्वात् तद्व्यपदेशो न विरुद्ध्यते यथा खण्डमुण्डादयो धर्माः यावत्स्वरूपं वर्त्तमानाः गोरितिव्यपदिश्यमाना दृश्यन्ते। ननु सुषुप्त्यादिषु ज्ञानाभावान्न ज्ञानस्य यावदात्मभावित्वं तत्राह॥

पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् । ब्र० सू०।२।३।३१॥

यथा सप्तधातुमये शरीरे सदा सन्नपि पुंस्त्वरूपसप्तमधातुः न बाल्ये यौवनेऽभिव्यज्यते। एवं सदासन्नैव ज्ञानगुणः सुषुप्तौ जागर इव नाभिव्यज्यते। अतश्च ज्ञानस्वरूपोऽणुरात्मा ज्ञाता। ननु विज्ञान-रूप एवात्मा विभुरस्तुतत्राह।

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोऽन्यथा ।

ब्र० सू० ।२।३।३२॥

ज्ञानस्वरूपो जीवः स च सर्वगत इतिस्वीकारे नित्यमेवोपलब्ध्य-नुपलब्धी प्रसज्येयाताम्। तयोरन्यतरनियमो वा उपलब्धिरेव वा

नित्यं स्यादनुपलब्धिरेवबेति । तथाहि सर्वज्ञतज्ज्ञानरूपं जीवस्वरूपं किमुपलब्धेरेवहेतुः । उत । अनुपलब्धेरेव अथवा उभयोरपि । आद्ये देहावच्छिन्नप्रदेश इव अन्यत्रापि तदुलब्धिस्स्यात् । द्वितीये देहावच्छिन्न-प्रदेशेऽपि तदुपलब्धिर्न स्यात् तृतीये सदोपलध्यनुपलब्धी परस्परविरुद्धे स्याताम् । अणोर्ज्ञानस्वरूपस्वात्मन इन्द्रियसम्प्रयोगादिकारणमहिम्ना कादाचित्धर्मभूतज्ञानव्यक्तिरिति सिद्धान्तपक्षे नानुपपत्तिरितिस्थितम् ।

तथा तत्रैव पादे कर्त्ताशास्त्रार्थवत्वात् । ब्र० सू० । २ । ३ । ३३ ॥

इति प्रतिपादितं जीवानां कर्तृत्वं न परायत्तं किन्तु स्वायत्तमेव अन्यथा विधिनिषेधशास्त्रयोरत्यन्तवैयर्थ्यम् स्यात् इतिप्राप्त उच्यते ।

परात्तु तच्छ्रुत्तेः ब्र० सू० । २ । ३ । ४० ॥

परमात्मायत्तमस्य कर्तृत्वम् । कुतः तच्छ्रुतेः कर्तृत्वादेरीश्वरा-धीनत्वश्रुतेः । एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्यो उन्नि-निषत इत्यादिश्रुतेः ॥ नन्वेवं विधिनिषेधशास्त्रानर्थक्यं तत्राह । कृत-प्रयत्नापेक्षस्तु विहितप्रतिषिद्धाद्वैयर्थ्यादिभ्यः । ब्र० सू० । परमात्मा जीवकृतं पूर्वप्रयत्नमपेक्ष्य तदनुमितिज्ञानेन प्रवर्त्तयति । एवं सति विधिप्रतिषेधावैयर्थ्यानुग्राहकत्वादिकं सिद्धयति ।

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां
तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—❦—

**अथ वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्तामिमं द्वौ प्रश्नौ प्रक्ष्यामि तौचेन्मे वक्ष्यति न जातु युष्माकमिमं कश्चि-द्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥**

**सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ वाणवन्तौ सपत्नातिव्या-**

धिनी हस्ते कृत्वोपतिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्था तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

अथोद्दालकोपरमानन्तरं वाचक्नवी वचक्नोर्दुहिता याज्ञवल्कस्य भार्या स्वयं पूर्वं पराजिततया सभ्यानुज्ञां विना विजिगीषुकथायां पुनः प्रश्नो न कर्त्तव्य इति ब्राह्मणानुज्ञार्थं ब्राह्मणान् प्रत्युवाच। किमिति हे ब्राह्मण भगवन्तः ज्ञानादिसम्पन्नाः। अहम् इमं याज्ञवल्क्यं पुनः द्वौ प्रश्नौ द्रष्टव्यौ प्रक्ष्यामि। हन्त यद्यनुमतिर्भवतामस्ति। अयं याज्ञवल्क्यः तौ द्रष्टव्यार्थौ मे मम चेत् यदि वक्ष्यति तदुत्तरं कथयिष्यति तर्हि जातु कदाचित् युष्माकं मध्ये कश्चित् कोऽपि अन्यतमः। इमं याज्ञवल्क्यं ब्रह्मोघं ब्रह्मवादिनं सन्तं न वै नैव जेता भवेदिति। अनेन ब्राह्मणानामेवं ज्ञापनरूपोपकारार्थं चायंप्रश्न इत्युक्तं भवति एवमुक्ता ब्राह्मणा हेगार्गि त्वं पृच्छेत्यनुज्ञां दत्तवन्तः ॥ १ ॥ एवं लब्धानुज्ञा गार्गी याज्ञवल्क्यं प्रत्युवाच ह किं, हे याज्ञवल्क्य अहं वै पूर्वं भीत्योपरताऽपि त्वा त्वां द्वौ प्रश्नौ पुनः प्रक्ष्यामीत्यनुषज्यते। ननु पूर्वकृतप्रश्नानामिवेतरयोरपि प्रश्नयोः सुशकोत्तरत्वे पुनः प्रश्नो व्यर्थ इत्यतः तयोःप्रश्नयोः दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकमाह। यथेति।यथा उग्रपुत्रः क्रूरपुत्रः शूरत्वसम्भावकमिदमुभयोर्विशेषणम्। काश्यांभवः काश्यो वा विदेहानां राजा वैदेहो वा। उज्ज्यं उत् उद्गता अवरोपिता ज्या यस्य तदुज्ज्यं धनुः। अधिज्यम् अध्यारोपिता ज्या यस्य तदधिज्यं कृत्वा द्वौ वाणवन्तौ अयोभयवन्तौ शराविति शेषः। वीदृशौ सपत्नातिव्याधिनौ सपत्नाः शत्रवः तावतिशयेन वेद्धुं शीलं ययोस्तौ सपत्नातिव्याधिनौ हस्ते कृत्वा उपेतिष्टेत् शत्रोस्समीपे उपतिष्ठेत् एवमेवाहं त्वां शरस्थानीयाम्यां द्वाभ्यां प्रश्नाभ्यां उपोदस्थां त्वत्समीपे त्तिष्ठेयं त्वं ब्रह्मिष्ट स्व प्रतितवांश्चेत् तर्हि तौ प्रश्नौ तयोः प्रश्नौ तयोः प्रश्नयोरुत्तरं मे मह्यं ब्रूहि एवमुक्तो याज्ञवल्क्यः पृच्छ गार्गीत्याह ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या

यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतश्च प्रोतञ्चेति ॥ ३ ॥

सा होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावा पृथिवी इमे भूतश्च भवच्च भविष्यच्चे त्याचक्षत आकाशे तदोतश्चप्रोतञ्चेति ॥ ४ ॥

सा एवमुक्ता गार्गी ह उवाच किं हे याज्ञवल्क्य दिवः द्युशब्दवाच्यात् स्वर्गलोकात् ऊर्ध्वमुपरि यदास्ति महर्लोकादिकं पृथिव्याः भूर्लोकात् अर्वाक् अधः यदस्ति अतलादिकं अन्तराऊर्ध्वार्वाक्शब्दवाच्ययोः पूर्वोक्तयोर्मध्ये वर्त्तमानं यत् य इमे प्रसिद्धे द्यावापृथिवीस्वर्गादिभूरादिके तत् जगत् भूतमतीतमिति भवच्च वर्त्तमानमिति भविष्यच्चेति यदाचक्षते विद्वांसस्तत्सर्वं कस्मिन्नोतं प्रोतञ्चेति ॥ ३ ॥ स एवं पृष्टो याज्ञवल्क्यः उक्तानुवादपूर्वकमुत्तरमुवाच । अत्राकाशब्देन नवायुमदम्बरं गृह्यते तस्य सर्वविकाराश्रयत्वाभावात् किन्त्वाव्याकृताकाशः एतञ्च क्षरमम्बरान्तधृतेः ब्र० सू० १।३।१८ इत्यत्रापि स्थितम् ।

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्यदिवो यदवाक् पृथिव्या यदन्तराद्यावापृथिवी इमे यद्भूतंच भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतश्च प्रोतञ्चेति ॥ ६ ॥

स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवीं इमे यद्भूतं भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतञ्चप्रोतश्चेति कस्मिन्नुखल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥

सा एवं लब्ध प्रथमप्रश्नोतरा गार्गी ह उवाच हेयाज्ञवल्क्य यस्त्वं मे मम एतं दुर्वचं प्रश्नं व्यवोचः । विशेषेणोन्तरितवानसि अतस्ते

तुभ्यं नमोऽस्तु अथापरस्मै द्वितीयप्रश्नाय धारयस्व मनोधत्स्व । इतर आह पृच्छ गार्गीति ॥ ५ ॥

व्याख्यातमन्यत् । सा होवाच यदूर्ध्वं याज्ञवल्क्येति प्रश्नः प्रतिवचनञ्चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते न किञ्चिदपूर्वमर्थान्तर मुच्यते ॥ ६ ॥

सर्वं यथोक्तं गार्गिप्रत्युचार्य तामेव पूर्वोक्तमर्थमवधारितवाना-काश एवेति याज्ञवल्क्यः । गार्ग्याह । कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । सोऽव्याकृताकाश किमाश्रित इत्यर्थः ॥ ७ ॥

**स होवाचै तद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूल मन एव ह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वना-काशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कम - मुखममात्रमनन्तरमवाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ॥ ८ ॥**

हे गार्गि तदेतत्सर्वासूपनिषत्सु प्रसिद्धम् न क्षरतीवाक्षरं ब्रह्म एतल्लक्षणकं ब्राह्मण ब्रह्मविदोऽभिवदन्ति । किं तल्लक्षणमित्यत आह । अस्थूलमिति प्राकृतस्थूलसूक्ष्मादिविलक्षणमित्यर्थः । अलोहितं लोहि-ताद्युपलक्षितप्राकृतरूपरहितम् । एवमस्नेहमित्येतदपि व्याख्येयम् । अछायं छायारहितं तेजः स्वरूपत्वात । अज्ञानरहितं वा अतमः । अनावृतेस्तमोरहितम् । अवायु श्वासोच्छ्वासादिरहितम् । अनाकाशं शरीराद्यारम्भकतयाऽऽकाशशब्दोपलक्षितपञ्चमहाभूतरहितं तद्वि-लक्षणं वा । असङ्गं सर्वत्रस्थितमपि तत्कृतलेपरहितम् । अरसं प्राकृत-रसशून्यम् । अगन्धं प्राकृतगन्धशून्यम् । एवमचक्षुष्कमित्यादिव्या-ख्येयम् । अतेजस्कं प्राकृतवर्चोरहितम् । अप्राणम् । चक्षुः श्रोत्रवा-ङ्मनोव्यतिरिक्तप्राकृतज्ञानेन्द्रियकर्मेन्द्रियरहितम् । अमुखम् । प्राकृतविग्रहरहितम् । अमात्रं परिमितिशून्यम् । न विद्यते अन्तरं यस्य तदनन्तरं न विद्यते वाह्यं यस्य तदवाह्यम् । अयमेव सर्वस्मा-

दन्तरःसर्वस्माद्बाह्यश्चेत्यर्थः तद्ब्रह्म । किञ्चनान्नादिकं नाश्नाति उपजीव-नार्थं नास्ति । कश्चनकोऽपिसमर्थस्तद्ब्रह्म नाश्नीति न संहरतीत्यर्थः ॥८॥

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गिंद्यावा-पृथिव्यौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा ऋतवः सम्वत्सरा इति विधृतास्तिष्ठन्ति ॥**

वैशब्दोऽवधारणे प्रशासने आज्ञायां सूर्याचन्द्रमसौ विधृतौ विशेषेण धृतौ तिष्ठतः । प्रकृष्टं शासनं क्वचिदप्यप्रतिहतत्वमेव शासन-स्य प्रकर्षः । सर्व विषयकशासनाधीनद्यावापृथिव्यादिधारणवत्वमर्थ-स्तेनजीवप्रधानयोर्व्यावृत्तिः । इदं च सा च प्रशासनात् । ब्र० सू० । १ । ३ । ११ ॥ इति सूत्रे स्पष्टम् ! एतस्य वा अक्षरस्य प्रशासने गार्गि-द्यावापृथिव्यौ द्यौश्च पृथिवी च सम्वत्सरा इत्येवं जातीयकाः कालविशेषा इत्यर्थः ॥

**एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्यं-दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां याञ्च दिशमनु एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशं सन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥**

प्रशासन इति सतिसप्तमी । प्राच्यः प्राक्प्रवाहाः प्रसिद्धा गङ्गाद्या नद्यः श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यो लोकोपकाराय स्यन्दन्ते तत्प्रशासनाभावे ताः स्यन्दनाय न प्रभवन्तीति भावः । प्रतीच्यः प्रत्यङ्मुखाः अन्या उदीच्यश्च नद्यो यां यां दि शमनुप्रस्थितास्ताः सर्वा एतस्य प्रशासने सति प्रस्यन्दंते ॥ एतस्य वाज्ञया ददतो गोहिरण्यादीन् प्रयच्छतः मनुष्याः प्रशंसन्ति देवा यजमानं प्रशंसन्ति पितरः दर्विम् दर्विहोममन्वायत्ताः । अनुगताः ॥

योहह एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते वहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवतीति योवा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति सकृपणः । अथ यो वाएतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः १०॥

अक्षरज्ञानाज्ञानाभ्यामेव मोक्षसंसाराविति वक्तुं कर्मणो तावन्मोक्षसाधनत्वं निराकरोति । एतदुक्तलक्षणकमक्षरं परमात्मानमविदित्वा जुहोति हविः प्रक्षेपं करोति यजते ददाति वहूनि वर्षसहस्राणि तपः चान्द्रायणादि तप्यते स यद्यद्यस्मिन् प्रमाणप्रमिते स्वर्गादिलोके वहूनिवर्ष सहस्राणि तिष्ठति तथापि अस्य तत्फलमन्तवदेव विनाशवदेव भवति। कृपणः शोच्यः संसारीतियावत् । ब्राह्मण इति । ब्रह्मविद्ब्रह्मानुभविता-उक्त इति यावत् ॥१०॥

तद्वा एतदक्षरं गार्ग्यदृष्टं दृष्ट्रश्रुतꣳ श्रोत्रं मतं मन्तं विज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्ट्र नान्यतोऽस्ति श्रोतृ नान्यदतोऽस्तिमन्तृ नान्यदतोऽस्ति विज्ञातृ । एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥

सा होवाच ब्राह्मणा भगवन्तस्तदेव वहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वम् । न वै जातुयुस्माकमिमं कश्चिद्ब्रह्मोघं जेतेति ततो ह वाचक्रव्युपरराम ॥ १२ ॥

इतिबृहदारण्यकोपनिषदि तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥

---

अदृष्टम् । अन्यैः साकल्येन दृष्टं न भवति स्वयं द्रष्ट्र रूपादिसाक्षात्कर्तृ । अश्रुतं साकल्येन स्वयं शृणोतीति श्रोतृ । अमतं साकल्येन स्वयं मन्तृ अविज्ञातं साकल्येन बुद्ध्यविषयः । ननु सर्वेषामपि दृष्टत्वश्रोतृत्वादेः सत्वात् को विशेषोऽक्षरस्येत्यतो

नात्र द्रष्टृत्वादिमात्रं लक्षणं विवक्षितं किन्तु स्वातन्त्र्येण द्रष्टृत्वादि तच्च नान्यस्येत्याह—नान्यदिति । अत अक्षरात् अन्यत् स्वातन्त्र्येण द्रष्टृनास्ति । अथवा । अन्तर्यामिब्राह्मणव्याख्यानोक्तरीत्याऽत्रापि अन्यशब्दस्य तत्सदृशपरत्वमेव। यथा चोल एव भूपतिर्नान्य इत्युक्ते तत्सदृशभूपतिनिषेधपरत्वमेवमिहाप्यदृष्ट्त्वादिविशेषितनिरूपाधिकद्रष्टृत्वाश्रयस्य परमात्मनः सदृशं किमपि नास्तीत्यर्थः । एवं यदर्थमक्षरमाहात्म्यमभिहितं तदाह । एतस्मिन्निति ॥ ११ ॥

सा लब्धप्रश्नद्वयोत्तरा गार्गी उवाच किं हेब्राह्मणाः भगवन्तो यूयम् । अस्माद्याज्ञवल्क्यात् नमस्कारेण मुच्यध्वमिति यदुच्यते मया तदेव वहुमन्यध्वं कुत इत्यत आह । नेति। युष्माकं मध्ये कश्चित् इमं ब्रह्मोघं याज्ञवल्क्यं जातु कदाचिदपि जेता नैव यस्मात् तस्मादित्यर्थः । ततः ब्राह्मणान् प्रति वचनानन्तरम् ।

इदं ब्राह्मणं समन्वयाध्याये तृतीयपादे चिन्तितम् । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति । अस्थूलमित्यादिश्रूयते अत्राक्षरं प्रधानं प्रत्यगात्मा वोत परमात्मेति संशये प्रधानमिति तावत्प्राप्तम् । अक्षरात्परतः पर इत्यादिषु अक्षरशब्दस्य प्रधाने प्रयोगदर्शनात् । प्रत्यगात्मा वा तस्य स्वभोग्यभूतसर्वचिद्वस्तव। धारत्वात् । इति प्राप्त उच्यते ।

अक्षरमम्वरान्तधृतेः । ब्र० सू० । १ । ३ । १० ॥

अक्षरं परमात्मा नाव्याकृतं प्रधानं। कुतः अम्वरान्तधृतेः अम्वरमन्ते यस्य पृथिव्यादिविकारजातस्य धारणात्। एतस्मिन् खल्वक्षरे गार्ग्यकाश ओतः प्रोतश्चेत्याव्याकृताधारतयाऽक्षरस्योपादानादितिसूत्रार्थः । ननु तर्ह्यक्षरं जीवोऽस्तु तस्य सकलाचिद्वर्गाधारत्वादित्याशङ्क्याह ।

सा च प्रशासनात् । ब्र० सू० । १ । ३ । ११ ॥

साचाम्वरान्तधृतिः परमात्मन एव कर्म कुतः। एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृते तिष्ठतः। इत्यादिना प्रशासना

धीनधारकत्वश्रवणात् । निरपेक्षशास्तृत्वरूपं प्रकृष्टशास्तृत्वं तत्पूर्वकचन्द्रसूर्यादिधारकत्वं परब्रह्मण एव नान्यस्येत्यर्थः ।

अन्यभावव्यावृत्तेश्च । ब्र० सू० । १ । ३ । १२ ॥

अन्यस्य प्रधानादेर्भावोऽन्यभावस्तस्यव्यावृत्तेर्हेतोः परमात्मैवाक्षरशब्दवाच्यः । एतदक्षरं गार्ग्यदृष्टं द्रष्टृ श्रुतं श्रोत्रमित्यादिवाक्यशेषोऽक्षरस्य ब्रह्मणोऽन्यत्वं वारयति तत्र द्रष्टृत्वादिचेतनधर्मेण प्रधानाभावः ॥ तथागुणोपसंहारपादेऽपि । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम् । इति निर्दिष्टासम्बन्धिनोऽस्थूलत्वादयः सर्वासु परविद्यासु उपसंहार्या नवेति संशये पूर्वपक्षः यत्र श्रुतास्तत्रैव व्यवतिष्ठन्ते विद्यान्तराश्रुतगुणानां विद्यान्तररूपत्वे प्रमाणाभावात् नच स्वरूपनिरुपकत्वाद्विद्यान्तरेष्वुपसंहारः । आनन्दादिभिरेव स्वरूपनिरूपणसिद्धेस्ते निरूपणस्वरूप एव ब्रह्मण्यधिकरणे स्थूलत्वादिप्रतिषेधादीनां बोद्धत्वादिति प्राप्ते उच्यते ।

अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् । ब्र० सू० । ३ । ३ । ३३ ॥

अक्षरधियाम् । अक्षरसम्बन्धनीनामस्थूलत्वधियां सर्वासु विद्यासु अवरोध । परिग्रहः । उपसंहारः कार्यः । कुतः सामान्यतद्भावाभ्याम् सर्वासु विद्यासूपास्य ब्रह्मण एकत्वात् आनन्दमात्रस्य प्रत्यगात्मसाधारणेन समस्तहेयराहित्यविशेषितमेवानन्दादिकमेवासाधारणं ब्रह्मणो निरूपकमित्यस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यनुबन्धित्वात् ततस्तेऽपि सर्वासु विद्यास्वनुसन्धेयाः ॥

इयदाम्नानात् । ब्र० सू० । ३ । ३ । ३४ ॥

उपासनार्थं सर्वासु विद्यास्वियदेव गुणजातमुपसंहर्त्तव्यं यदस्थूलत्वाद्यदिविशेषितमानन्दादिकम् । इयतैव प्रत्यगात्मव्यावृत्ता साधारणब्रह्मस्वरूपानुसन्धानसिद्धेरतो नातिप्रसङ्ग इत्यथः ॥ अस्थूलत्वादिकन्तु सामर्थ्यरूपलिङ्गवशात्सर्वविद्यानुयायि । अतएव हि सम्भूतिद्युव्याप्त्यपि चातः। ब्र० सू० । ३ । २ ।३ ॥

इत्यधिकरणे व्याप्त्यादेः सामर्थ्यवशादल्पायतनविद्यासु न निवेश इत्युक्तम् । अधिकं तत्रैवानुसन्धेयमिति ।

इति वृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां तृतीयाध्यस्याष्टमं ब्राह्मणम् ॥ ८ ॥

—❖—

7S·7

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति सहैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच । कत्येव देवा याज्ञवल्क्ये द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्रीच शता त्रयश्चत्रीच सहस्रेति ॥ १ ॥**

अथ वाचक्नव्युपरमानन्तरम् । एनं याज्ञवल्क्यं शकलस्यापत्यं शाकल्यः । विदग्धो नामतः प्रपच्छ । किं हे याज्ञवल्क्य देवा कति कतिसङ्ख्यका इति । एवं पृष्टः स याज्ञवल्क्यः यावन्तो यावत्सङ्ख्याकादेवाः वैश्वदेवस्य शस्त्रस्य निविदि निवित्संज्ञके मन्त्रे उच्यन्ते तावन्तो देवान् । एतया वक्ष्यमाणया निविदा तत्संज्ञकमन्त्रेण प्रतिपेदे ज्ञातवान् । तां निविदं दर्शयति । त्रयश्चेति । त्रयश्च त्रीच शता । त्रीणि शतानीत्यर्थः । "सुपांसुलुक्" इतिपूर्वसवर्णादेशः त्र्यधिका शतानीत्यर्थः । त्रयश्च त्रयश्च त्रीच सहस्रेति । त्र्यधिकात्रिसहस्रीति यावत् । यद्यपि इतोप्यधिकसङ्ख्या

देवानामस्ति । नवकोटयो हि देवानामित्याद्युक्तेस्तथापि तेषु त्रयस्त्रिंशत्सहस्रसङ्ख्याकाः देवा अधिका । तेषु त्रयस्त्रिंशच्छतसङ्ख्याका अधिका इति भावः । एवं याज्ञवल्क्योक्तं परिहारं शाकल्योऽङ्गीकरोतीत्याह । ओमिति होवाचेति । शाकल्य इतिशेषः । त्रयस्त्रिंशच्छतसङ्ख्याकेष्वपि देवेषु अधिकान् पृच्छति—कत्येवेति । उत्तरमाह । त्रयस्त्रिंशदिति । एवमुतरत्रापि प्रश्नपरिहारौ व्याख्येयौ । अथ सङ्ख्येयरूपं पृच्छति कतम इति ॥ १ ॥

स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंशदिति । अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्तएकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ॥ २ ॥

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चचन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वं हितमिति तस्माद्वसव इति॥ ३ ॥

कतमे रुद्रा इति दशमे पुरुषे प्राणा आत्मैकादशः । ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥

स एवं पृष्टो याज्ञवल्क्य उवाच त्रयस्त्रिंशतो देवानामेते त्रिंशताधिकत्रिसहस्रभेदमहिमा एवं गुणभूता इत्यर्थः तत्रैव श्रीवादरायणाचार्यैः विरोधः कर्मणि । ब्र० सू० १ । ३ । २७॥

इति सूत्र उक्तम् ॥ तस्मात्त्रयस्त्रिंशद्देवा इति । त्रयस्त्रिंशत्सङ्ख्यकान् पृच्छति कतम इति । उत्तरमाह । अष्टाविति । त्रयस्त्रिंशतः पूरणावित्यर्थः ॥ २ ॥

अष्टौ वसव इत्युक्ताः वसवः क इत्यर्थः । उत्तरम् । अग्नि-

श्चेति । इत्येते वसवः कुत एते वसुशब्दाभिधा इत्यत आह—एतेष्विति । सर्वं वसतीति वसुशब्दवाच्यं जगत् । एतेषु अष्टसु हितं निहितमिति । हि यस्मात्तस्मादेते वसव इत्यर्थः । अत्राग्निपृथिव्यादिशब्दास्तदभिमानिदेवतापरा इति द्रष्टव्यम् ॥ ३ ॥

पृच्छति कतम इति । उत्तरयति—दशम इति । पुरुषे जीवे वर्तमानानि ज्ञानेन्द्रियकर्मेन्द्रियाणि दश । दशमे दशम इत्यर्थः एकादशं मनः । तेषु रुद्रशब्दं वक्तुमाह । ते यदेति । ते एकादशेन्द्रियाभिमानिनः यदा यस्मिन् काले । अस्मान्मर्त्यात् म्रियमाणाच्छरीरात् उत्क्रामन्ति अथ तदा रोदयन्ति म्रियमाणसम्बन्धिनो जनान् । किन्तत इत्यत आह—तदिति । यत् यस्मात् तत् तस्मिन्नुत्क्रान्तिकाले रोदयन्ति तस्माद्रुद्रा इत्युच्यन्त इत्यर्थः ॥ ४ ॥

**कतम आदित्या इति द्वादश वै मासाः सम्वत्सरस्यैत आदित्या एते हीदँ सर्वमाददाना यन्ति ते यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥**

सम्वत्सरस्य सम्वत्सरात्मकस्य कालस्य वै प्रसिद्धा ये प्रसिद्धा द्वादशमासा द्वादशमासाभिमानिनः। एते आदित्यास्तेच धातार्यमा विवस्वान् पूषा त्वष्टा सविता भगः पर्जन्यो वरुणो मित्रो यमश्चन्द्र इत्येते तेष्वादित्यशब्दं निर्वक्तुमाह—एते हीति । एते द्वादशादित्याः इदं सर्वं प्राणिनामायुरादिकमाददाना यन्ति परितो यान्ति ते यत् यस्मात् इदं सर्वमाददाना यन्ति, तस्मादादित्या उच्यन्त इत्यर्थः ॥ ५ ॥

**कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमस्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥**

पृच्छति कतम इति । उत्तरयति–स्तनायित्नुरिति । स्तनयित्नुरेव

तदभिमान्येव प्रसिद्धार्थ एवकारः यज्ञो यज्ञाभिमानी तस्यापि विशेषरूपं पृच्छति कतमेति अशनिः वज्राभिमानी पशवः पश्वभिमानी ॥६॥

**कति मे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षश्चा दित्यश्च द्यौश्चैते षडेते हीदँ्षडिति ॥ ७ ॥**

एतेषु त्रयस्त्रिंशद्देवेषु ये षडिका उक्तास्तान् पृच्छति—कतमे षडिति । एतेषां त्रयस्त्रिंशतस्त्वाधिक्ये हेतुमाह—इदं बुद्धिस्थं षटज्ञानविज्ञानैश्वर्यवीर्यश्रीयशोरूपगुण षट्कम् । एषु अग्न्यादिशब्दाभिधेयेषु सर्वं पूर्णं देवतान्तरापेक्षयोत्कृष्टं हि यस्मात् इति तस्मात् त एव त्रयस्त्रिंशत्स्वधिका इत्यर्थः ॥ ७ ॥

**कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नश्चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥**

षटत्स्वधिकान् त्रीन् पृच्छति—कतम इति । इमे एव पूर्वोक्ता अग्निवाय्वादित्यशब्दवाच्याः । त्रयो लोकाः पृथिवीमग्निंचैकीकृत्यको देवोऽन्तरिक्षं वायुञ्चैकीकृत्य द्वितीयो दिवमादित्यञ्चैकीकृत्य तृतीयस्त एव त्रयो देवा इति । एषु हि यस्माचत्रिषु देवेषु सर्वे देवा अन्तर्भवन्ति तेनैत एव देवास्त्रय इत्येष नैरुक्तानां केषाञ्चित्पक्षे कतमौ तौ द्वौ देवाविति अन्नञ्चैव प्राणश्चै तो द्वौ देवावनयोः सर्वेषामुक्तानामन्तर्भावः । कतमोऽध्यर्धं इति योऽयं पवते वायुः ॥ ८ ॥

**तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदँ् सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥ ९ ॥**

तत्त्राऽऽहुश्चोदयन्ति यदयं वायुरेक इवैवेक एव पवते अथ कथ मध्यर्ध इति । यत् यस्मात् अस्मिन् वायौ इदं बुद्धिस्थं सर्वं ज्ञानादिगुणजातम् अध्यार्ध्नोत् आधिक्येन् ऋद्धमभवत् । तेन कारणेन

ध्यर्ध इति । कतम एको देव इति प्राण इति । स प्राणो ब्रह्म सर्वदेवतात्मकत्वान्महद्ब्रह्म तेन स ब्रह्म त्यदित्याचक्षते परोक्षाभिधायकेन शब्देन ॥ ९ ॥

**पृथिव्येव यस्याऽऽयतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ यएवायं शारीरः पुरुषः स एष वदैवशाकल्य-यस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥**

आयतनमाधारः शरीरमिति यावत् । लोक्यतेऽनेनेति लोको दर्शनसाधनमित्यर्थः । अग्निना पश्यति । मनो ज्योतिः । मन एव ज्योतिः सङ्कल्पविकल्पादिकार्यकारि यस्य स मनोज्योतिः । पृथिव्यायतनकत्वेनाग्निदर्शनकत्वेन मनसा सङ्कल्पयितृत्वेन धातव्य इति प्रश्नस्य फलितार्थः । ईदृशः परमात्मा पृथिव्यायतनत्वादिना ज्ञातव्य इति यो ज्ञाता स एव ज्ञाता याज्ञवल्क्य नान्य इत्यर्थः । एवमुक्तो याज्ञवल्क्य आह । वै शब्दएवार्थः अहं सर्वस्यात्मनः परायणं पृथिव्याद्यायतनत्वादिनोपास्यं यं त्वं वदसि तमहं जानाम्येव कोऽसावित्यत्राह— य एवायं शारीरः पुरुष इति । शारीरो जीवस्तदन्तर्यामीति यावत् । यद्वा शारीरो जगच्छरीरकः जगच्छरीरकत्वविशिष्टः सर्वात्मपरायणभूतः पुरुषशब्दितः परमात्मा पृथिव्यायतनत्वादिना ध्यातव्यः । एवं तस्योत्तरमुक्त्वाऽस्मिन् विषये ज्ञेयं विशेषणान्तरं स्वयं पृच्छति का वैदैवेतेति। तस्य पृथिव्यायतनत्वविदितुरुपास्या देवता का किं संज्ञादिविशिष्टा ध्यातव्येत्यर्थः । उत्तरमाह । अमृतमिति होवाच । अमृतमिति संज्ञादिविशिष्टाध्यातव्येत्यर्थः । स त आत्माऽन्तर्याम्यमृतः इत्यन्तर्यामिणो वेदनादितिद्रष्टव्यः । यद्वा वदैवशाकल्यवदैव पृच्छैव यत्द्रष्टव्यं तत्सर्वं पृच्छेत्यर्थः तस्य का देवतेति शाकल्यप्रश्नः । एवमुत्तरत्रापि द्रष्टव्यम ॥ १० ॥

काम एव यस्याऽऽयतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥

कामएवेति आयतनमाधारः । कामशरीरम् । हृदयं लोको दर्शनम् । हृदयेन बुद्ध्या पश्यति । य एवायं काममयः पुरुषोऽध्यात्ममपि काममय एव ॥ ११ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोकोमनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १२ ॥

रूपाण्येव यस्यायतनम् । रूपाणि शुक्लकृष्णादीनि । यएवासावादित्ये पुरुषः । आदित्येपुरुषस्तस्य का देवतेति सत्यमिति होवाच सत्यं चक्षुरुच्यते । चक्षोः सूर्योऽजायत इति श्रुतेः ॥ १२ ॥

आकाश एव यस्यायतनं श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ यएवायं श्रौत्रः प्रातिश्रुत्क पुरुषः स एष वदैव शाकल्य तस्य का देवेति दिशा इति होवाच ॥ १३ ॥

श्रोत्रः श्रोत्रानुभूयमानः प्रातिश्रुत्क प्रतिध्वनिविशिष्टः पुरुष श्रोत्रानुभूयमानत्वं परमात्मनः प्रतिध्वनिद्वारा द्रष्टव्यम् ॥ १३ ॥

तम एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य

एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देव-तेति मृत्युरिति हो वाच ॥ १४ ॥

तम इति । शार्वराद्यन्धकारः परिगृह्यते । वालाक्यजात-शत्रुसम्वादे छायापुरुषे मृत्युरिति वा अहमेतमुपासे इति दर्शना-दिति भावः ॥ १४ ॥

रूपाण्येव यस्याऽऽयतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणम् । यमात्थ एवायमादर्शे पुरुषः स एष वदैव शाकल्य यस्य का देवतेत्य-सुरिति होवाच ॥ १५ ॥

पूर्वमादित्यपुरुषे रूपसामान्यमुक्तमिहतु तद्विशेष इति भिदा वालाकिब्राह्मणे प्रातिश्रुत्कपुरुषेऽसुत्वमुक्तमिहत्वादर्शपुरुषेऽसुत्वं तत्रा-दर्शपुरुषे रोचिष्णुत्वमुक्तं विधाभेदसम्भवादिति द्रष्टव्यम् । इयांस्तु विशेषः वालाकिब्राह्मणे ब्रह्मलिङ्गत्वाभावान्नतत्रत्यपुरुषशब्दो न ब्रह्मपर्यन्त इह तु सर्वात्मपरायणत्वादिरूपब्रह्मलिङ्गाद्ब्रह्मपर्यन्त इति । विवेक ॥१५

आप एव यस्याऽऽयतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद अहं तं पुरुषं सर्वस्योत्मनः परायणं यमात्थ यएवा-यमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥

रेत एवयस्यायतनं हृदयं लोको मनोज्योतिर्यो वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

उक्ताष्टपुरुषेषु मनोज्योतिष्ट्वं सर्वत्रानुगतम् । आयतनानां लोकानां धर्माणाञ्च भेदः ॥ १७ ॥

एवं प्रतिवादकुपित याज्ञवल्क्य आह—

**शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिमे ब्राह्मणा अङ्गारा वक्षयणमक्रता ३ इति ॥ १८ ॥**

याज्ञवल्क्यः शाकल्येति सम्बोध्योवाच किं इमे ब्राह्मणा स्वित वितर्के नूनं त्वाम्। अङ्गारा वक्षयणम्। अङ्गारा अवक्षीयन्ते इतस्तत अवक्रियन्ते येन काष्ठेन तत् अङ्गारावक्षयणं तत्स्थानीयम-कृतकृतवन्तः त्वन्तु नन्न जानासि। आत्मानं मया दह्यमान-मित्यभिप्रायः ॥ १८ ॥

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्मविद्वानिति दिशो वेद स देवाः स प्रतिष्ठा इति यदिशो वेत्थ स देवाः स प्रतिष्ठाः ॥ १९ ॥**

याज्ञवल्क्येति सम्बोध्योवाच शाकल्यः। त्वं कुरुपाञ्चालदेशानां सम्बन्धिनस्तद्देशस्थान् ब्राह्मणानतिक्रम्य मामंगारावक्षयणं कृतवन्त इति यदवादीः। इदं किं ब्रह्मविद्वानिति बुद्ध्योक्तं सत्यमहं ब्रह्म विद्वानिति न केवलमहं ब्रह्मस्वरूपमात्रं विद्वान किन्तु सर्वप्रतिष्ठात्वेन तद्विद्वानित्याशयेनाह। याज्ञवल्क्यः दिशो वेदेति अहं सदेवाः। अभि-मानिदेवतासहिताः सप्रतिष्ठाः साधाराः दिशो वेद ॥ १९ ॥

**किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षु प्रतिष्ठितमितिरूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु-रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदयेह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येव मे वै तद्याज्ञवल्क्य ॥ २० ॥**

शाकल्यः पृच्छति यत यदि सदेवाः दिशोवेत्थ तर्हि अस्यां प्राच्यां दिशि किं देवताऽसि का देवताधिष्ठात्री देवता ज्ञाता येन सा किंदेवतः। अस्यां दिशि का देवतां जानासीतियावत्

उत्तरमाह याज्ञवल्क्यः। आदित्यदेवत इति। आदित्यो देवता यस्य स आदित्यदेवतः प्राच्यां दिश्यधिष्ठातृत्वेनादित्यमहमुपासे। प्रश्नमाह—स आदित्य इति। उत्तरमाह—रूपेष्वति। तत्रोपपत्तिमाह। चक्षुषेति। यस्माच्चक्षुषा रूपाणि पश्यति अतश्चक्षुः स्वविषये प्रतिष्ठितम्। उतरमाह—हृदय इति। तत्रोपपत्तिमाह—हृदयेनेति। अन्तःकरण एव वासनात्मना प्रतिष्ठितानि भवन्तीत्यर्थः॥ अङ्गीकृत्यान्यान् पृच्छति। इत्येतमेतदिति॥ २०॥

**किं देवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति यमः कस्मिन् प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिते- [illegible] व श्रद्धतेऽथ दक्षिणां ददाति श्रद्धायां ह्येव दक्षिणा प्रतिष्ठेतेति कस्मिन्नु श्रद्धा प्रतिष्ठतेति हृदय [illegible] होवाच हृदये नहि श्रद्धां जानाति हृदयेह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य॥ २१॥**

पूर्ववदर्थः॥

**किं देवतोऽस्यां प्रतीच्यां दिश्यसीति वरुण देवत इति कस्मिन् प्रतिष्ठित इत्यपश्चिति कस्मिन्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नुरेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं ज़ातमाहुर्हृदयादिवसृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य॥ २२॥**

किं देवतोऽस्यामिति पूर्ववद्व्याख्येयम्। तत्रोपपत्तिमाह। तस्मादपीति। यस्माज्जातं प्रतिरूपं पितृसदृशसंस्थानं पुत्रं प्राहुर्लौकिकाः। किमस्यतुतुर्हृदयादिवायं पुत्रः सृप्तः विनिः सृतः हृदयादिव निर्मितः। यत एवम्, अतः हृदय एवरेतः प्रतिष्ठितम।

**किं देवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति**

स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्यः ॥ २३ ॥

किं देवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन् प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदय प्रतिष्ठितमिति ॥ २४ ॥

सोम देवत इति सोम इति लतां सोमदेवताञ्चैकीकृत्य निर्देशः । दीक्षायामिति दीक्षितो हि यजमानः सोमं क्रीणाति क्रीतेन सोमेनेष्टा ज्ञानवानुत्तरां दिशं प्रतिपद्यते सोमदेवताधिष्ठितां सौम्याम् । सत्य इति । कथम् । यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादपि दीक्षितमाहुः सत्यं वदेति । कारणभ्रंशे कार्यभ्रंशो माभूदिति ॥ २३ ॥

ध्रुवायामिति मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिग्ध्रुवेत्युच्यते । अग्निदेवत इति ऊर्ध्वायां प्रकाशभूयस्त्वं प्रकाशश्चाग्निः । अन्यत् पूर्ववत् ॥ २४ ॥

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासैतद्ध्यैतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति॥२५॥

हे अहल्लीक अहन्यनं लीनमस्येत्यहर्लिक अहर्लीकएवाहल्लीक अज्ञेति होवाच याज्ञवल्क्य कुतस्तस्याज्ञत्वमित्यत आह—यत्रेति । यत्र यस्मात् । एतत् हृदयम् । अस्मात् । शरीरादन्यत्र यत्र कापि प्रतिष्ठितं मन्यसे तस्मात्त्वमज्ञ इत्यर्थः । यदि अस्माच्छरीरा हृदयमन्यत्र गच्छेत्तदेदं शरीरं श्वानो अद्युः भक्षयेयुःवयांसि च एतत् शरीरं विमथ्नीरन् विकर्षेरन् । कस्यापि जं वितं न स्यादिति भावः ॥ २५॥

कस्मिन्नु त्वश्चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नुदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो न गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यति । एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामन्तं त्वौपनिषदं पुरुषं पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं ह न मेने शाकल्यस्तस्य ह मूर्धा विपपाताऽपिहास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥

हृदयप्रतिष्ठाधारभूतस्त्वं चात्मा चात्मशब्देनात्र हृदयमुच्यते स्थ इति अस्तेर्मध्यम पुरुषद्विवचनम् । उत्तरमाह—प्राण इति । प्राणाधीनप्रतिष्ठितत्वाज्जीवमनसोरितिभावः । एवमुत्तरत्रापि द्रष्टव्यम् । एवं प्रश्नप्रतिवचनपरम्परायां प्राप्तायां तूष्णीम्भूते शाकल्ये समानप्रतिष्ठाधारप्रश्नाभावात् । तमसौ न वेत्तीतिनिश्चित्य समानप्रतिष्ठाधारं स्वयं पृच्छति स एष नेति नेत्यात्मेति । स एष समानप्रतिष्ठाधारभूतः ।

"अथातो आदेशनेतिनेति" बृ० । २ । ३ । ६ ॥

निर्दिष्टोऽयमात्मा स एष समानप्रतिष्ठाधारभूत इत्यर्थः । अगृह्य इति इन्द्रियग्रहणायोग्यत्वादिन्द्रियेण न गृह्यते । यद्वा परमात्मासाकल्येन गृह्यत इत्यत्र प्रमाणं नहीत्यर्थः ॥ वैलक्षण्ये हेत्वन्तरमाह—अशीर्य इति । कारणकालादिप्रयुक्तविशरणशून्यः स्वत इति । शेषः कुत इत्यत आह--न हीति । परमात्मा शीर्यत इत्यत्र प्रमाणं न हीत्यर्थः । वैलक्षण्ये हेत्वन्तरमाह--असित इति स्वत एव सम्बन्धाभावात् । तत्रापि हेतुमाह--नेति । व्यथते दुःखीभवतीत्यत्र प्रमाणं न हीत्यर्थः हेत्वन्तरञ्चाह न रिष्यतीति । त्रैकालिकनाशशून्य इत्यर्थः ।

एतादृशं समानप्रतिष्ठाधारभूतं मनसि निधायैतं साकल्येन वेत्तीति-निश्चित्य पृच्छति । एतान्यष्टाविति । एतानि पृथिव्येव यस्यायतन-मित्यादिनोक्तानि पृथिव्यादीन्यष्टावायतना । अग्निर्लोक इत्यादि-नोक्ता अष्टौ लोकाः अमृतमिति होवाचेत्यादिनोक्ता अष्टौ देवाः । शारीरः पुरुष इत्याद्युक्ता अष्टौ पुरुषा उक्ताः स प्रसिद्धो यस्तान् पुरुषान् उपलक्षणमेतत् । आयतनलोकदेवानपि । एतान्निरुह्य प्रत्युह्य सम्यङ्निर्धारणार्थे निरूहः प्रत्यूहः आयतनदेवलोकपुरुषान् प्रति-व्यक्तितर्केण तत्तत्स्वरूपं निर्धार्य तान्सर्वान् योऽत्यात्रामत्यः पुरुषः प्रत्यक्रमत् सः कालकार्यवर्गविलक्षणेन निश्चितवान् । तमौपनिषदम् उपनिषन्मात्रगम्यपुरुषं त्वा त्वां पृच्छामि तं पुरुषं चेत् यदि मे मम त्वं विशेषेण न वक्ष्यसि तर्हि ते मूर्धा शिरः विपतिष्यतीत्युवाच याज्ञवल्क्यः शाकल्यः किं कृतवानितिजिज्ञासायां श्रुतिः स्वयमाह-- तमिति । शाकल्यस्तं याज्ञवल्क्यप्रष्टविशेषवन्तं परमात्मानं न मेने न ज्ञातवान् ह तस्य शाकल्यस्य मूर्धा विपपात प्रश्नोत्तराज्ञानात् । न केवल-मयं मृत एव अपितु अस्य शाकल्यस्य अस्थीन्यपि परिमोषिणः स्तेना-अन्यदन्मन्यमानाः सादृश्यात् रजतं मन्यमानाः । अपजह्रुरपहृत-वन्तः ॥ २६ ॥

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान्वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥**

शाकल्यशिरपातानन्तरं याज्ञवल्क्य उवाच । हे ब्राह्मणा भग-वन्तः पूजार्हाः वो युष्माकं मध्ये यः कामयते याज्ञवल्क्यं पृच्छामीति इच्छति स मा मां पृच्छतु । अथवा सर्वे यूयं मा मां पृच्छत वो युष्माकं मध्ये यः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वो युष्माकं मध्ये वर्त्तमानं अहं पृच्छामि वा अथवासर्वान्वो युष्मान् पृच्छामीति एवं याज्ञवल्क्येनोक्ता ब्राह्मणा न दधृषुः धैर्यवन्तो नाभवन् ॥ २७ ॥

तान् हैतैः श्लोकैः पप्रच्छ—

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ १ ॥**

**त्वच एवास्य रुधिरं प्रस्यन्दित्वच उत्पटः । तस्मात्त-दातृणात् प्रैतिरसोवृक्षादिवाऽऽहतात् ॥ २ ॥**

तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान् ब्राह्मणान् हैतैः वक्ष्यमाण-श्लोकैः पप्रच्छ पृष्टवान्। यथा वनस्पतिः फलपुष्पोपेतो वृक्षस्तथैव-पुरुषोऽमृषा सत्यः वानस्पत्यः फलैः पुष्पैरितिनिघण्टुः। तत्साधर्म्यमाह–तस्येति। तस्य पुरुषस्य लोमानीतरस्य वनस्पतेः पर्णानि अस्य पुरुषस्य यात्वग्वहिर्भूतोत्पाटिका वृक्षानुपमर्दे नैवोत्पाट्यत इत्युत्पाटिका वहिस्त्व-ग्रुधिरावरकाचर्मणो या वहिर्भूता सा वहित्वक् ॥ १ ॥

पुरुषत्वचः वृक्षत्वक् साम्यमुपपादयति। त्वच इति। यथा-स्या वनस्पतेः त्वचः उत्पटः निर्यासः प्रस्यन्दी तथाऽस्य पुरुषस्य त्वचं। रुधिरं प्रस्यन्दि। तदेव विवृणोति। तस्मादिति। यस्मादेवं साम्यं तस्मात आहतात् छिन्नात् वृक्षात् रस इव आतृणात् सम्यक्छिन्ना-द्देहात् तद्रुधिरं प्रकर्षेण एति निर्गच्छतीत्यर्थः ॥ २ ॥

**मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम् । अस्थीन्यन्तरतोदारूणि मज्जामज्जोपमा कृता ॥ ३ ॥**

वृक्षपुरुषयोः साम्यान्तरमाह—मांसानीति अस्य पुरुषस्य मांसानि शर्कराणि शकलस्थानीयानि वृक्षान्तस्त्वङ्निभानि वा स्नाव-मध्ये यत स्थिरं विद्यते अस्थिसंलग्नं तत् कीनाटमिव दारुसंश्लिष्ट-पाशवत् पुरुषस्यास्थीनि वृक्षस्यान्तरतोविद्यमानदारूणि वृक्षान्तर-स्थसारभूतदारूणीव वनस्पतिमज्जा पुरुषमज्जोपमा पुरुषमज्जायाः दृष्टान्तभूतेत्यर्थः ॥ ३ ॥

**यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ४ ॥**

एवं पुरुषस्य वृक्षसाम्यमुपपाद्येदानीं नाशोत्पत्तिमत्वेनापि साम्योपपादनपूर्वकं यत्प्रष्टव्यं तत्पृच्छति । यदिति । यद्यथा वृक्णः च्छिन्नो मूलान्नवतरः पूर्वस्मादभिनवतरः पुनः प्ररोहते उत्पद्यते तथा मृत्युना वृक्णः मर्त्यः स्विन् मर्त्योऽपि पुनः प्ररोहति स वृक्षो मर्त्यश्च कस्मान्मूलात्कारणात् प्ररोह इत्युपपद्यते । वृक्षपुरुषयोः स्वातन्त्र्येणोत्पादकः कः किंलक्षणश्चेति प्रश्नाशयः ॥ ४ ॥

**रेतस इति मावोचत जीवतस्तत्प्रजायते । धानारुह इव वै वृक्षोऽञ्जसा प्रेत्यसम्भवः ॥ ५ ॥**

स्वयमेव पुरुषोत्पत्तौ सम्भावितं कारणान्तरमाशङ्क्य निराकरोति । रेतस इति । हे ब्राह्मणाः रेतसः सकाशात् पुरुषः प्ररोहतीति मा वोचत मैवं वक्तुमर्हथ कुत इत्यत आह—जीवत इति । यस्मात् तत् रेतो जीवतः पित्रादेः प्रजायते मया तु अञ्जसा प्रेत्यास्थि तस्य महाप्रलयानन्तरमितियावत् । सम्भवत्यस्मादिति सम्भव उत्पादकः पृष्टः नहि महाप्रलये रेतः सिचः पित्रादेर्जीवनं तस्माद्रेतसः पुरुषोत्पत्तिर्नाशङ्कनीत्येत्यर्थः । ननु वृक्षस्य पुनरुत्पादकप्रश्नोऽयुक्तस्तस्य धानाजन्यत्वस्य प्रत्यक्षसिद्धत्वादित्यत आह—धानारुह इवेति । वृक्षो धानारुहः स्वातन्त्र्येण धानाजन्य इवाऽविदुषां प्रतीयते नतु विदुषाम् । अतस्तत्र स्वातन्त्र्येण वृक्षस्य कारणमिति भावः ॥ ५ ॥

**यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन् मृत्युनावृक्णः कस्मान्मूलात्प्ररोहति ॥ ६ ॥**

**जात एव न जायते कोन्वेनं जनयेत्पुनः । विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥ ७ ॥**

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥ ६ ॥

इति बृहदारण्यकोपनिषदि तृतीयोऽध्यायः ॥ ३ ॥

---

कुत इत्यतस्तमिमं पक्षं दूषयन्मर्त्य इति पूर्वोक्तमेवानुवदति-यत्समूलमिति । यत्, यदा समूलं वृक्षं पुरुषा आवहेयुरुद्धर्त्तयेयुरुत्पाटयेयुस्तदा स उन्मूलो वृक्षः न पुनराभवेत् पुनरागत्य न भवेत् अतो मूलं वीजञ्च वृक्षस्य रोहकारणम् । तस्माद्वः पृच्छामि मृत्युना वृक्णो मर्त्यःस्वित् मर्त्योपि पुनर्भवे किं भवेदेव वृक्षोमर्त्यश्च । तत् कस्मात् मूलात्प्ररोहति यो हि मृत्युना हतः स पुनर्नोत्पद्यते, इत्याशङ्क्याह—जात इति । यदि तस्य पुनर्जन्म नाभ्युपेयते तर्हिकृतहान्यादिदोषः प्रसज्येत, तस्मात्तस्य पुनर्जन्मेतिसिद्धम् । एवं याज्ञवल्क्येन पृष्टे पुरुषस्य पुनः सर्जनकारणं ब्राह्मणैर्नज्ञातम् । ते तूष्णीं बभूवुः ॥ ६ ॥

तेषु तूष्णीं भूतेषु याज्ञवल्क्यः स्वयमेवाह -विज्ञानेति । परं ब्रह्मैव सृज्यसर्जने कारणमित्यर्थः । सार्वज्ञाभावे सर्वसर्जनायोग इत्यतउक्तम् । विज्ञानमिति विज्ञानपूर्णम् । प्रयोजनापेक्षया सर्जनेऽपूर्णताप्रसङ्ग इत्यत्त आनन्दोद्रेकादेव सर्जनमित्याशयेनोक्तमानन्दमिति । आनन्दपूर्णमित्यर्थः । न केवलं पूर्णविज्ञानानन्दं ब्रह्म किन्तु अधिकारियोग्यतानुसारेण पुरुषार्थप्रदञ्चेत्याह—रातिरिति । दातुः स्वोद्देशेन हविरादिदातुर्यजमानस्य रातिरिष्टः तद्विदः ब्रह्मविदः परायणं परमप्रियः तिष्ठमानस्य—निष्ठावतः परायणं मुख्याश्रय इत्यर्थः ॥ ७ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां
तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥ ६ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकायां तृतीयोऽध्यायः ॥३॥

---

**जनको ह वैदेह आसांचक्रे । अथ याज्ञवल्क्य आवव्राज तं होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति उभयमेव सम्राडिति होवाच ॥ १ ॥**

जनको वैदेह आसांचक्रे आसनं कृतवान् सिंहासन अधिरूढ इति यावत् । अथानन्तरं याज्ञवल्क्यो जनकसमीपमावव्राज तं याज्ञवल्क्यं विधिवत्सम्पूज्यहोवाच जनकः किमिति हे याज्ञवल्क्य किमर्थमचारीः पर्य्यटनमकार्षीः किं पशूनिच्छन्नुत अन्तानिति अन्तो निश्चयः सूक्ष्मस्य वस्तुनः प्रत्यगात्मादेरन्तान्निश्चयान् कर्तुमित्यर्थः । एवमुक्तो याज्ञवल्क्यः हे सम्राट् सार्वभौम उभयमेव पश्विच्छाएवन्तवचनञ्चेत्युभयमपि मम चरणे निमित्तमित्युवाच । उभयमेव नान्यदितिवा ॥ १ ॥

यत्ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे जित्वा शैलिनिर्वाग् वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग् वै ब्रह्मेत्यवदतो हि किंस्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति। एकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येतदुपासीत का प्रज्ञा याज्ञवल्क्य वागेव सम्राडिति ।

यद्यएवन्तान् वक्तुमागतस्तर्हि वक्तव्यमिति राज्ञोक्ते स्वयमन्येभ्यो ज्ञाताधिकं मुक्तिसाधनं वक्तुं ते तव कश्चिदाचार्यो यदब्रवीत् तत्तावद्वयं शृणवामेत्याह याज्ञवल्क्यः । एवमुक्तो जनक आह । अब्रवीदिति । शिलिनस्यापत्यं शैलिनिः । जित्वा नामतः । वागेव ब्रह्मेति ब्रह्मप्रतीकतया वागुपास्येति स उक्तवानित्यर्थः । इतर आह । यथेति । माता यस्यानुशासित्री स मातृमान् पिता यस्यानुशासकः स पितृमान् । आचार्यो यस्यानुशासकः स आचार्यवान् ।

होवाच । वाचा वै सम्राड् बन्धुः प्रज्ञायते ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव

सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

पुरुषो यथा स्वशिष्योय ब्रूयात् । शैलिनिस्तुभ्यं वाग्वै ब्रह्मेत्यब्रवीदिति यत्तत्तथेत्यर्थः । वाग्वै ब्रह्मेत्यतन्मुनिरेवोपपादयति अवदत इति अवदतो वाग्रहितस्य पिफलं स्यात् वचनक्रियायाएवासम्भवेनाध्ययनादिनित्यकर्मानुष्ठानस्यैवासम्भवात् । हि यस्मादिति । तस्माद्वाग् ब्रह्मेति साधूक्तम् । परन्तु तस्यायतनं प्रतिष्ठां किमब्रवीत् । आयतनं शरीरम् । प्रतिष्ठा त्रिष्वपि कालेष्वाश्रयः एतद्द्वयमपि शैलिनिः किमुक्तवान् । एवमुक्तो जनको न मेऽब्रवीदित्याह । तं प्रति मुनिराह । एकपाद्वेति । एकः पादो यस्य तदेकपात् । एतद्ब्रह्म वाग्रूपं ब्रह्मोपासनमपि त्रिभिः पादैः शून्यं न फलाय भवतीत्यर्थः एवमुक्तो राजाह । स इति हे याज्ञवल्क्य स वै सर्वब्राह्मणप्रश्नदाता त्वं नोऽस्माकं ब्रूहि । वाग्रूपस्य ब्राह्मण आयतनादित्रयमितिशेषः स एवमुक्तो मुनिराह । वागेवेति । वागधिष्ठात्र्यां देवतायामध्यस्यमानस्य ब्रह्मणो वागेवायतनं शरीरमव्याकृत आकाशः प्रतिष्ठा परमव्योम वा प्रतिष्ठा कालत्रयेऽप्याश्रयः । एतद्ब्रह्म प्रज्ञेत्युपासीत राजा पृच्छति का प्रज्ञेति । यथा प्रतिष्ठांशो वाचोऽभिन्न एवं प्रज्ञा वाचोऽभिन्नेति प्रश्नः । धर्मधर्मिणोरभेदाभिप्रायेणोत्तरमाह । वागेवेति । प्रज्ञाऽपि वाचोऽभिन्नेत्यर्थः तस्य प्रज्ञतामुपपादयति वाचेति । अयं वन्धुरितिवाचैव हि प्रज्ञायते । को वन्धुरित्यत आह । ऋग्वेद इति । ऋग्वेदादीनामिष्टसाधनाववोधकत्वाद्वन्धुत्वं विद्येत्यमिताक्षरं पञ्चरात्रमुच्यते । श्लोका इति मिताक्षरं पञ्चरात्रं । सूत्राणि ब्रह्मसूत्रादीनि । अनुव्याख्यानि वेदव्याख्यानानि विस्तररूपाणि वृहत्तर्कादीनि । व्याख्यानानि वेदव्याख्यानभूत-

ब्रह्मतर्कादीनि । इष्टं यजनं हुतं होमः । अशितमन्नदानं पायितं पेयदानं अयञ्च लोकः परश्च लोकः सर्वाणि भूतानि वाचा वै प्रज्ञायन्ते । उपसंहरति । वाग्वा इति । अत इति । शेषः । अतः वाग्देवतायां ब्रह्मोपासनं कर्त्तव्यमित्यर्थः । एवमुपासकस्य फलमाह । नैनमिति । यो देवत्वयोग्योऽधिकारी एवमायतनादिचतुष्टयसाहित्येन एतत् वाग्ब्रह्म विद्वानुपास्ते । एनमधिकारिणं वाक् ब्रह्मविद्या न जहाति स देवान् देवत्वमप्येति ततो देवो भूत्वा स्वोत्तमदेवेषु सायुज्यं प्राप्य देवान् क्रीडादिगुणसम्पन्नः आजानसिद्धदेवतान्तर्गतो भवतीत्यर्थः । एवमुपदिष्टो राजा स्वयोग्यगुरुदक्षिणां प्रतिजज्ञे । हस्त्यृषभमिति । हस्तिना युक्तोऽऋषभो हस्त्यृषभस्त सहस्रसङ्ख्याकं ददामीति होवाच जनको वैदेहः । एवमुक्तः स याज्ञवल्क्यो होवाच किं । अननुशिष्य-स्योपदेष्टव्यं सर्वमनुपदिश्य नाहरेत गुरुदक्षिणां न गृह्णीयादिति मे पिताऽमन्यत । अतो नाहं समग्रमनुपदिश्य गृह्णामीतिभावः । एव-मुत्तरखण्डपञ्चकेष्यक्षरयोजना ॥ २ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्वायनः प्राणो वै ब्रह्मेति यथा मातृमान् पितृमाना-चार्यवान् ब्रूयात्तथा तच्छौल्वायनोऽब्रवीत् प्राणो वै ब्रह्मे-त्यप्राणतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञव-ल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत काप्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वाने-

तदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वै-देहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

शुल्वायनस्यापत्यं शौल्वायनः । उदङ्कोनामतः । प्राणः ब्र-ह्मेति वै प्रसिद्धमित्यब्रवीत् । अप्राणतः प्राणशून्यस्य किं स्यात् चेष्टा-दिसर्वप्रवृत्तिविलोपापत्तेः । प्राण एव प्राणापानादिरूपो वायुरे-वायतनं स्थानम् । एतत् प्राणात्मकं ब्रह्म प्रियमित्युपासीत तस्य प्रियत्वमुपपादयति । प्राणस्यैवेति । प्राणस्यैव कामाय सम्प्रीत्यै भोजनं भवेत् तादृशभोजनार्थमेवाज्ञोऽपि जनः प्राणस्य कामायेच्छयैवायाज्यं यजनायोग्यं शूद्रादिकमपि याजयति अप्रतिगृह्यस्याप्रतिग्राह्यमपि प्रतिगृह्णाति । यस्मात् प्रतिग्रहो न ग्राह्यस्तस्य सकाशादिति वा । चौर्यञ्च करोति तदर्थं यां दिशमेति तत्र वधाशङ्कं वधविषयाशङ्काभव-तीत्यर्थः । एनमुपासकं प्राणो न जहाति । अन्यत्सर्वं पूर्ववत् ॥ ३ ॥

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे वर्कुर्वा-र्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूया-त्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्या-दित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपा-द्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येन-दुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्ष-मिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्ज-

हाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

वर्कुरिति नामतः । वृषणस्यापत्यं वार्ष्णः चक्षुर्वै ब्रह्मेत्यादित्योदेवता चक्षुष्युपनिषत्सत्यं । यस्माच्छ्रोत्रेण श्रुतमनृतमपि स्यान्नतु चक्षुषा दृष्टम् । तस्माद्वै सम्राट् पश्यन्तमाहुरद्राक्षीस्त्वं हस्तिनमिति स चेद्द्राक्षमित्याह—सत्यमेव भवति । यस्त्वन्यो ब्रूयादहमश्रौषमिति । तद्व्यभिचरति यत्तु चक्षुषा दृष्टं तदव्यभिचारित्वात् सत्यमेव भवति ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभी पीतो-भारद्वाजः श्रोत्रं वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतोहि किं स्यादित्यब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्मात् सम्राडपि यां काञ्च दिशं गच्छति नैवास्यन्तं गच्छत्यनन्ताहि दिशो दिशो वा सम्राट् श्रोत्रं श्रोत्रं वै सम्राट् परमं ब्रह्म नैनं श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥

गर्दभीविपीत इति नामतो भारद्वाजो गोत्रतः श्रोत्रं वै ब्रह्मेति श्रोत्रे दिग्देवताऽनन्त इत्येनदुपासीत काऽनन्तता श्रोत्रस्य । दिश एव श्रोत्रस्यानन्त्यं यस्मात्तस्माद्वै सम्राट् वै प्राचीमुदीचीं यां काञ्चिदपि दिशं गच्छति नैवास्याअन्तं गच्छति कश्चिदपि अतोऽनन्ता हि दिशः दिशो वा सम्राट् श्रोत्रम । तस्माद्दिगानन्त्यम् ॥ ५ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवावमेत्यब्रवीन्मे सत्यकामो जावालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा जावालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येपाद्वा एतत्सम्राडिति होवाच स वै नो ब्रूहि याज्ञवल्क्य मनएवायतनमाकाशः प्रतिष्ठाऽनन्दइत्येनदुपासीत काऽऽनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवोभूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः सहोवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरतेति ॥ ६ ॥

सत्यकाम इतिनामतो जवालायाअपत्यं जावालः स्त्रियमभिकामयमानोऽभिहार्यते प्रार्थयत इत्यर्थः । तस्माद्यांस्त्रियमभिकामयमानोऽभिहार्यते तस्यां प्रतिरूपोऽनुरूपः पुत्रो जायते स आनन्दहेतुः पुत्रः स येन मनसा निवर्त्यते तन्मन आनन्दः ॥ ६ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छाकल्योऽब्रवीदयं वै ब्रह्मेदृधृत्यहृदयस्य हि

किं स्यादित्यब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येतदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदये सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

---

विदग्धो नामतः । शकलस्यापत्यं शाकल्यः । हृदयमेव हृदयगतं हृदयनामकं हृदये सर्वत्र व्याप्तं प्रादेशपरिमितं हृत्कर्णिकामूलगतं अङ्गुष्ठाग्रप्रमाणकं हृत्कर्णिकाग्रगतमङ्गुष्ठमात्रपरिमितं चेति भगवद्रूपत्रयमेव स्थितिहेतुरित्यर्थः । आद्यस्य हृदयनामकस्य स्थितिहेतुत्वमुपपादयति--हृदयं वा इति । हे सम्राट् हृदयं वै हृद्गतं हृदयनामकं हृदये सर्वशो व्याप्तं प्रादेशपरिमितं भगवद्रूपं सर्वेषां भूतानामायतनं स्थानं वै=प्रसिद्धमित्यर्थः । द्वितीयतृतीयरूपयोः स्थितिहेतुत्वमुपपादयति—हृदयं वै इति । हृदयं हृदयनामकं कर्णिकामूलगतं कर्णिकाग्रगतं श्रीभगवद्रूपं सर्वेषां भूतानां प्रतिष्ठाधारकं सर्वदा सुषुप्तौ चैवेति शेषः । तदुपपादयति--हृदये ह्येवेति । एनत्=उपासकं हृदयस्थं हृदयनामकं भगवद्रूपं न जहातीत्यर्थः ॥ ७ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां चतुर्थाध्यायस्य
प्रथमं ब्राह्मणम् ॥ १ ॥

---

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राट् महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं बृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवान् वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

जनको वैदेहः स्वयोग्यं ज्ञानं श्रोतुं कूर्चात्सिंहासनादवरुह्योपावसर्पन् गुरूपदसनं कुर्वन् कृत्वेति यावत् उवाच। हे याज्ञवल्क्य ते नमोऽस्तु मा मां अनुशाधि मोक्षानुकूल्येन शिक्षय । एवमुक्तो याज्ञवल्क्य इतरसाधनसामग्रीसम्पत्तिमतोऽपि यत्स्वात्मना मुक्तैः प्राप्यं तदुपासनयैव मुक्तिर्भवतीति भावेनेतरसामग्र्यनुवादपूर्वकं प्राप्यं पृच्छति सहोवाचेत्यादिना—हे सम्राट् यथा कश्चित् त्वादृशः सम्राट् राजा महान्तमध्वानं मार्गं स्थले जले वैष्यन् यथाक्रमं रथं नावं वा समाददीत। एवं त्वमेताभिः पूर्वोक्ताभिः वाग्वैब्रह्मेत्यादिभिरुपनिषद्भिः समाहितात्मा स्वस्थमना असि। अनेनान्तःकरणशुद्धिरुक्ता। वैराग्यं सूचयन् विशेषणान्तरमाह--एवमिति । एवं दृश्यमान प्रकारेण वृन्दारकः भृत्यादिबृन्दैः प्राप्यतमः। आढ्यः धनी सन्नपि। अधीतवेदः। अधीतो वेदो येन त्वमधीतवेद उक्तोपनिषत्कः=व्याख्यातोपनिषत्कस्त्वमितः संसाराद्विमुच्यमानः क्व गमिष्यसीति। अहं यत्र गमिष्यामीति तत्प्रमेयं न वेदेति राज्ञोक्ते मुनिराह--अथेति। त्वं यत्र गमिष्यसि तत्प्राप्यमहं ते तव वक्ष्यामीति, एवमुक्तः स राजोवाच ब्रवीतु भवानिति ॥ १ ॥

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

योऽयं प्रसिद्धः सर्वेषां दक्षिणेऽक्षन् दक्षिणेऽक्षिणि विद्यमानः पुरुषो दीप्तत्वादिन्धोनाम एष मुक्तौ राजभिः प्राप्य । अत एव तद्धृदिस्थ-उपास्यः । तं वा एतं पुरुषं दीप्तिगुणत्वात्प्रत्यक्षं नामास्येन्ध इति तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण । यस्मात् परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । प्रत्यक्षनामग्रहणं द्विषन्ति ॥ २ ॥

**अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य-एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत् प्रावरणं यदेतदन्त-र्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी सैषा हृदया-दूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदा-स्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्मा-च्छारीरादात्मनः ॥ ३ ॥**

एतद्दक्षिणाक्षिस्थितमेव पुरुषरूपं वामेऽक्षिणि स्थितं एषा प्रसिद्धा विराट् नाम्नी श्रीः अस्याक्षिस्थपरमात्मनः पत्नी । एषः तयोरिन्द्रविराजोः संस्तावः सम्भूय यत्र संस्तवं कुर्वाते अन्योन्यं स एष संस्तावः कोऽसौ य एषोन्तर्हृदयकमलमध्य आकाशः । एतत्सर्वं ज्योतिरधिकरणे व्यासाचार्यैरुक्तम् । अथ एष प्रसिद्धोन्त-र्हृदयेन्तःस्थितो लोहितपिण्डे हृत्कमलरूप एतदेनयोः पूर्वोक्तयो-रन्नं तत्र स्थित्वा ताभ्यामन्नादनात् । अथ यदेतत्प्रसिद्धं हृदयेऽ-न्तर्जालकमिव सृगिव वर्त्तमानं वपारूपमेतदेनयोः पूर्वोक्तयोः प्रावरणम् । अथ यैषा प्रसिद्धा हृदयादूर्ध्वा परिवर्त्तमाना नाडी उच्चरति एषा सा (एनयोः) पूर्वोक्तयोः सञ्चरणी सञ्चरणहेतुभूता सृतिर्मार्गः । तस्याः परिमाणमिदमुच्यते—यथा लोके केशः सहस्रधा भिन्नोऽत्यन्त-सूक्ष्मो भवत्येवं सूक्ष्मा अस्य देहस्य सम्बन्धिन्यो हिता नाम हिता इत्येवं ख्याता नाड्यः सहस्रधा भिन्ना अस्य जीवस्य हृदयेन्त

प्रतिष्ठिता भवन्ति यस्माद्धेतो दक्षिणाक्षिस्थः पुरुषो विग्रहगुणादिभिर्दीप्यमानतयेन्नो भवति तस्मादेवास्माच्छरीरभूताज्जीवात्मनो दक्षिणाक्षिस्थ एष पुरुषः प्रविविक्ताहारतर इवैव भवति। अतिप्रकृष्टान्नवदमृतवदिति यावत्। तद्भोग्यो भवतीत्यर्थः ॥३॥

तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेतिनेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सृज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः, स होवाच जनको वैदेहोऽभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥२

———

दक्षिणाक्षिस्थस्य परमात्मनः प्रकारान्तरेणापि शरीरगतप्रत्यगात्मवैलक्षण्यं द्रढयति – तस्य प्राचीत्यादिना। तस्य प्रत्यगात्मनः प्राची दिक् प्राञ्चः प्राग्गताः प्राणाः तथा दक्षिणा दिग् दक्षिणे प्राणाः। तथा प्रतीची दिक् प्रत्यञ्चः प्राणाः। उदीची दिक् उदञ्चः प्राणाः ऊर्ध्वा दिगूर्ध्वाः प्राणाः अवाची दिक् अवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः। एवं प्रत्यगात्मनो रूपमुक्त्वैतद्वैलक्षण्यमाह— स एष नेतीति। स एष दक्षिणाक्षिस्थितः पुरुष इन्द्रियाद्यग्राह्यत्वविवरणशून्यत्व—निर्लेपत्वशोकमृत्युरहितत्वान्नेतिनेतीति श्रुतिष्वितरविलक्षणत्वेन निर्दिष्टमित्यर्थः ॥ तादृशमुपास्स्वाभयं परमात्मानं प्राप्तोऽसि वृतवानसि। उपासनोपकरणवत्त्वात्। प्राप्तोऽसीति। आशंसायां भूतवच्च। पा० सू०। ३। ३। १३२॥

इति क्तप्रत्ययः। इति याज्ञवल्क्यो जनकमुवाचेत्यर्थः। स जनक· वैदेह उवाच हे भगवन् याज्ञवल्क्य यस्त्वं प्रसन्नः सन् नः अस्मान् यदभयं गच्छतात् तत् तत्र तृप्तिहेतुरस्तु नान्यद्वयं प्रत्युपकर्त्तुं शक्नुम इति यावत् तत्तुभ्यं नमोऽस्तु। अन्यत्किं देयम्। इमे मदीयत्वेन प्रसिद्धा विदेहा विदेहदेशास्तव यथेष्टं भोगाय सन्तु। अयं त्वयोपदिष्टस्ते दासोऽस्मि। मां राज्यञ्च यथेष्टं प्रतिपद्यस्वेत्यर्थः ॥ ४ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिका टीकायां चतुर्थाध्यायस्य द्वितीयं कूर्चब्राह्मणम् ॥ २ ॥

———

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेऽनेन वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ सह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥**

जनकं ह वैदेहं याज्ञवल्क्यो जगाम स च गच्छन्नेवं मेने चिन्तितवान्नवदिष्ये किञ्चिदपि राज्ञे। गमनप्रयोजनन्तु योगक्षेमार्थम्। न वदिष्य इत्येवं सङ्कल्पोऽपि याज्ञवल्क्यो यज्जनकः पृष्टवांस्तत्तत्प्रतिपेदे तत्र को हेतुः सङ्कल्पितस्यान्यथाकरण इत्यत्राख्यायिकामाचष्टे ॥ पूर्वत्र जनकयाज्ञवल्क्ययोः। अग्नि होत्रविषये यद्यादा समूदाते सम्वादं कृतवन्तौ तदा राज्ञोग्निहोत्रविषयमतिविशदं ज्ञानमुपलभ्य सन्तुष्टो ह याज्ञवल्यक्यस्तस्मै राज्ञे वरं ददौ। स राजा कामप्रश्नमेवेच्छाप्रश्नमेव वरं वव्रे नत्वैश्वर्य्यादिकं हेत्याधर्ये। यद्यस्मादेवं पूर्वं जनकाय कामप्रश्नवरं ददौ याज्ञवल्क्योथ ह तस्मादेव जनकं प्रति याज्ञवल्क्य सम्वादकामुको जगामेत्यर्थः। तेन वरदानसामर्थ्येनाचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव जनकः पूर्वः पप्रच्छः ॥१॥

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति। आदित्यज्योतिः सम्राडिति होवाचाऽऽदित्येनैवायं ज्योतिषाऽऽस्ते पल्यते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥**

किमिति याज्ञवल्क्य। अयं पुरुषः संसारी किं ज्योतिः यस्यासौ किं ज्योतिरिति। अस्य पुरुषस्य प्रवृत्त्यादिव्यापारे स्वयमसमर्थत्वेन किंचित्ज्योतिरपेक्षितं तत्किमित्यर्थः एवं पृष्टो याज्ञवल्क्यो ह सम्राडयं पुरुषः। आदित्य एव ज्योतिर्यस्यासावादित्यज्योतिरित्युवाच—आदित्यस्य ज्योतिष्ट्वमेवोपपादयति। आदित्येनैवेति। यस्मादयं पुरुष आदित्येनैव ज्योतिषाऽऽस्ते तिष्ठति उपविशति वा पल्यते ग्रामादिकं प्रति गच्छति तत्र कर्म कुरुते विपल्येति पुनः प्रत्यावर्त्तते तस्मादयमादित्यज्योतिरित्यर्थः। एवं याज्ञवल्क्योक्तं राजाङ्गीकृतवानित्याह—एवमेवेति। हे याज्ञवल्क्यै तत्त्वयोक्तमेव॥ २॥

**अस्तमितआदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्यज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ ३॥**

तथापि आदित्यास्तमयेऽपि पुंप्रवृत्तिदर्शनादादित्येऽस्तमिते सत्ययं पुरुषः किं ज्योतिरेवादित्यस्यास्तमयात् पुंप्रवृत्तिहेतुभूतं ज्योतिः किमेव स्यादित्यर्थः अस्य पुरुषस्यादित्यास्तमयकाले चन्द्रमा एव ज्योतिर्भवति। तदेवोपपादयति। चन्द्रमसैवेति। रात्रौ वाह्यज्योतिःषु चन्द्रस्य प्राधान्यापेक्षयावधारणम्॥ ३॥

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषाऽऽस्ते पल्यते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ ४॥**

आदित्यचन्द्रमसोरुभयोरप्यस्तमयेऽपि कृष्णपक्षरात्रौ पुंप्रवृत्तिदर्शनातद्धेतुभूतं ज्योतिः पृच्छति। अस्तमित इति॥ ४॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवति वाचैवायं ज्योतिषाऽऽस्ते पल्यते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

आदित्यचन्द्राग्नीनामभावेऽप्यन्धकारे पुंप्रवृत्तिदर्शनात्पृच्छति अस्तमित इति । वागेवेत्यनेन शब्दो गृह्यते नेन्द्रियं शब्दस्य ज्योतिष्ट्वमप्रसिद्धं कथमुच्यत इत्यतः तदनुभवारूढं करोति । तस्मादिति हे सम्राट् तस्माद्वैतस्मादेव वाचोऽपि ज्योतिष्ट्वादेव यत्र यदादित्येचन्द्राग्न्यभावकाले स्वः स्वकीयोऽपि पाणिर्हस्तोऽपि न विज्ञायते विस्पष्टं न दृश्यते अथ तदा वाह्यज्योतिषोऽभावेन प्रवृत्तिनिरोधे यत्र यस्मिन् प्रदेशे वाक् शब्द उच्चरति तत्र तं प्रदेशं प्रति उपन्येत्येवोपगच्छत्येव । अन्यथा तन्न स्यादित्यर्थः ॥ ५ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥६॥

आदित्यचन्द्राग्निवाचामभावेऽपि सुषुप्त्यादौ प्रवृत्तिदर्शनात्तत्र किं ज्योतिरिति पृच्छति । अस्तमित इति । आत्मैव स्थितिगमनादिहेतुभूतः प्रकाशको भवति ॥ ६ ॥

कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनु सञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नोभूत्वेमं लोकमतिक्रामति मृत्योरूपाणि ॥७॥

देहेन्द्रियादिविवेकेनात्मनः प्रसिद्धिं पृच्छति—कतम इति । देहेन्द्रियादिभ्यो विवेकेनात्मानमाह—योऽयमिति यो-विज्ञानपूर्णः प्राणेषु इन्द्रियेष्वतः हृद्यन्तश्च वर्त्तमानः ज्योति र्बुद्धयादिद्योतनेन प्रवृत्तिहेतुः पुरुषः अयमेवात्मेत्यर्थः । अत्र विज्ञानमय इति प्राचुर्यार्थमयटाऽऽत्मनो ज्ञानव्यतिरेक उक्तः प्राणेष्विति सप्तमीनिर्देशादिन्द्रियव्यतिरेकोऽपि सिद्धः । अत्र ज्योति-श्शब्दादात्मनो विज्ञानमयत्वोक्त्या धर्मभूतज्ञानद्वारा भासकत्व-मादित्यादीनामिव प्रभाद्वारा ज्योतिष्ट्वमिति भावः ॥ परमात्मा यत्तकर्तृकोऽपि जीवः । अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते । गी० । ३ । २७ ॥ इत्युक्तरीत्या समानः सन् स्वातन्त्र्याभिमानयुक्तः सन् गोपुरधारीव ध्यायतीव लेलायतीव स्वतन्त्रः कर्त्तैवोभौ लोकौ सञ्च-रतीत्यर्थः लेलायति चरतीवेत्यनेन कर्तृत्वं परमात्मायत्तमौपाधि-कञ्चेत्यपि दर्शितम् । नत्वाध्यायतीव लेलायतीवेतीवशब्दप्रयोगा-दात्मनः कर्तृत्वमनुपपन्नमिति वाच्यम् कर्त्ता शास्त्रार्थवत्त्वादित्यधि-करणे साङ्ख्याभिमतमकर्तृत्वमात्मनः पूर्वपक्षीकृत्य कर्तृत्वस्य परैः सिद्धान्तितत्वात् । स हि जीवः स्वप्नावस्थो भूत्वा स्वप्ने व्याघ्रादि-शरीरगोभूत्वेत्यर्थः । इमं लोकं परिदृश्यमानं जाग्रत्प्रपञ्चं मृत्योः संसारस्य रूपाणि दुःखरूपाणीतियावत् । तादृशानि मानुषादीनि शरीराणि अतिक्रामति न पश्यतीति यावत् ततश्च स्वप्ने जाग्रद्दशा-वर्त्तिदेहानुपलम्भाद्देहान्तरपरिग्रहदर्शनाच्च देह व्यतिरेकः प्रदर्शितो भवतीति द्रष्टव्यम् ॥ ७ ॥

**स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मानो विजहाति ॥ ८ ॥**

प्रत्यगात्मनो नित्यत्वेन जायमानत्वमनुपपन्नमित्यत आह शरीरमभिसम्पद्यमान इति । शरीरसम्बन्ध एव जननमित्यर्थः शरीर-

मभिसम्पद्यमानः सन् पाप्माभिः संसृज्यते सम्बद्धो भवति स जीवो म्रियमाणस्तस्यैव व्याख्यानमुत्क्रामन् मुक्तिं गच्छन् सन् पाप्मानो जहातीत्यर्थः ॥ ८ ॥

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्यो भयान् पाप्मनआनन्दांश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतोमात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योति-र्भवति ॥ ९ ॥**

तस्यैतस्य पुरुषस्य द्वे एव स्थाने भवतः के ते । इदञ्च यत्प्रतिपन्नं वर्त्तमानं जन्म शरीरेन्द्रियविषयवेदनाविशिष्टं स्थानं प्रत्यक्षतोऽनुभूयमानम् । परलोकस्थानं तच्च शरीरादिवियोगोत्तरकालानुभाव्यम् । सन्धौ भवं सन्ध्यम् स्वप्नरूपस्थानन्तु स्थानद्वयानुभवयोग्यत्वात् सन्ध्यं तृतीयं स्थानं भवति । जाग्रत्पुरुषस्त्विममेव लोकं पश्यति स्वप्नावस्थस्तु कदाचिदिमं लोकं पश्यति कदाचित्परलोकं स्वर्गनरकादिकं पश्यति । अतः स्थानद्वयदर्शनयोग्या विलक्षणेयं स्वप्नावस्था । अमुमेवार्थं प्रपञ्चयति । तस्मिन्नित्यादिना । कथं पुनः स्वप्ने स्थितस्सन्नुभौ लोकौ पश्यति । किमाश्रयः केन विधिनेत्यत आह—अथ यथाक्रम इति । आक्रमत्यनेनेत्याक्रम आश्रयः पुण्यपापरूपः । यादृक् पुण्यपापरूपाक्रमविशिष्टः सन् परलोके सुखदुःखे अनुभवति । एवमेव पुण्यपापफललक्षणामाक्रममाक्रम्य स्वप्ने प्रतिकूलाननुकूलांश्चोभयविधान् पदार्थान् पश्यति ततश्च स्वप्ने परिदृश्यमानमेतद्देहातिरिक्तदेहभोग्यं पुण्यपापार्जितं परलोकस्थानमेवेत्यर्थः ।

ननु स्वप्ने परलोकवत्पुण्यपापादिवशेन पदार्थसृष्टावात्मनः स्वप्ने स्वयंज्योतिष्ट्वं कुतोऽभ्युपगन्तव्यमिन्द्रियाणां प्रकाशकानां सर्वदा सत्त्वादित्याशङ्क्याह स यत्रेति । स आत्मा यत्र यदा प्रस्वपति । कथं प्रस्वपतीत्यत आह । अस्येति । अस्य लोकस्य जनस्य सर्वावतः सर्वविषयज्ञानानि मात्रमिन्द्रियशक्तिञ्चादाय स्वयं विहृत्य जीवं बाह्य-व्यापाररहितं कृत्वा स्वयमेव निर्माय स्वप्नपदार्थान् रथादीनुत्पाद्य स्वेन स्वकीयेन स्वरूपभूतेन वाभासा बाह्यप्रकाशेन स्वेन ज्योतिषा अन्तरप्रकाशेन प्रस्वपिति जीवं प्रस्वापयति । अत्रास्मिन् प्रस्वापकाले । अयं पुरुषः स्वयमेव विशेषतोज्योतिर्भवति ॥ ९ ॥

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथ-योगान् पथः सृजते न तत्राऽऽनन्दा मुदः प्रमुदो भवन्त्यथा-ऽऽनन्दान्मुदः प्रमुदः सृजते न तत्र वै शान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वैशान्ताः पुष्करिणीः स्रवन्तीः सृजते स हि कर्त्ता ॥ १० ॥**

यदुक्तं स्वप्ने स्वयंज्योतिरात्माऽऽस्ते कर्म कुरुते इति तन्नोपपद्यते आसनगमनादिक्रियायाः सत्त्वायोगादित्याशङ्क्याह । न तत्रेति । तत्र स्वप्नावस्थायां रथाः प्रसिद्धाः न भवन्ति पूर्वं न स्थिताः रथयोगाः रथै र्युज्यन्त इतिरथयोगा अश्वादयो न भवन्ति पुरा न स्थिताः पन्थानो-मार्गाः पूर्वं न स्थिताः किन्तु अथ तदैव स आत्मा परमात्मा तत्तत्कर्मा-नुसारेण रथान्रथयोगान् पथः सृजते । अनुकूलदर्शनजन्या प्रीति-रानन्दः । स्वकीयवुद्धिजा प्रीतिर्मुत् विनियोगजा प्रीतिः प्रमुत् । वेशान्ताः पल्वलानि पुष्करिण्यो वाप्य. स्रवन्त्यो नद्यः न केवलमेतावत् स पर मात्मा सर्वस्य कर्ता हि प्रमाणप्रसिद्धम । सकलप्रपञ्चनाटकसूत्रधारः सर्वेश्वरः खलु तत्र कर्ता स किंवा कर्त्तुं न शन्कुयादितिहि शब्दाभि-प्रायः । नच सहीत्यनेन स यत्र प्रस्वपितीति प्राक्प्रस्तुतोजीव एव परामृश्यतामिति वाच्यम् । सन्ध्यधिकरणे तस्य निरस्तत्वात् । तथाहि सन्ध्ये सृष्टिराह हि । ब्र० सू० ३ । २ । १ ॥

किं जीवकर्तृकेयं सृष्टिः। उतेश्वरकर्तृकेति। जीवकर्तृके प्राप्तम्। कुतः सन्ध्ये स्वप्नस्थाने हि यतः सृजते स हि कर्तेतिश्रुतिराह। स्वप्नदृशो जीवस्यैव तत्र प्रतीयमानत्वात् निर्मितारं चैके पुत्रादयश्च। ब्र० सू०। ३। २। २॥

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" कठ० ५। ८। कामानां स्रष्टा जीवो ह्याम्नायते कामास्तत्र पुत्रादयोऽतः जीव-एवात्रकर्तृत्वेनाभिधीयते द्वाभ्यां सूत्राभ्यां पूर्वपक्षे प्राप्त उच्यते। मायामात्रन्तु कात्स्न्र्येनानाभिव्यक्तस्वरूपत्वात् ब्र० सू० ३। २। ३॥

तुशब्दः पक्षव्यावृत्त्यर्थे सर्वेश्वर एव तत्र कर्ता न जीवः कुतो यतो मायामात्रम्। आश्चर्यरूपा हि स्वप्नसृष्टिः नित्याविर्भूतसत्यसङ्कल्पत्वादिगुणवत एवोपपद्यते जीवस्य सत्यसङ्कल्पादिमत्त्वेऽपि तस्य-सर्वेश्वरसङ्कल्पादनादिकर्मपरम्परारूपाविद्याया देहाचित्प्रकृतियोगा--भ्याञ्च तिरोहितत्वात्। तिरोधायकत्वे च स्वप्नदशायामप्यभिव्यक्त्यस-म्भवात् परमेश्वरस्य स्वप्नसृष्टिकर्तृत्व एव च रथादिसृष्ट्युत्पत्त्यनन्तरं स हि कर्तेति हेतूपन्यासः सङ्गच्छते सूचकश्च श्रुतेराचक्षते तद्विदः। ३। २। ४। यदा कर्मेषु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानी-यात्तस्मिन् स्वप्ननिदर्शने। छा० ५। २। ६। स्वप्ने पुरुषं कृष्णं कृष्ण-दन्तं च पश्यति स एनं हन्ति। ऐ० आर० ३। २। ४। १७ इतिश्रुतेः। आचक्षते च स्वप्नाध्यायविदः तथाच यदीयं स्वप्नसृष्टिः जीवकर्तृका तर्हि शुभसूचकानेव सृष्ट्वा पश्येन्नाशुभसूचकानतो न जीवकर्तृकेयं सृष्टि रित्युभयलिङ्गपादे स्थितम्॥ १०॥

**तदेते श्लोका भवन्ति। स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः॥ ११॥**

तत्तत्र पूर्वोक्तार्थे एते वक्ष्यमाणाः श्लोकाः मन्त्रा भवन्ति प्रमा-णत्वेनेतिशेषः। तान मन्त्रानुदाहरति। स्वप्नेनेति। स्वप्नेनेतीत्थंभावे

तृतीया स्वप्नेनोपलक्षितः। शारीरं जीवमभिहृत्य निश्चेष्टतामापाद्य- स्वयमसुप्तः सुप्तिशून्यः। अलुप्तप्रकाश इति यावत् सुप्तान् प्राणानभित- श्चाकशीति । काशृगतिशासनयोरित्यस्माद्यङ्लुगन्तं पर्यटतीत्यर्थः । शुक्रं ज्योतिष्मत् प्रकाशं मन आदीन्द्रियवर्गमादाय स्वप्नान्ते पुनः स्वस्थानमेति । हिरण्मयः प्रकाशरूपः । एकहंसः । एक एव हन्ति गच्छती- त्येकहंसः ॥ ११ ॥

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा। सईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः ॥ १२ ॥**

तथा प्राणेन पञ्चवृत्तिना रक्षन् परिपालयन् अन्यथा मरणं स्या- दवरं निकृष्टं कुलायं नीडं स्थूलशरीरं स्वयन्तु बहिस्तस्मात् कुलायात्= जाग्रच्छरीतात् चरित्वा निर्गत्य। अमृतः स्वयममरणधर्मा । ईयते गच्छति यत्र कामं भोग्यम् । हिरण्मयइत्यादिकं पूर्ववत् ॥ १२ ॥

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि। उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥**

स्वप्नान्ते स्वप्नमध्ये उच्चावचं पुण्यपापलक्षणमुत्कृष्टापकृष्टम् संगच्छमानो देवो जीवः बहून्यसङ्ख्येयानि रूपाणि कुरुते भजते। उतापि स्त्रीभिः सह मोदमानं इव जक्षदिव हसन्निव । उतेवापि भयानि बिभेत्येभ्य इतिभयानि सिंहव्याघ्रादीनि पश्यन्निव ॥ १३ ॥

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति तं नायान्तं बोधयेदित्याहुः । दुर्भिषज्यं हास्मै भवति यमेष न प्रतिप- द्यते । अथोखल्वाहुर्जागरितदेश एवास्यैष इति यानिह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायब्रूहीति ॥१४॥**

अस्यात्मनः । आरामणमुद्यानादिकं तन्निर्मितस्वाप्नपदा- र्थादिकमेव पश्यति नतु तं देहेन्द्रियादिविलक्षणमन्तर्बहिः संचरन्तमपि

पश्यतीतिलोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः। इति मन्त्रसमाप्तौ लोकप्रसिद्धिरपि तथेत्याह। तं नायातमिति। यत एव स्वप्नेन्द्रियाण्युपादाय जीवो वहिर्निर्गच्छति। अत आयतं गाढसुप्तं तं न वोधयेदित्याहुश्चिकित्सकाः। तदा तत्र दोषं पश्यन्ति दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते वहिर्निर्गत आत्मा यमिन्द्रियदेशं न प्रतिपद्यते कदाचिद्व्यत्यासेनेन्द्रियाणीन्द्रियप्रदेशो प्रवेशयेत्। तत्राऽऽन्ध्याद्याधिर्यदोषप्राप्तौ दुर्भिषज्यं दुःखेनभिषज्यकर्मास्मै दोषाय भवति। अयं दोषो दुर्विचिकित्स्य एव स्यादित्यर्थः। अथोखल्वित्यन्य आहुः किमिति जागरितदेशे जाग्रत्स्थानएवास्यैष स्वप्न इति। न स्थानान्तरमिति। तत्र च हेतुमाहुः। यान्येव हस्त्यादीनि। जाग्रत्पश्यति तानि सुप्तोऽपि पश्यतीति। अत्र मतान्तरत्वेनोपन्यासस्यायंभावः। उपरतेष्विन्द्रियेषु हि स्वप्नान् पश्यति न तत्र जागरितदेशस्यावकाशोऽस्ति। अतस्तृतीयस्थानमेव स्वप्नस्थानमिति। उक्तं स्वयं ज्योतिष्ट्वमुपसंहरति। अत्रायमिति। एवं श्रुत्वा राजा गुरुदक्षिणां प्रतिजज्ञ इत्याह। सोऽहमिति। हे याज्ञवल्क्य भगवते पूज्याय ते स त्वदुपदिष्टोऽहं सहस्रं हस्तिवृषभसहस्रं ददामि। अत ऊर्द्ध्वमतःपरं विमोक्षायैव संसारविमोक्षायैव साधनं ब्रूहि नान्यत् किञ्चिदपेक्षितमितिभावः॥ १४॥

स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यन्त्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति॥ १५॥

सम्यक् प्रसीदत्यस्मिन्निति सम्प्रसादः। जागरिते देहेन्द्रियव्यापारशतसन्निपातजं हित्वा कालुष्यं तेभ्योविप्रमुक्त ईषत्प्रसीदति। अतः सम्प्रसादशब्देन स्वप्नस्थानमुच्यते। रत्वा रतिमनुभूय मित्रवन्धुजनदर्शनादिना चरित्वा विहृत्य। दृष्टैव पुण्यं पापञ्च पुण्यपापफलमनुभूय

प्रतिन्यायं यथान्यायं यथागतम्। अयनमयो निर्गमनमित्यर्थः। प्रति-योनि, योनिशब्दः स्थानवाची स्थानं प्रत्याद्रवति आगच्छति स्वप्नानुभवायेत्यर्थः। स यत्रेति। तत्र जाग्रद्दशायां स यत्किञ्चिन्मनुष्यव्याघ्रशरीरादिकमात्मीयत्वेन पश्यति। अनन्वागतः। तेनाननुसृतो भवति तत्संसर्गशून्यो भवतीत्यर्थः। तत्र हेतुमाह। असङ्ग इति। कर्मविद्योपाधिकेन शरीरेन्द्रियसङ्घातादिनाऽसङ्गस्वभावत्वादित्यर्थः। यदि केन चित्सङ्गः स्वभावसिद्धः स्यात्। तदेव हि तस्य सर्वदा तदनुवृत्तिः स्यात् अतोऽसङ्गस्वभावत्वाज्जाग्रद्दशादृष्टपदार्थाननुवृत्तिर्युज्यत एव। उक्तमङ्गीकरोति। एवमिति। अस्य व्याख्यानं पूर्ववत्॥ १५॥

**स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च-पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽयं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति॥ १६॥**

स्वप्नान्ते स्वप्नस्थाने। अन्तः समाप्तौ स्थाने च 'निर्णयेऽभ्यन्तरे'ऽपिचेति नैघण्टुकाः। बुद्धान्तः बुद्धं बोधः। भावे निष्ठा। अन्तशब्दः स्थानवचनः। स्थिरबोधनाय जाग्रत्स्थानायेति यावत्॥ १६॥

**सयत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं स वा एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव॥१७**

एवं त्रिभिः खण्डैर्जागरितात्स्वप्नान्तं स्वप्नान्ताद्बुद्धान्तं बुद्धान्तात्स्वप्नान्तं यातीत्यारोहावरोहसञ्चारप्रदर्शनेन संसारचक्रप्रवृत्तिर्दर्शिता॥ १७॥

**तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वञ्चापर-**

**अत्रमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धातञ्च ॥ १८ ॥**

एतस्य पुरुषस्योभयत्र सञ्चारे निदर्शनं यथा महामत्स्यः नद्या उभे कूले अभिसञ्चरति के ते पूर्वञ्चापरञ्च सञ्चरन्नपि कूलद्वयं तन्मध्य-वर्तिनोदकस्रोतो वेगेन न परवशीक्रियते एवमेवायं पुरुषः । एतावन्तौ स्थाने अनुसञ्चरति कौ तौ स्वप्नान्तं बुद्धान्तञ्च ॥ १८ ॥

एवं स्थानद्वयसञ्चारं प्रदर्श्य सुषुप्तिदशां प्रकाशयति ।

**तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥**

तद्यथाऽस्मिन्नाकाशे भौतिके श्येनो वा सुपर्णः गरुडो वा विपरिपत्य विशेषेण परितः पतनं कृत्वा श्रान्तः नानापरिपतनलक्षणेन कर्मणा-परिखिन्नः । संहत्य पक्षौ सङ्गमय्य सम्प्रसार्य पक्षौ सम्यग्लीयतेऽस्मि-न्निति संलयोनीडो नीडायै ध्रियते । धृङ्अवस्थान इतिधातुः । एवमे-वायं पुरुषो बुद्धान्तस्वप्नान्त सञ्चरणश्रान्तो यत्र स्थाने सुषुप्तो न कामा-द्युपहतः स्वप्नांश्चान्यान् पदार्थांश्चं न पश्यति तादृशस्थानाय धावती त्यर्थ ॥ १९ ॥

**ता वा अस्यैताहिता नाड्यो यथा केशः सहस्रधा भिन्न-स्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरि-तस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्रा-विद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥**

ननु कचित्स्वप्नादिदर्शनं कचित्तदभाव इत्यत्र किं विनिगमक

मित्याशङ्कायां स्थानवैषम्यकृतमित्याह। तावेति, अस्य पुरुषस्य ताः प्रसिद्धाः। एता वक्ष्यमाणाहिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावतारिणम्ना सूक्ष्मपरिमाणेन तिष्ठन्ति ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लत्वादिभीरसविशेषैः पूर्णा इत्यर्थः। एते च रसानां वर्णविशेषा वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषाद्विचित्रा वहवश्च भवन्ति। यत्र स्थितमेनं केचन शत्रवोऽन्ये वा तस्करा घ्नन्तीव केन जिनन्ती वशीकुर्वन्तीव गजोविद्रावयतीव गर्तमिव पतन्तमिव भवन्ति ताः केशसहस्रांशसूक्ष्मा नानारसपूर्णा हिता नामिका नाड्यो भवन्तीत्यर्थः। यज्जाग्रद्दशायां भयसाधनं पश्यति तत्सर्वमासु नाडीषूष्वविद्यया कर्मवशान्मन्यते प्राप्नोतीत्यर्थः हितनामकस्वप्रवहनाडीस्थितस्य कर्मसम्वन्धसत्वादभीषणस्वाप्नपदार्थप्रतिभानं सम्भवतीतिभावः। स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते। वृ० २।१।१६। वालाकिब्राह्मणोक्तरीत्या यत्र स्थाने स्थितस्य देववद्राजवच्चानन्दानुभवः स्वव्यतिरिक्तानुकूलप्रतिकूलवस्त्वनुपलम्भः सोऽस्य जीवस्य परमो लोको मुख्याश्रयः परमात्मेति भावः॥ २०॥

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्मायतं रूपम्। तद्यथा प्रियया स्त्रियया संपरिष्वक्तो न वाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न वाह्यं किञ्चन वेद नाऽऽन्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्॥ २१॥**

अस्य प्रत्यगात्मनः तत् प्रसिद्धमेतत् रूपं छन्दः कामोऽतिगतच्छन्दोयस्माद्रूपादतिच्छन्दमभिलाषातिगम्। अपहतपाप्मा पापवर्जितमभयं भयरहितं प्रियं प्राप्यं रूपं परमात्मैवेत्यर्थः ततः किमित्यत्राह। तद्यथेति। तत् निदर्शनं यथा प्रियया मनोहरणसमर्थया स्त्रिया संपरिष्वक्तः कामुको वाह्यं घटादिकं किञ्चन किमपि न वेद आन्तरं दुःखा-

दिकञ्च न वेद स्त्रीपरिष्वङ्गेणैव पूर्णो भवति एवमेवायं पुरुषो जीवः प्राज्ञेन सर्वज्ञेनात्मना सम्परिष्वक्तः न वाह्यं किञ्चन वेद नान्तरम्। अत्र परिष्वङ्गो नाम तत्र लय एव। तद्वेति। अस्यात्मनः तत्प्रसिद्धं आप्त-कामम्। आप्ता एव नत्वाप्तव्याः कामा येन तदाप्तकामम्। अकामं विषयकामनारहितं शोकान्तरं शोकवाह्यम् अन्तरशब्दो वहिर्योग वचनः प्राप्यं रूप्यमित्यर्थः ॥ २१ ॥

**अत्र पिताऽपिता भवति माताऽमाता लोकाऽलोका देवा अदेवा वेदा अवेदाः। अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमण-स्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥ २२ ॥**

अत्र परमात्मनि सुषुप्तिस्थाने लीनस्य पित्रादयो न सन्ति तद्रूपस्य शरीरसम्वन्धघटककर्मसम्बन्धशून्यतयाऽशरीरस्य जनकाभावेन पित्रा-देरभावादिति भावः। लोका इति। तस्याश्रयशून्यत्वादिति भावः। देवा इति। अनुग्राहकशून्यत्वादिति भावः। वेदा इति। अननुशास-नीयस्वरूपत्वादितिभावः। स्तेन इति। परिशुद्धात्मस्वरूपे स्तैन्यादि-कर्तृत्वासम्भवादितिभावः। तत्र हेतुं दर्शयति—अनन्वागतमिति। शरीरसम्बन्धघटकपुण्यपापासंस्पर्शादितिभावः। ननु न घटते सुषुप्तौ। कर्मसम्बन्धस्य सत्त्वं सर्वकर्मनाशस्य चरमदेहवियोगानन्तरभावित्वा-दित्याशङ्क्याह। तीर्णोहीति। मनस्तापरूपफलाभावात्। विद्यमाना-नामपि कर्मणां फलप्रदानाभिमुख्याभावात्। कर्मणामसंवन्धप्रायत्वा-च्छरीरसम्बन्धाभावेन तदनुबन्धिमातापित्रादयो न सन्तीत्यर्थः ॥२२॥

ज्ञातृस्वरूपस्य सुषुप्तस्यात्मनो वाह्याभ्यन्तरज्ञानाभावः किंनि-वन्धन इत्याशङ्क्याह )

**यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्वि-परिलोपो विद्यतेऽविनाशित्वात्। नहि तद्द्वितीयमस्ति ततो-ऽन्यद्विभक्तं यत्पश्येत् ॥ २३ ॥**

वाह्याभ्यन्तरं न पश्येदितियावत्। तत्पश्यत एव वाह्याभ्यन्तरादर्शनं ज्ञातुर्धर्मभूतस्य ज्ञानस्य नित्यत्वाज्ज्ञानस्वरूपाभावनिवन्धनो वाह्याभ्यन्तरद्वितीयज्ञानाभावो न भवति। अपितु ततोऽविभक्तस्य प्रज्ञात्मनः पृथक्सिद्धस्यान्यस्य वस्तुनोऽभावादेवानुकूलप्रतिकूलपदार्थादर्शनमित्यर्थः नच पृथक्सिद्धपदार्थाभावस्य जाग्रत्स्वप्नयोरपि समत्त्वात्तत्रैव सुषुप्तावपि पृथक् सिद्धपदार्थानुभवोऽस्तीति शङ्क्यम्। तत्र कर्मरूपदोषवशात् पृथकसिद्धपदार्थोपसम्भवात्सुषुप्तौ कर्मसम्वन्धाभावात् नचापृथक्सिद्धतया व्रह्मात्मकत्वेनैव विषयाणामुपलम्भोऽस्त्विति शङ्क्यम्। एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्मूढाः। छा० ८। ३। २। इतिछान्दोग्यरीत्याऽनृतशब्दितकर्मविशेषतिरोहिततया ब्रह्मण उपलम्भासम्भवेन ब्रह्मात्मकतयाऽप्युपलम्भासम्भवात्। ब्रह्मात्मकत्वाब्राह्मात्मकत्वोभयवहिर्भूतस्य पदार्थस्याभावादिति भावः॥ २३॥

यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशीत्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत्॥ २४॥

यद्वै तन्न रसयते रसयन्वै तन्नरसयते नहि रसयितूरसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत्॥ २५॥

यद्वै तन्न वदति वदन्वै तन्न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत्॥ २६॥

यद्वै तन्न शृणोति शृण्वन् वै तन्न शृणोति नहि श्रोतुःश्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्तनु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात्॥ २७॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मते-

र्मतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति नहि विज्ञातुर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति-ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

स्वप्नस्थानादौ नैवमित्याह—

यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत् पश्येदन्योन्यज्जिघ्रेदन्योन्यद्रसयेदन्योन्यद्वदेदन्योऽन्यच्छृणुयादन्योन्यन्मन्वीतान्योन्यत् स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥

यत्र स्थाने स्थितस्याल्पमपि पृथक्सिद्धं स्पर्शादिन्द्रियादिकञ्च करणं स्यात् तदा किञ्चिद्दृश्यं केनचित्करणेन कश्चित्पश्येदपि । इह तु पृथक्सिद्धदृश्यपदार्थाभावात्कर्म सम्बन्धोपरमं सकरणभूतेन्द्रियसम्बन्धाभावाच्च नान्यद्वस्तु दर्शनमिति भावः ॥ २४-२५-२६ २७-२८-२९-३०-३१ ॥

सलिल एकोद्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडितिहैनमनुशशास याज्ञवल्क्य एषास्य परमागतिरेषास्य परमो सम्पदेषोऽस्य परमोलोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥

यथा जले जलं निक्षिप्तमेकं भवति एवं सलिलवत्स्वच्छस्वभावे परमात्मनि लीनोऽयं द्रष्टा जीवः प्राज्ञात्मपरिष्वङ्गेनैकीभूतः सन्नद्वैतो भवति । एष सुषुप्त्याधार इव परमात्मा हे सम्राडिति याज्ञवल्क्योऽनुशिष्टवानित्यर्थः । ननु कथं सुषुप्त्याधारस्य ब्रह्मलोकत्वं

ब्रह्मलोको हि परमगतित्वादिना श्रूयते तत्राह-एषेति । जीवस्यार्चिरादिगत्या प्राप्यागतिरेषैव । एषास्य परमेति तत्त्वज्ञानादिना प्राप्याऽपि एषैव । एषोऽस्य परमोलोक इति शाश्वतं भोगस्थानमप्येष एव । एषोऽस्य परमानन्द इति निरतिशयानुकूलोऽप्यस्यायमेवेत्यर्थः । ननु स्वर्गादिषु भोग्यानुकूलेषु जाग्रत्सु कथमेतस्य परमानन्दत्वमित्यत्राह— एतस्येति । अन्यानि भूतानि वैषयिकसुखानुभवितारः एतस्य परब्रह्मण आनन्दमात्रां प्रतिबिम्बरूपविप्लुट्करमुपजीवन्ति । अश्नन्तीत्यर्थः ॥३२॥

**स यो मनुष्याणां राद्धः समृद्धो भवत्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मानुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एको कर्मदेवानामानन्दो ये कर्मणा देवत्वं सम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्योऽमात्येभ्य उदरौत्सीदिति ॥ ३३ ॥**

तस्य परमानन्दत्वं प्रपञ्चयति । स य इति । स यः कश्चिन्मनुष्याणां मध्ये राद्धोऽविकलः समग्रावयव इत्यर्थः समृद्ध उपभोगोपकरणसम्पन्नो भवति किञ्चान्येषां समानजातीयानामधिपतिः स्वतन्त्रः पतिर्न माण्डलिकः सर्वैः समस्तैर्मानुष्यकैरितिदिव्योपभोग-

करणनिवृत्त्यर्थं मनुष्याणामेव यानि भोगोपकरणानि तैः सम्पन्नो नामातिशयेन सम्पन्नः सम्पन्नतमः स मनुष्याणां परम आनन्दः शतगुणिता मनुष्याणामानन्दाः श्रद्धाकर्मभिः पितॄंस्तोषयित्वा जितपितृलोका ये पितरस्तेषामेकानन्द इत्यर्थः। सोऽपि शतगुणीकृतो गन्धर्वलोक एक आनन्दो भवति स च शतगुणीकृतः कर्मदेवानामेक आनन्दः कर्मदेवानामित्यस्यार्थमाह। ये कर्मणेति। ये अग्निहोत्रादिश्रौतकर्मणा देवत्वं प्राप्नुवन्ति ते कर्मदेवाः तथैवाऽऽजानदेवानामानन्द एकः। अजानत एवोत्पतित ये देवास्तआजानदेवाः। यश्च श्रोत्रियोऽधीतवेदोऽवृजिनो वृजिनं पापं तद्रहितोऽत अवकामहतः वीततृष्णः। मुक्त इति यावत्। यद्यपि मुक्तानन्दाजानदेवानन्दयोर्मेरुसर्षपवत्तारतम्यमस्ति तथाप्यन्यूनत्वे तात्पर्यम्। अत्र प्रजापतिशब्दश्चतुर्मुखपरः। तैत्तरीयके समानप्रकरणे प्रजापतेरानन्द इत्येकवचनान्तप्रजापतिशब्दश्रवणात् ततश्च चतुर्मुखानन्दशतगुणितो ब्रह्मलोकलक्षणआनन्दः। नच ते ये शतं स एक इतिनिर्देशाद्ब्रह्मानन्दस्य परिच्छिन्नत्वं शङ्कनीयम्। आधिक्यमात्रे तात्पर्यात् यथा क्षिप्तेषुरिव सर्पतीतिवाक्यं सूर्यगतिमान्द्यनिवृत्तिपरम्। यश्च श्रोत्रियोऽवृजिन इत्यादिकं पूर्ववद्व्याख्येयम्। अयं राजाऽतीवमेधावी मां सर्वेभ्यः प्रश्नेभ्य उदरौत्सीदुपरोधं कृतवान्। सर्वान् प्रश्नान् मामसौ प्रष्टुमुपक्रान्त इतः परं न त्यक्ष्यतीति बिभेतीत्यर्थः॥ ३३॥

जाग्रद्देशादुत्क्रमणं विवक्षुः स्वप्नान्तेऽवस्थापितस्य जीवस्य बुद्धान्तसञ्चरणं दर्शयति। स वा एष इति।

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव॥ ३४॥**

अस्यार्थः पूर्ववत्॥ ३४॥

**तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेव मेवायं शारीरआत्मा प्राज्ञेनाऽऽत्मनाऽन्वारुढ उत्सर्जद्याति यत्रैतदूर्ध्वच्छ्वासीभवति ॥ ३५ ॥**

यथाऽनः शकटं सुतरां समाहितं यत्रोपकरणे सम्भाराक्रान्तं सत् पूर्वदेशमुत्सृज्य याति एवमेव शकटस्थानीयो जीवः प्राज्ञेन परमात्मना सारथिस्थानीयेन सम्बन्धविशेषं प्राप्तः शरीरमुत्सृज्य याति कदेत्यत्राह— यत्रैतदिति । यदैतच्छरीरमूर्ध्वोच्छ्वासीत्यर्थः ॥ ३५ ॥

**स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा वन्धनात् प्रमुच्यते एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या द्रवति प्राणायैव ॥ ३६ ॥**

तदस्योर्ध्वोच्छ्वासित्वं कस्मिन् काले किं निमित्तं किमर्थं वा स्यादित्येतदुच्यते । सोऽयं प्राकृतः । शिरः पाण्यादिमान् पिण्डो यत्र यस्मिन् कालेऽणिमानमणो भावमणुत्वं कार्श्यं न्येतिनिर्गच्छति । तत्र हेतुमाह । जरया वोपतपता । स्वयमेव कालपक्कफलवज्जरया कार्श्यं गच्छति । उपतपतीत्युपतपज्ज्वरादिरोगस्तेनोपतपता वा उपतप्यमानो हि रोगेण विषमाग्नितयाऽन्नं भुक्तं न जरयति ततोऽन्नरसेनानुपचीयमानः सन् पिण्डः कार्श्यमापद्यते तदुच्यत उपतपतावेति ततः ऊर्ध्वोच्छ्वासीभवति । शरीरवतोऽवश्यंभाविन एतेऽनर्था इति वैराग्यायेदमुच्यते । आम्रफलं वोदुम्बरफलं पिप्पलफलं वा वृत्तवन्धनात् कालवशजीर्णात्प्रमुच्यते । एवमेवायं पुरुषः स प्राणकरणः म एतेभ्यः पाण्यादिभ्योऽङ्गेभ्यो मोक्षं प्राप्य यथापूर्वं ब्राह्मणादियोनिं प्रत्याद्रवति जीवनायेत्यर्थः ॥ ३६ ॥

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः**

**पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवं विदं सर्वाणि भूतानि प्रतिकल्पयन्त इदं ब्रह्माऽऽयातीद-मागच्छतीति ॥ ३७ ॥**

तत्कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते तद्यथेति । राजानं राज्याभिषिक्तमायान्तं स्वराष्ट्रे उग्रा जातिविशेषाः क्रूरकर्माणो वा प्रत्येनसः प्रत्येनसि पापकर्मणि नियुक्ताः प्रत्येनसस्तस्करदण्डनादौ नियुक्ता सूताश्च ग्रामण्यश्च सूतग्रामण्यः सूतावर्णसङ्करजाति-विशेषा ग्रामण्यो ग्रामनेतारस्ते पूर्वमेव राज्ञ आगमनं बुद्ध्वाऽन्नैर्भोज्य-भक्षणादिप्रकारैः पानैर्मदिरादिभिरावसथैश्च प्रासादादिभिः प्रति-कल्पन्ते निष्पन्नैरेव प्रतीक्षन्तेऽयं राजाऽऽयात्ययमागच्छतीत्येवं वदन्तः। यथायं दृष्टान्तः। एवं विदं कर्मफलस्य वेदितारं संसारि-णमित्यर्थः। कर्मफलं हि प्रस्तुतं तदेवं शब्देन परामृश्यते। सर्वाणि भूतानि एतद्भोगोपकरणभूतशरीरसाधनानि सर्वाणि भूतानि तत्तत् क्रमप्रयुक्तानि सति कर्मफलभोगसाधनैः रुहेदं ब्रह्म जीव आया-तीति प्रतीक्षंते इत्यर्थः एतच्छरीरत्यागसमनन्तरमेव शरीरान्तरसद्भो-ग्यभोगस्थानभोगोपकरणानि परमात्मसङ्कल्पवशेन प्रतिपुरुषं सम-ग्राणि भवन्तीत्यर्थः ॥ ३७ ॥

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्यो-ऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिस-मायान्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥**

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य तृतीयं ब्राह्मणम ॥३॥

---

तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातुमिच्छन्तमुग्राः प्रत्येनसः सूतग्रामण्यस्तं यथाऽभियान्त्याभिमुख्येन समायान्त्यै-

कीभावेन तमाभिमुखा आयान्त्यनाज्ञप्ता एव राज्ञा केवलं तज्जिगमिषाभिज्ञाः। एवमेवेममात्मानं भोक्तारमन्तकाले मरणकाले सर्वे प्राणा वागादयोऽभिसमायान्ति यत्रैतदूर्ध्वोच्छ्वासी भवतीत्यर्थः ॥ ३८ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां चतुर्थाध्याये
ज्योतिर्ब्राह्मणं तृतीयम् ॥ ३ ॥

---

**स यत्रायमात्माऽवल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥**

अत्रायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्यतेत्युक्तं संप्रमोक्षणं विस्तरेण वर्णयितुमारभते । स यत्रेति । सोऽयमात्मा प्रस्तुतो यत्र यस्मिन्कालेऽवल्यमवलभावं नेत्य प्राप्य संमोहमिव न्येति निगच्छति उत्क्रान्तिकाले हि करणोपसंहारनिमित्तं मोहं प्रतिपद्यते इवशब्दोऽल्पार्थे मरणायार्धसम्पत्तिः । अथास्मिन् काले एते प्राणा वागादय एनमात्मानमभिसमायान्ति तदास्य शरीरस्यात्मनोऽङ्गेभ्यः सम्प्रमोक्षणम् । कथं पुनः संप्रमोक्षणं केन प्रकारेणात्मानमभिसमायान्तीति उच्यते स एता इति । स आत्मा तेजोमात्रास्तेजोऽवयवारूपादिप्रकाशकत्वाच्चक्षुरादीनि करणानीत्यर्थः । ता एताः समभ्याददानः सामितिस्वप्नायेक्षया वैषम्यमुच्यते। अस्त्येव स्वप्नेऽभ्यादानं न तु सम्यक् । सवासनमभ्यादायेत्यर्थः हृदयमेव पुण्डरीकाकारमन्ववक्रामति अन्वगच्छति। चक्षुषि सन्निहितश्चाक्षुष इति म्रियमाणो जीव उच्यते स यदा रूपादिविषयपराङ्मुखः सन् हृदयदेशे पर्यावर्तत इत्यर्थः अथ तदुत्तरकालेऽयं मुमूर्षूरूपं न जानाति ॥ १ ॥

**एकीभवति न पश्यत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञानमेवान्वक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥**

स्वापकाल इवेन्द्रियैः सहैकीभवति तदैनं पार्श्वस्था आहुर्न पश्यतीति तथा घ्राणदेवतानिवृत्तो घ्राणमेकीभवति तदा न जिघ्रतीत्याहुः समानमन्यत् । तस्य हैतस्य म्रियमाणस्य सम्बन्धि यद्धृदयं तस्याग्रं नाडीमुखं निर्गमनद्वारं प्रद्योतते संहृतकरणतेजःप्रज्वलितं सत् प्रदीप्तं भवति तत्प्रकाशितद्वारः सन्नेष आत्मा निष्क्रामति चक्षुरादिद्वारेभ्यः । उत्क्रामन्तमध्यक्षं जीवं मुख्यप्राणोऽनूत्क्रामति तं मुख्यप्राणं तदधीना इतरे प्राणा अनूत्क्रामन्तीत्यर्थः । स विज्ञान इति । तस्यां दशायामुत्क्रामञ्जीवो 'यं यं वापि स्मरन् भावमि' त्युक्तन्यायेन प्राप्तव्ययोनिविषयकस्मृतिमान् भवतीत्यर्थः । तच्च ज्ञानं कर्माधीनं नतु पुरुषयत्नसाध्यम् । "ये योगिनः प्राणवियोगकाले यत्नेन चित्तेन निवेशयन्ती"तिस्मृत्युक्तरीत्या योगिनामेव हि ज्ञानं यत्नसाध्यमेवं स विज्ञानेनैव पुरुषं प्राणवर्गोऽनुगच्छतीत्यर्थः । तादृशञ्च पुरुषं विद्याकर्मपूर्ववासना अनुवर्त्तन्ते । न हि पूर्ववासनां विना कश्चित्कर्त्तुं भोक्तुं वा प्रभवति नह्यनभ्यस्ते विषये कौशलमिन्द्रियाणां भवति पूर्वानुभववासनाप्रवृत्तानामिन्द्रियाणामिहजन्मन्यभ्यासमन्तरेणैव कासुचित्क्रियासु चित्रकर्मादिलक्षणासु कौशलं दृश्यते केषाञ्चिदात्यन्तसौकर्ययुक्तास्वपि क्रियासु अकौशलं दृश्यते तदेतत्सर्वं पूर्ववासनोद्भवानुभ-

वनिमित्तकं तस्माद्विद्याकर्मपूर्ववासनालक्षणमेतत्त्रितयं शाकटिकसम्भारस्थानीयं परलोकपाथेयमित्यर्थः ॥ २ ॥

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति ॥ ३ ॥

यथा येन प्रकारेण तृणजलायूका तृणजलूका तृणस्यान्तमवसानं गत्वा प्राप्यान्यं तृणान्तरमाक्रममाक्रम्यत इत्याक्रमस्तमाक्रममाक्रम्याश्रित्यात्मानमात्मनः पूर्वावयवमुपसंहरन्त्यावयवस्थाने एवमेवायमात्मा यः प्राकृतः संसारीदं शरीरं पूर्वोपात्तं निहत्य तस्यैव विवरणमविद्यां गमयित्वा निःसम्वोध्यतामापाद्यान्यं शरीरलक्षणमाक्रममाक्रम्य स्वात्मानं पूर्वस्माच्छरीरादुपसंहरतिस्थूलदेहं त्यजति ॥३॥

तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं कुरुत एवमेवायमात्मेदं शरीरं निहित्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

पेशस्कारी कोशकारी कृमिः सुवर्णकारो वा पेशसः सुवर्णस्य मात्रामेकदेशमुपादाय यथाऽन्यत्कल्याणतरं रूपं कुरुते पेशसः पट्टतन्तोर्मात्रामंशमुपादाय नवतरं कल्याणजालं कुरुते एवमेवायमात्मेदं शरीरं निहत्यान्यद्रूपं कुरुते पित्र्यं पितृभ्योहितं पितृलोकोपभोगयोग्यं गान्धर्वं दैवं प्राजापत्यं ब्राह्मं गन्धर्वादिलोकोपभोग्यमित्यर्थः । अन्येषां भूतानां सम्बन्धिशरीरं करोतीत्यर्थः । कर्तृत्वञ्चास्य कर्मद्वारकं द्रष्टव्यम् ॥ ४ ॥

स वाऽयमात्मा ब्रह्म विज्ञानमयः मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म-

**मयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन अथोखल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥ ५ ॥**

वैशब्दोऽवधारणे । सोऽयं विज्ञानमय आत्मा ब्रह्मैव सन्नपहतपाप्मत्वादिब्रह्मरूपयुक्तोऽपि सन् मनोमयः । उपकरणोपकरणिलक्षणसम्बन्धेन मनःप्रचुरो मन उपकरणक इति यावत् । एवं प्राणमय इत्यादावपि द्रष्टव्यम् । अतेजोमयस्तेजोव्यतिरिक्तमहंकारादिमयः चतुर्विंशतितत्त्वमयत्वाच्छरीरस्येति द्रष्टव्यम् । अकाममयः कामव्यतिरिक्तसंकल्पश्रद्धामय इत्यर्थः । अक्रोधमयः । प्रीतिमयः । तद्यदेतदिति । ब्रह्मापेक्षया नपुंसकलिङ्गनिर्देशः । इदमयोऽदोमयः । एतल्लोकपरलोकमयः । यथाकारीति । यथाकर्त्तुं यथाचर्त्तुं शीलमस्य सोऽयं यथाकारी यथाचारी । अग्निहोत्रादिकन्तु कर्म-तद्योग्यतापादकं नित्यकर्मानुष्ठानन्त्वाचरणम् । एतत चरणादितिचेन्नोपलक्षणार्थेति काष्र्णाजिनिः । ब्र० सू० । ३ । १ । ६ ॥

इतिसूत्रभाष्ये स्पष्टम् । तथा भवति तत्फलयुक्तो भवति । तदेव प्रपञ्चयति । साधुकारीति । सत्कर्मकारी ब्राह्मणादिरमणीयशरीरयुक्तो भवति । पापकारी च चाण्डालादिः कुत्सितशरीरयुक्तो भवति साधुकारित्वपापकारित्वे अपि प्राक्तनपुण्यपापप्रयुक्त इत्याह । पुण्यइत्यादिना । अथोशब्दः पक्षान्तरपरिग्रहे यद्यपि पुण्यपापे शरीरग्रहणकारणे तथापि कामप्रयुक्तो हि पुरुषः पुण्यपापकर्मणी उपचिनोति तथाच काम एवास्य संसारस्य मूलम् ॥ ५ ॥

**तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह**

करोत्यम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणइति नु कामयमानः । अथाकामयमानो योऽकामो निष्काम आत्मकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥

एतस्मिन्नर्थ एष श्लोको भवति । सह कर्मणा यत्कर्मफलासक्तः सन्नकरोत् तेन कर्मणा सहैव तदेति तत्फलमेति लिङ्यते ऽवगम्यते ऽवगच्छति येन तल्लिङ्गं तन्मनो यत्र यस्मिन्निषक्तं निश्चयेन सक्तमुद्भूताभिलाषमस्य संसारिणः तदभिलाषो हि तत्कर्मकृतवान् तस्मात्तन्मनोऽभिषङ्गवशादेवास्य तेन कर्मणा तत्फलप्राप्तिरुपेणैतसिद्धं भवति कामो मूलं संसारस्येति । प्रकृतमनुसरति । प्राप्यान्तमिति । इह लोके फलमुद्दिश्य यत्कर्म करोति तस्य कर्मणोऽन्तभोगावसानं प्राप्य कृत्स्नफलं भुक्त्वेति यावत् । तस्माल्लोकादस्मै लोकाय पुनरेति किमर्थमित्यत्राह । कर्मण इति । कर्मकर्त्तुमित्यर्थः । इति तु कामयमान संसरतीत्यर्थः । एवमविद्वद्विषयं संसारं सप्रपञ्चमुपवर्ण्य विदुषस्तद्वैलक्षण्यथं दर्शयति । अथेति । अथशब्दोऽर्थान्तरपरिग्रहे अकामयमानो वीतरागः । योऽकामः कामशून्यः कथं कामशून्यतेत्यत्राह । निष्काम इति । निर्गताः कामा यस्मात्स तथोक्तः । पूर्वस्थितानां कामानां निर्गतत्वादकामत्वमुपपद्यत इति भावः । आप्तो कामो येन स तथोक्तः कथमाप्तकामत्वमित्यत्राह । आत्मकाम इति । आत्मैव कामो यस्य स तथोक्तः । आत्मव्यतिरिक्तस्य कामस्य वस्तुनोऽभावादात्मरूपकामस्य नित्यसिद्धत्वादात्मकामत्वम् । अतएवाकामत्वञ्चेत्यर्थः । एतादृशं वस्तु ब्रह्मैव सन् ब्रह्माप्येतीति योजना । ब्रह्मैव सन्नाविर्भूतब्रह्मरूपः सन परब्रह्मणि लीनो भवति ॥ ६ ॥

तदेव श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति तद्यथाऽहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतमेवेदं

**शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥७॥**

तत्तत्र ब्रह्मविद्विषय एष श्लोकः प्रवृत्तो भवतीत्यर्थः। कामा दुर्विषयगोचरमनोरथा हृद्गता यदा भवन्ति तदनन्तरमेवोपासको मर्त्योविनष्टाश्लिष्टपूर्वोत्तराघो भवति। अत्र ब्रह्म समश्नुते। अत्रैवोपासना-वेलायां ब्रह्मानुवभतीत्यर्थः। तद्यथा अहेर्निर्ल्वयनी सर्पत्वक् साऽहि निर्ल्वयनी वल्मीके सर्पाश्रये वल्मीकादावित्यर्थ. मृता प्रत्यस्ता प्रक्षिप्ता मृता सर्पेण परित्यक्ता शयीत वर्त्तेत। एवमेवेदंशरीरंजीवेन परित्यक्तं शेते ब्रह्मविदः शरीरमहंबुद्ध्यगोचरतया परित्यक्तमपि पश्यतां ब्रह्मविच्छरीरमिव भासमानं शेते। अथानवरतब्रह्मानुभवानन्तरम-मृतोऽपि मरणरहितोऽपि मरणात्प्रागशरीरकल्प एवेत्यर्थः। शरीरस्पर्शिपरवादादिजनितविषादाद्यभावादिति भावः। प्राणो ब्रह्मैव प्राण-भृत्वेऽपि तदा तात्त्विकब्रह्मानुभवसत्त्वात्। आविर्भूतब्रह्मरूपइवेत्यर्थः तेज एव अज्ञानलक्षणान्धकारप्रतिभटएवेत्यर्थः। एवं प्राप्तब्रह्मविद्योजनक आह सोहमिति। स्पष्टोर्थः॥ ७॥

**तदेते श्लोका भवन्ति ।**

तत्रास्मिन्विषये श्लोकाभवन्ति ।

**अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव। तेन धारा अपियन्ति ब्रह्मविदः स्वर्गं लोकमितउर्ध्वं विमुक्ताः ॥ ८ ॥**

अणुदुर्विज्ञानो मानान्तरानधिगम्यः विततो वेदान्तेषु विस्तरेण प्रतिपादितः। पुराणोऽनादिः मां स्पृष्टः। मां प्राप्तः शताधिकनाडीद्वारा स्वदेहस्पर्शीत्यर्थः। मयैवानुवित्तो भोगदशायां मयैवानुभूतश्च योयं पन्था अर्चिरादिमार्गस्तेन मार्गेण धीराः प्रज्ञाशालिनो ब्रह्मविद इतोऽस्माद्देहाद्विमुक्ताः सर्वेभ्यो लोकेभ्य ऊर्ध्वं स्वर्गं भगवल्लोकमत्रस्वर्गशब्दः प्रकरणाद्भगवल्लोकपरः। अपियन्ति प्राप्नुवन्तीत्यर्थ ॥ ८ ॥

**तस्मिञ्छुक्लमुतनीलमाहुः पिङ्गलं हरितं लोहितञ्च ।
एष पन्था ब्राह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥९॥**

तस्मिन्नर्चिरादिकेमार्गे विप्रतिपत्तयो मुमुक्षूणामित्थं । तस्मिञ्शुक्लं शुद्धं विमलमाहुः केचिन्मुमुक्षवो नीलमन्ये पिङ्गलं वह्निज्वालातुल्यम् । लोहितं जपाकुसुमसन्निभम् । 'एष शुक्ल एष नील' इत्यादिश्रुत्यन्तरात् । एष पन्था एषोऽर्चिरादिपन्था ब्रह्मणानुवित्तः सम्बद्धः ब्रह्मपथ इति यावत् । तेन मार्गेण पुण्यकृद्ब्रह्मवित् पूर्वंपुण्यं कृत्वा तद्वशेन शुद्धान्तः करणो ब्रह्मविच्च तैजसश्च तैजसस्तेजःसम्बन्धी तेज उपासकः पञ्चाग्निविद्यानिष्ठ इति यावत् ॥ ९ ॥

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ततो भूय इव ते तमो य उ विद्यायां रताः ॥१०॥**

ये केवलं स्वर्गादिफलोद्देशेन कर्मानुतिष्ठन्ति न तु ब्रह्मज्ञानार्थितया तेऽन्धं तमः प्रविशन्ति दुस्तरं संसारलक्षणमन्धकारं प्रतिपद्यन्ते । य उ विद्यायां रता उशब्दोऽवधारणे नित्यनैमितिकं कर्म परित्यज्य विद्यायामेव यतन्ते । 'मोहात्तस्य परित्यागस्तामसः परिकीर्तित' इत्युक्तरीत्या तामसत्यागवशात्संसारमेव प्रविशन्तीत्यर्थः । नानेन वाक्येन ज्ञानकर्मणोः समुच्चय इति मन्तव्यम् । ज्ञानव्यतिरिक्तोपायनिषेधकवचनैर्ज्ञानस्य मोक्षोपायत्वप्रतिपादकवचनैः कर्मणां ज्ञानाङ्गत्वप्रतिपादकवचनश्च भूयोभिर्विरोधप्रसङ्गात् ॥ १० ॥

**अनन्दानाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते-प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः ॥ ११ ॥**

बुधः । वोधयतीतिभूत बुधः न वुधोऽवुधः ब्रह्मज्ञानहीना भगवत्स्वरूपमविद्वांसो जनाः ते प्रेत्य मृत्वा अन्धयतीत्यन्धेन तमसावृता अनन्दाः खसुविरुद्धा दुःखरूपास्तेप्रसिद्धा ये लोकास्तानभिगच्छन्तीत्यर्थः ॥ ११ ॥

**आत्मानञ्चेद्विजानीयादयमस्मीति पुरुषः किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥**

टीका। यद्ययं पुमान् स्वात्मानमेतादृशोऽहमस्मि देहेन्द्रियमनः प्राणधीभ्यो भिन्नो ब्रह्मात्मकोऽहमस्मीति विजानीयात्तदा तर्हि किमिच्छन् तस्यैव विवरणं कस्य कस्मै कामायेति कथमिति यावत् शरीरं शरीर छेदादिक मनुसंज्वरेत् दुःखी भवेदित्यर्थः। यदि जीवः स्वस्य ब्रह्मात्मक त्वानुसन्धानयोग्यः स्यातर्हि दुःखी न स्यात् परब्रह्मणि दुःख स्याभावादिति भावः॥ १२॥

चिदचिद्भ्यां भिन्नाभिन्नो वासुदेव इति ज्ञानं मोक्षसाधनमित्यत्र मन्त्रान्तरं पठति।

**यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देह्ये गहने प्रविष्टः। स विश्वकृत्स हि सर्वस्य कर्त्ता तस्य लोकः स उलोक एव॥ १३॥**

टीका। हि यस्मात् स आत्मा सर्वस्य कर्त्ता अस्मिन् देहे विद्यमानं यद्गहनं हृद्गुहास्थानं तस्मिन् प्रविष्टः स आत्मा यस्य येनोपासकेनानुवित्तो मननाभ्यासेन भिन्नाभिन्नत्वेना वगतः प्रति बुद्धो ध्यातश्च तस्योपासकस्य एक प्रधानः स एव लोको भवति स कः यो लोकः परमात्मन इति शेषः उशब्दः प्रसिद्धौ॥ १३॥

**मू०—इहैव सन्तोऽथविद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति॥१४॥**

टीका। सद्गुरूपदेशेनैव ज्ञानं सम्पादनीयं यदुल्लङ्घने ह्यनर्थ-प्राप्तिरितीममर्थं मन्त्रान्तरेण द्रढयति। इहैवेति। बुध इत्युक्ते ज्ञानी इहेति परामृश्यते इह ज्ञाननि बोधके विद्यमाने एव सन्तः तत्वातत्व दर्शिनः संसाराद्विरक्तः वयं तत् परं ब्रह्म विद्मः जानिमः। वेदपुरुषवचनमेतत्। कालान्तरे सम्पादयिष्ये ब्रह्मज्ञानमितिवदन्तं प्रत्याह। नेति। तस्मिन् बोधके सत्यपि चेद्यदि नावेदीः परं ब्रह्म न जानीया तर्हि महती विनष्टिः। सद्गुरु[illegible] य एतदिति।

एतत्परं ब्रह्म सद्गुरुपदेशेनेतिशेषः । नचेदवेदीर्महति विनष्टि रित्युक्तमेव विवृणोति । अथेतर इति । गुरुपदेशलङ्घिन इत्यर्थः दुःखमेवान्धं तम इत्यर्थः ॥ १४ ॥

**मू०—यदैतमनुपश्यन्त्यात्मानं देवमञ्जसा ॥ ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥**

टीका । ज्ञानमहात्म्यप्रतिपादकं मन्त्रमाह । यदेति । ये भूतभव्यस्येशानं देवं क्रीडादिगुणमेतमात्मानं यदांजसानुपस्यन्ति ततस्तदनन्तरं न विजुगुप्सते तदा सर्ववस्त्वैकात्मज्ञानात् सर्ववस्तुषु निन्दा न प्रवर्तते ॥ १५ ॥

**मू०—यस्मादर्वाक् सम्वत्सरोऽहोभिः परिवर्त्तते तद्देवा-ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥**

टीका । यस्माद् भूतभव्येशात् परमात्मनोऽर्वाक् तदन्यविषयेति यावत् कालात्मा सम्वत्सरः स्वावयवैरहोभिः परिवर्त्तते परिच्छेदकत्वेन परिवर्त्तते य आत्मा सम्वत्सरमासादिलक्षणकालपरिच्छेदातीत इत्यर्थः । ज्योतिषां ज्योतिः प्रकाशकानां प्रकाशकममृतं कालापरिच्छिन्नम् आयुः सर्वप्राणिप्राणनहेतुभूतं तं ह देवा उपासते देवोपास्यत्वन्तु तस्यैवेत्यर्थः ॥ उक्तञ्च श्रीवादरायणाचार्यैः ज्योतिषि भावाञ्च । ब्र० सू० । १ । २ । ३२ । इतिसूत्रे ॥ १६ ॥

**यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।**
**तमेवमन्ये आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥**

टीका । पञ्चजनसंज्ञा पञ्चाकाशश्च यत्र प्रतिष्ठितः अत्राकाशशब्दो भूतान्तरस्याप्युपलक्षकः । श्रुतयश्चसङ्ख्याविशेषितत्वात् पञ्चसङ्ख्या ज्योतिरन्तरप्रसिद्धभावाच्च परिशेषेणेन्द्रियत्वावगम इति श्रीवादरायणाचार्यैरुक्तम् तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् । तादृशमात्मानममृतं ब्रह्मेत्येवं विद्वानन्योऽप्यमृतो भवतीत्यर्थः ॥ १७ ॥

पञ्चशब्दनिर्दिष्टानि ज्योतींषि कानीत्यपेक्षायामाह—

**प्राणस्य प्राणमुतचक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्मपुराणमग्रचम् ॥ १८ ॥**

प्राणशब्देन स्पर्शेन्द्रियं गृह्यते वाय्वाप्यायितत्वात् । स्पर्शेन्द्रियस्य मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । चक्षुष इति । चक्षुरिन्द्रियं गृह्यते श्रोत्रस्येति श्रोत्रेन्द्रियं मनस इतिमनो गृह्यते । एतादृशं ये जानन्ति ते पुराणमग्र्यं परं ब्रह्म निश्चितवन्त इत्यर्थः ॥ इदञ्च चिन्तितं समन्वयाध्याये चतुर्थपादे तत्र हि यस्मिन् पञ्च पञ्चजनाकाशश्च प्रतिष्ठितः । इतिवाक्ये पञ्चविंशतिसङ्ख्याप्रतीतेः साङ्ख्यतन्त्रसिद्धपञ्चविंशतितत्त्वप्रतिपादक परमेवेदं वाक्यमिति पूर्वपक्षं कृत्वा सिद्धान्तितम् ।

न सङ्ख्योपग्रहादपि नानाभावादतिरेकाच्च ॥ ब्र० सू० १।४।११॥

पञ्चविंशतिसङ्ख्योपग्रहादपि न साङ्ख्यतत्त्वप्रतीतिः कुतः नानाभावात् पृथग्भावात् तद्वैलक्षण्यात् । यस्मिन् पञ्च पञ्चजना इति यच्छब्दनिर्दिष्टब्रह्मात्मकताप्रतीतेः । आत्माकाशाभ्यां सङ्ख्यातिरेकाच्च । अत्र पञ्चविंशतिसङ्ख्याप्रतीतिरेव नास्ति समाहारसमासे स्त्री प्रत्ययाभावपुल्लिङ्गयोः छान्दसत्वेन समर्थनीयत्वात् पञ्चजनशब्दस्य संज्ञाशब्दत्वमभ्युपगम्य दिक्सङ्ख्ये संज्ञायामितिसूत्रविहितसंज्ञासमासवर्णनोपपत्तेः तथाचावयवार्थमनपेक्ष्य पुरुषाविधानपरोयं पञ्चजनशब्दः । ननु तर्हि पञ्चजनसंज्ञकाः के त इत्यपेक्षायां लक्षणया पुरुष सम्बन्धिनः प्राणादयः पञ्चजनशब्दवाच्या इत्याह ।

प्राणादयो वाक्यशेषात् ॥ १ । ४ । १२ ॥

ननु शतपथब्राह्मणे माध्यन्दिनानामेवान्नपाठः न कण्वाना मतस्तेषां प्राणादयः पञ्चजनाः न स्युरित्याशङ्क्याह ।

ज्योतिषैकेषामसत्यन्ने ॥ ब्र० सू० ।१।४।१३॥

एकेषां काण्वानां पाठे। अन्नेऽसति तदेव ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति पूर्वमन्त्रपठितज्योतिषा पञ्चत्वसङ्ख्या पूर्य्येत माध्यन्दिनानां समानमन्त्रपठितप्राणादिपञ्चकस्य लाभात्। नान्यमन्त्रपठितज्योतिश्शब्दापेक्षेतिभावः काण्वानान्तु पञ्चमस्याभावात् भवत्यन्नस्यापेक्षेति भावः यथा समाने रात्रे वचनभेदात् षोडिशिनोग्रहणाग्रहणे तद्वत्। प्रकृतमनुसरामः ॥ १८ ॥

तज्ज्ञाने साधनमाह। मनसैवेति।

**मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

अनु पश्चाच्छ्रवणमननानन्तरमित्यर्थः मनसैव द्रष्टव्यम्। अनवरतभगवद्गुणस्मृतिसन्ततिरूपध्यानं विशुद्धेन मनसा सम्पाद्यमित्यर्थः। इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति तस्य सर्वास्वपि उपनिषत्स्वेकत्वावधारणात्। कारणनानात्वदर्शनस्य फलमाह। मृत्योरिति। नित्यसंसारी भवति परमेश्वरे नानात्वदर्शित्वात्। इवशब्दोऽल्पार्थः "इवोपमायामल्पे चे" ति कोषात्। स च कैमुत्यन्यायपरः कारणे ब्रह्मणि यद्यल्पनानात्वदर्शनस्यापीदृक्फलं किंपुनर्वहुत्वेनेत्यर्थः ॥ १९ ॥

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ॥ विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ २० ॥**

अप्रमेयमपरिच्छेद्यं ध्रुवम् नित्यम्। ब्रह्मैकत्वेनैव द्रष्टव्यम्। विरजो रागादिदोषरहितः। आकाशादपि परः कारणभूतः ध्रुवः स्थिरोऽविनाशीत्यर्थः। अजः = उत्पत्तिरहितः। एवम्भूतोमहानात्मा॥२०॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः नानुध्यायाद्वहूञ्छब्दान्वाचो विग्लापनं हि तदिति ॥ २१ ॥**

तादृशमात्मानं धीरः प्रज्ञाशाली विज्ञाय श्रवणमननाभ्यां ज्ञात्वा प्रज्ञां निदिध्यासनं कुर्वीत। अत्र ब्राह्मणग्रहणं द्विजातेरुप-

लक्षणम् । यद्वा ब्रह्माधीत इति । ब्राह्मणोऽधीतवेद इत्यर्थः । बहून् शब्दान्नानुध्यायात् न चिन्तयेदित्यर्थः तद्वागानुध्यानादिकं वाचो-विग्लापनं विग्लानिसाधनं श्रमजनकमित्यर्थः । इति मन्त्रसमाप्तौ ॥२१॥

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्व-स्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एषसेतुर्विधारण एषां लोकानामसम्भेदायनमेतं वेदा-नुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाश-केनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनोलोकमि-च्छन्तः प्रव्रजन्ति । एतद्धस्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोयमात्माऽयं-लोक इति ते हस्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा यावित्तैषणा सा लोकैषणोभे ह्येते एषण एव भवतः स एष नेतिनेत्यात्मा गृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते नरिष्यत्येतमुहैवेते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उहैवेष एते तरति नैनं कृताकृते न यतः ॥ २२ ॥

एष मन्त्रोक्तो महानज आत्मा स वै स एव स क इत्यतोयोऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिरित्युक्त एवेति भावेन तद्वाक्यमर्थतोऽनुवदति । योऽयमिति । योऽयं निर्दिष्ट आत्माऽयं कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति निर्दिष्टे जीवात्मनि शेते तदन्तर्यामितया वर्त्तते । तत्र हृद्यन्तरित्यस्य व्याख्यानंय एषोऽन्तर्हृदय इति । ज्योतिरितित्यस्य व्याख्यानमाकाश इति ।ज्योतिराका-शब्दयोः प्रकाशकत्वार्थकत्वेनैकार्थत्वात् । अतश्चात्राकाशशब्दो जीवपर एव ।

सर्वस्य ब्रह्मरुद्रादेर्वशी सर्वोह्यस्य वशे वर्त्तते। सर्वस्येशानः नियन्ता सर्वस्याधिपतिः सर्वस्यांशी स न साधुनेति। साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्य इत्यर्थः। यश्चैषः प्रसिद्धः सर्वेश्वरः सर्वेश्वरत्वं न सादि किन्तु यश्चैषभूताधिपतिर्नास्याधिपत्यमादिमदिति भूताधिपतिः। यश्चैषभूत एव पालकः यश्चैष एषां लोकानामसम्भेदायासाङ्कर्याय एषां लोकानां विधारणः विधारणसमर्थः न केवलं सामर्थ्यमात्रं किन्तु एषां लोकानां सेतुराश्रयश्च तमेतमुक्तगुणवन्तं भगवन्तं ब्राह्मणा वेदानुवचनेन वेदाध्ययनेन यज्ञेन दानेन तपसा कायक्लेशात्मकेन अनाशकेनानशनव्रतेन विविदिषन्ति वेत्तुमिच्छन्तीति अनाशकेनशरीरनाशाकरणेन तपसेति विशेषणविशेष्यभावो वा अश्वेन जिगमिषतीत्यत्र यथाश्वस्य धात्वर्थगमनसाधनत्वमेव नत्विच्छासाधनत्वम्। एवमत्रापि यज्ञादेर्धात्वर्थवेदनसाधनत्वमेवोच्यत इत्यवगन्तव्यम् वेदनेन किं स्यादित्यत आह। एतमेवेति एतं पूर्वोक्तमहिमानं परमात्मानमेव विदित्वा मुनिर्भवति मननशीलो योगी भवति नान्य इत्यर्थः। किञ्चैतं परमात्मनमेव लोकमाश्रयमिच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति नषिद्धकाम्यकर्मत्यागलक्षणसंन्यासं स्वीकुर्वन्ति तदेतत् भगवानेवाश्रय इति प्रमेयं विद्वांसः पूर्वेऽपि। प्रजामुपलक्षणमेतत निषिद्धं वस्तु न कामयन्ते। हस्म वा इति निपातत्रयं सुप्रसिद्धिद्योतकम्। प्रजाद्यकामने कारणं निरूपयति किमिति। येषां नोऽस्माकमयं पूर्वोक्तमहिमाविशिष्टो भगवानात्मा स्वामी अयं लोक आश्रयश्च ते वयं प्रजया किं करिष्याम इति भावेन प्रजां न कामयन्त इति सम्बन्धः। तर्हि ते किं कृतवन्त इत्यत आह। तेहेति। व्याख्यातमेतत। महिमान्तरमाह। एतमिति। अहं पापमकरवं कृतवानिति। अहं कल्याणमकरवं कृतवानिति द्वेचिन्ते एतं ब्रह्मविदं न तरतो न प्राप्नुत इत्यर्थः। तत्रहेतुमाह। उइवैषइति। यस्माद्धेतोरस्मिन्नेवलोके वसन् पुण्यंञ्चपापञ्च तीर्णवान्। तत्रहेतुः नैनं कृताकृते तपतः। एनं हि ब्रह्मविदंकृताकृते सुकृतदुष्कृते फलसम्बन्धिनं कर्त्तुं न प्रभवतः। एवं विदि पापकर्म न श्लिष्यत इत्यश्लेषश्रवणादिति भावः॥ २२॥

तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्मणा नो कनीयान् तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवं वि-च्छान्तो दान्त उपरतस्तितिक्षुःसमाहितो भूत्वाऽऽत्मन्येवात्मा-नं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति । विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति । एष ब्रह्म लोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि माश्चापि सह दास्यायेति ॥ २३ ॥

उक्तार्थे प्रमाणमप्याह । तदेतदिति । तदेतत् पुण्यपापसन्त-रणमभिमुखीकृत्य ऋचोक्तमित्यर्थः । तामेव ऋचं पठति । एष इति । ब्राह्मणस्य ब्रह्मविदो य एष महिमा स नित्यो ब्रह्मज्ञाना-नन्तरं यावदात्मभावितयाऽनुवर्त्तत इत्यर्थः । कोऽसौ महिमेत्यत्राह न वर्धते कर्मणा नो कनीयान् तस्यैव स्यात् । पदवित् । तस्य ब्रह्मणः पदवित् पद्यत इतिपदं स्वरूपं ब्रह्मस्वरूपविदिति यावत् । स पुण्यपापलक्षणकर्मकृतोत्कर्षापकर्षशून्यो भवतीत्यर्थः । एष महिमा ब्रह्मविद इत्यर्थः । महिमज्ञानफलमाह तं विदित्वा न लिप्यते कर्मणा पापकेन तं ब्रह्मविन्महिमानं विदित्वा पापकेन कर्मणा न लिप्यत इत्यर्थः । तस्मादेवमिति । एवंविच्छास्त्रजन्यज्ञानवान् । शमः अन्त-रिन्द्रियनियमनरूपः । दमः बहिरिन्द्रियनियमनरूपः उपरतिः निषि-द्धकाम्यादिषु कर्मसूपरतिः तितिक्षा क्षमा । सुसमाहितः समाहित-चित्तः । एवं रूपः सन्नात्मनि जीवात्मनि आत्मानं परमात्मानं तदन्तर्यामिणं पश्यति पश्येदित्यर्थः । नैनमिति । एनं ब्रह्मविदं पाप्मा पुण्यपापलक्षणं कर्म न तरति न प्राप्नोति । अयन्तु ब्रह्मवित् सर्वं पाप्मानं तरति सर्वपापातिगो भवतीत्यर्थः । एनं ब्रह्मविदं पाप्मा न बाधते । अयमेव सर्वं पाप्मानं ज्ञानाग्निना दहतीत्यर्थः । विपापः पापशून्यः विरजो विरागः । अविचिकित्सः संशयशून्यः

ब्राह्मणो ब्रह्मविद्भवतीत्यर्थः एष ब्रह्मलोक इति हे सम्राडेष आत्मानं-पश्येदिति द्रष्टव्यतयोक्तो यः स ब्रह्मलोको ब्रह्मैव लोको ब्रह्मलोकः। एवमनुशिष्टब्रह्मविद्यः स्वराज्यं सर्वं ददामि राज्येन सहात्मानमपि कैङ्कर्यार्थं ददामीति जनक उवाचेत्यर्थः॥ २३॥

**स वा एष महानज आत्माऽन्नादो वसुदानो निन्दते विन्दते वसु य एवं वेद॥ २४॥**

**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयं ब्रह्माभयं वैब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद॥ २५॥**

इतिबृहदारण्यकोपनिषदि चतुर्थाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

---

आत्मोपासकानामुपासनातारतम्येन फलप्रद इति। अन्नादोऽन्नादः। वसुदानो वसुप्रदः। अनेन प्रकारेण ब्रह्मोपासीनोऽन्नं वसु च लभते॥ स वा एष इति। जरामरणशून्योऽसंसारी अतएव भयशून्यः। एवम्भूतोऽयमात्मा ब्रह्म निरतिशयं बृहत् तत्र हेतुमाह। अभयं वै ब्रह्मेति। अमृतमभयमेतद्ब्रह्मेति। निरुपाधिकाभयाश्रयत्वस्य परब्रह्मत्व-प्रसिद्धेरिति भावः तज्ज्ञानस्य फलमाह। अभयं वै ब्रह्म भवति य एव वेद ब्रह्म भवति। आविर्भूतब्रह्मस्वरूपो भवतीत्यर्थः॥ २५॥

इतिबृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां चतुर्थाध्यायस्य
चतुर्थं शारीरब्राह्मणम्॥ ४॥

---

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्॥ १॥**

अथेति हेतूपदेशानन्तर्यप्रदर्शनार्थः। हेतुप्रधानानि हि वाक्यान्य-तीतानि तदनन्तरमागमप्रधानेन प्रतिज्ञातोऽर्थो निगम्यते मैत्रेयी ब्राह्मणेन। हशब्दो वृत्तावद्योतकः याज्ञवल्कस्यर्षेर्द्वे भार्ये पत्न्यौ बभूवतु

रास्तां मैत्रेयीनामतः एका परा कात्यायनी नामतः। तयोर्भार्ययोर्मैत्रेयी। ह किल ब्रह्मवादिनी ब्रह्मवदनशीला बभूवासीत् स्त्रीप्रज्ञा स्त्रियां योचिता प्रज्ञा सा स्त्रीप्रज्ञा सैव यस्याः। गृहप्रयोजनान्वेषणलक्षणा सा स्त्रीप्रज्ञैव तर्हि तस्मिन् काल आसीत् कात्यायनी। अथैवं सति ह किल याज्ञवल्क्योऽन्यत पूर्वस्माद्गार्हस्थलक्षणाद्वृत्तात् तुरीयाश्रममुपाश्रयिष्यन्नित्यर्थः॥ १॥

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥२॥

हे मैत्रेयीति ज्येष्ठां भार्यामामन्त्रयामास। आमन्त्र्य चोवाच ह प्रव्रजिष्यन् पारिव्राज्यं करिष्यन् वा अरे मैत्रेय्यस्मात्स्थानाद्गार्हस्थ्यादहमस्मि भवामि मैत्रेय्यनुजानीहि मोहन्तेच्छसि यदि तेऽनया कात्यायन्याऽन्तं करवाणीत्यादिव्याख्यातम्॥ २॥

सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽऽहो ३ नेति नेति होवाच याज्ञवल्क्योयथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशाऽऽस्ति वित्तेनेति॥ ३॥

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति॥ ४॥

सैवमुक्तोवाच मैत्रेयी सर्वेयं पृथिवी वित्तेन पूर्णा स्यान्नु किं स्यां किमहं वित्तसाध्येन कर्मणाऽमृताऽऽहो न स्यामिति नेति होवाच याज्ञवल्क्य इत्यादि समानमन्यत्॥ ३। ४॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवति सती प्रियमवृधद्धन्त तर्हि भवत्येतद् व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति॥ ५॥

हे भवति नः प्रिया सती प्रियामेवावृधद्वर्धितवती अनुकूलभाष-

णादिति भावः। द्युतादित्वादङ् द्युद्भ्योलुङीतिपरस्मैपदम्। अतस्तुष्टोऽहं हे भवति अमृतत्वसाधनं जिज्ञासमानायै तुभ्यं व्याख्यामि व्याचक्षाणस्य मेवाक्यं निदिध्यासस्व सावधानं शृण्वित्यर्थः॥ ५॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति। न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवंति नवा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षात्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षात्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे वेदानां कामाय वेदाः प्रियाभवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्॥ ६॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षात्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्रात्मनो वेदान् वेद। भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादुर्योऽन्यत्रात्मनः सर्वं वेदेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा॥ ७॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दोगृहीतः ॥ ८ ॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दोगृहीतः ॥ ९ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरे अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमशितं पायितमयञ्चलोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥

स यथा सर्वासामपां समुद्रएकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां गन्धानां नासिके एकायनमेवं सर्वेषां-रसानां जिह्वैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वानां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

स यथासैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो

भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यपरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥

यथा सैन्धवघनो लवणखण्डोऽनन्तरोऽन्तरावयवव्यतिरिक्तो-ऽबाह्यो बाह्यावयवव्यतिरिक्तश्च सर्वोऽप्यवयवो यथारसघनो भवति अत्रान्तरो बाह्यश्च रसघन इति वक्तव्येऽनन्तरत्वबाह्यत्वशून्यानां मध्यवर्त्तिनामपि ग्रहणं यथा स्यादिति अनन्तरोऽबाह्य इति व्यतिरेक-मुखेण निर्देशः 'एवञ्च सति निरवयवात्मसाधारणमपि फलितं भवतीति द्रष्टव्यम् ।' एवमेवायमात्मा सर्वत्र विज्ञानघनजीवशरीरक इत्यर्थः जीवपरयोः स्वरूपेणैक्याभावाच्छरीरात्मभाव इदं सामानाधि-करण्यं द्रष्टव्यम् ॥ १३ ॥

सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपत् न वा अहमिमं विजानामीति स होवाच नवा अरे हं मोहं ब्रवीम्य-विनाशीवाऽरेऽयमात्मानुच्छित्तिधर्मा ॥ १४ ॥

अत्रैव न प्रेत्य संज्ञाऽस्तीत्यस्मिन्नर्थेभगवान्मामां मोहमध्यमा-पीपत् प्रापितवान् । पते णौंचङ् । न विद्यते उच्छित्तिर्यस्य-सोऽनुच्छित्तिः । अविनाशीतियावत् । अनुच्छित्तिधर्भो यस्य सोऽनुच्छित्तिधर्मा । एवंबहुव्रीहिगर्भोबहुव्रीहिः । तस्य ज्ञानलक्षणो धर्मोऽप्यविनाशीत्यर्थः । नतूच्छित्त्यभावोऽनुच्छित्तिसधर्मो यस्येति बहुव्रीहिः । अविनाशीत्यनेन पौनरुक्त्यप्रसङ्गादिति द्रष्टव्यम् ॥ १४ ॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्रत्वस्य सर्वमात्मैवाभूत्त-त्केन कं पश्येत्केन कं जिघ्रेत्केन कमभिवदेत् केन कं शृणुयात्तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स नेति नेत्यात्माऽगृह्यो नहि

गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो नहि सज्यतेऽसितोन व्यथते न रिष्यतिविज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरेखल्वमृतत्वमितिहोक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य पञ्चमं
मैत्रेयी ब्राह्मणम् ॥ ५ ॥

---

एतावदेव खल्वमृतार्थिभिर्ज्ञेयम् । कारणे कार्यवाचिशब्दउपचारात्प्रयुक्तः ॥ एवमुक्त्वा याज्ञवल्क्यो यथाभिलषितं प्रव्रज्यां कृतवानित्यर्थः ॥ १५ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकायां चतुर्थाध्याये
पञ्चमं ब्राह्मणम् ॥ ५ ॥

अथ वंशः पौतिमाष्यो गौपवनाद्गौपवनः पतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः । कौशिकात्कौशिकः कौण्डिन्यात् कौण्डिन्यः । शाण्डिल्याच्छाण्डिल्यः कौशिकाच्चगौतमाच्च गौतमः ॥ १ ॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्योगा र्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यंदिनायनः सौकरायणात् सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

घृतकौशिकाद्घृतकौशिकः पराशर्यायणात्पराशर्यायणः । पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातुकर्ण्य आसुरायणाच्च

यास्काद्यास्कऽसुरायणस्त्रैवणेस्त्रैवणिरौपचन्धनेरौपचन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भिकौण्डिन्याद्विदर्भिकौण्डिन्यो वात्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः पथःसौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आहूतेस्त्वाष्ट्रादाहूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँ सनान्मृत्युः प्राध्वँ सनः प्राध्वँ सनात् प्राध्वँ सनः । एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः । सनकात्सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ३ ॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

पूर्ववदेव वंशं ब्राह्मणम् । आचार्यवंशकीर्त्तनस्य मङ्गलत्वान्न पौनरुक्त्यं शङ्कनीयम् ॥ १ ॥ १ ॥ ३ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां चतुर्थाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायः समाप्तः ॥ ४ ॥

---

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म खं पुराणं वायुरं खमितिहस्माऽऽह कौरव्यायणीपुत्रः वेदो यं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ १ ॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

---

अदः परोक्षलोकः पररूपः। इदमयञ्च लोकः पूर्णं वेदं पूर्णमित्यर्थः। शब्दप्रभवत्वात्सर्वस्य लोकस्य सभूरिति व्याहरत् सभूमिमसृजतेति लोकानां व्याहृतिप्रभवत्वाम्नानात् कारणेन कार्यस्य व्याप्तत्वात् पूर्णात्पूर्णमुदच्यते पूर्णात्पूर्यमाणाल्लोकात्पूर्णं पूरणकर्तृ उदच्यत उद्गतं भवति श्रेष्ठं भवतीत्यर्थः अञ्चुगतिपूजनयोरितिधातुः । तत्पूर्यमाणलोकापेक्षया पूरणकर्तृव्याहृतिरूपशब्द उत्कृष्ट इत्यर्थः पूर्णस्य लोकस्य पूर्णमादाय पूरणकर्तृव्याहृतिरूपं वस्त्वादायोपसंहृत्य तस्यापि यत्पूर्णं पूरयितृ ओङ्कारात्मकं वस्तु परिशिष्यते ओङ्कारेण सर्वा वाक् संतृण्णा छा० २।२३।३ इतिश्रुतेः । ओङ्कारस्य सर्वव्यापकत्वेन पूर्णत्वात्तदेव कारणं व्याहृत्यादिशब्देषु निर्दिष्टेषु परिशिष्यत इत्यर्थः। ओङ्काराद्व्याहृतिर्भवति व्याहृत्या गायत्री भवतीति सर्वशब्दनिदानत्वात्तदेव परिशिष्यत इत्यर्थः। ॐ खं ब्रह्मेति। ओङ्कार एव खमपरिच्छिन्नं ब्रह्म ततश्चोङ्कारेऽपरिच्छिन्न ब्रह्मोपासनं कार्यमित्यर्थः। खंपुराणमिति। यत्पुराणं देशकालापरिच्छिन्नं ब्रह्म तदेव खसादृश्यात् खमित्युच्यते । खमपरिच्छिन्नमित्यर्थः । कोरव्यायणीपुत्रस्तु वायुरं खं वायुमदम्बरमेव खशब्देनोच्यते । यस्मादसौ वेदितेनोङ्कारेण यद्यद्वेदितव्यं ज्ञातव्यं तत्सर्वं वेद जानाति तस्मादयमेव वेदो ब्राह्मणा मन्यन्ते ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥ १ ॥

---

त्रयाः प्राजापत्याः प्राजापतौ पितरि ब्रह्मचर्यमूषुः देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा ३ ।
इति व्यज्ञासिष्मेतिहोचुः दाम्यतेति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥

---

त्रया प्राजापत्याः प्रजापतिपुत्राः पितरि प्रजापतौ ब्रह्मचर्य्यमुषितवन्तः तेके इत्यत्राह—देवा इति। तेथोषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते तेषां देवा ऊचुः पितरं प्रजापतिं किमिति ब्रवीतु कथयतु नोऽस्मभ्यं यदनुशासनं भवानिति। तेभ्य एवमर्थिभ्योहैतदक्षरं वर्णमात्रमुवाच 'द' इति। उक्त्वा च तान् पप्रच्छ पिता किं व्यज्ञासिष्टा इति मयोपदेशार्थमभिहितस्याक्षरस्यार्थं विज्ञातवन्त आहोस्विन्नेति। देवा उर्चुर्व्यज्ञ सिष्मेति विज्ञातवन्तो वयम्। यद्येवमुच्यतां किं मयोक्तमिति। देवाऊचुर्दाम्यताऽदान्ता यूयं स्वभावतोऽतोदान्ता भवतेति नोऽस्मानात्थ कथयसि इतर आहोमिति सम्यग्व्यासिष्टेति ॥ १ ॥

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भगवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्याज्ञासिष्टेति ॥ २ ॥

दत्तेति न आत्थेति दत्तदानं कुरुतेयर्थः। शिष्टं पूर्ववत् ॥ २ ॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भगवानिति तेभ्योहैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ॥ ३ ॥

इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ ४ ॥

दयध्वमिति न आत्थेति दयध्वं प्राणिषु दयां कुरुतेत्यर्थः ॥ ४ ॥

तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति ॥३॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वितयं ब्राह्मणम् ॥ २ ॥

---

तदेतत् प्रजापतेरनुशासनमद्याप्यनुवर्त्तत एव । यःपूर्वं प्रजापतिर्देवादीननुशशास सोऽद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणावाचा । कथमेषाश्रूयते दैवी वाक्कासौ स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमित्येष वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्य्यते किं तत् त्रयमित्युच्यते दमं दानं दयामिति शिक्षेदुपादद्यात् प्रजापतेरनुशासनमस्माभिः कर्त्तव्य मित्येव मतिं कुर्यात् तथाच स्मृतिः। त्रिविधं नरकस्येदं द्वारं नाशन मात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत्। इति ॥ ३ ॥

इतिबृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥ २ ॥

---

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत् त्र्यक्षरं हृदयमिति हृइत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद दइत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥ १ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

---

दमादिसाधनत्रयं सर्वोपासनाशेषभूतमुपदिश्य ब्रह्मोपासनाङ्गभूतं हृदयोपासनमुपदिशति । एष इति । पूर्वदमाद्यनुशासितृत्वेन प्रस्तुतो योऽयं योऽपि प्रजापतिः । सोऽपि हृदयमेव तदेतद्ब्रह्म बृहत्सर्वं पञ्चमाध्यायोक्तरीत्या हृदयस्य सर्वत्वं द्रष्टव्यम्। एवं हृदयस्य प्रजापतित्वबृहत्वभ्य रूपाभ्यामुपासनं विधायोपास्यं हृदयशब्दनिर्वचनेन स्तौति । तदेत ।

यस्माद्धृदयाय स्वाश्चेन्द्रियाणि चान्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति स्वंकार्यं सर्वं तदधीनं कुर्वन्ति तत्तज्ज्ञानस्य सर्वस्याप्यन्तःकरणाधीनत्वादिति भावः । अतो हृदयनाम्नो हृ इत्येतदक्षरं यो वेदास्मै विदुषे स्वाश्चज्ञातयोऽन्ये च सम्बन्धिनो वलिमुपहरन्ति तत्क्रतुन्यायादितिभावः । यस्माद्हृदयात स्वा इन्द्रियाणि अन्ये च विषयाः स्वं स्वं वीर्यं ददाति अतो दकारोऽस्मिन्नाम्नि निवद्ध इति यो वेद तस्यापि स्वकीया अन्ये च स्वं स्वं वीर्यं प्रयच्छन्तीत्यर्थः । यमित्येकमक्षरमिति । इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्नाम्नि निवद्धमिति यो वेद स स्वर्गलोकमेति ॥ १ ॥

इति वृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य
तृतीयं ब्राह्मणम् ॥ ३ ॥

———

हृदयस्य प्रजापतित्वेन रूपेणोपासनमभिधाय सत्यत्वेन तस्योपासनमाह ।

**तद्वैतदेतदेव तदा स सत्यमेव स योहैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्न्वसावसत् । य एव मेतन् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव-सत्यं ह्येवब्रह्म ॥ १ ॥**

इति वृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

————

वैशब्दाऽवधारणे तद्व तदेव तत्तादृशं हृदय मेतदेव तदा स । एतद्वक्ष्यमाणं तदा सेत्यर्थःकि तदा सेत्यत्राह । सत्यमेवेति सच्चत्यच्च मूर्तामूर्तञ्च सत्यमव्याकृतं पञ्चभूतात्मकं भवतीत्यर्थः। एतदुपासकस्य फलं निर्दिशति । स य इति । यः ' कश्चदेतद्धृदयं महदतएव यक्षं पूज्यं प्रथमजं प्रथमजातं सर्वस्मात्कार्यजातात् प्रथमजं सत्यमव्याकृतपञ्चभूतात्मकं बृहदिति यः कश्चिदेतद्ददयं वद स इमाँल्लोकाञ्जयति । जितो वशीकृत

इन्तुइत्थमसौ शत्रुर्यथा ब्रह्मणा जितोऽसद्भवेदित्यर्थः । तस्यैतत्फलमिति पुनर्निगमयति । य एवमिति । 'य एवं महद्यक्षं प्रथमजमुपास्ते तच्छत्रावसत्त्वं युक्तमेव । यतोऽयं सत्योपासकोऽतस्तदुपासकस्य सत्त्वं तद्विरोधिनश्चासत्त्वं युक्तमेवेति भावः ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

आप एवेदमग्र आसुस्ताआपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिं प्रजापतिर्वादेंस्ते देवाः सत्यमेवोपासते तदेतत् त्र्यक्षरं सत्यमिति स इत्येकमक्षरं तीत्येमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैवं विद्वांसमनृतं हिनस्ति ॥१॥

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह । महद्यक्षं प्रथमजमित्युक्तं तत्कथं प्रथमजत्वमित्यत आह । आपएवेदमिति इदं व्याकृतं जगदग्रेऽण्डसृष्टेः प्रागाप एवासुः अव्याकृतपञ्चभूतात्मना वर्त्तते । ता आपः पञ्चीकृतपञ्चभूतात्मकं कार्यमसृजन्त । तच्च सत्यं ब्रह्म चतुर्मुखमसृजत । प्रजापतिं दक्षादिप्रजापतिमसृजत । प्रजापतिर्देवानसृजतेति शेषः ब्रह्मणो नाम सत्यमिति तदेतत् त्र्यक्षरम् । कानि तान्यक्षराणीत्याह । स इत्येकमक्षरं तीतीकारानुबन्धो निर्देशार्थः यमित्येकमक्षरम् । तत्र तेषां प्रथमोत्तमे अक्षरे सकारयकारौ सत्यम् । मृत्युरूपाभावात् । मध्यतो मध्येऽनृतं हि मृत्युः मृत्स्वनृतयोस्तकारसामान्यात् । तदेतदनृतं तकाराक्षरं मृत्युरूपमुभयतः सत्येन सकारतकारलक्षणेन परिगृहीतं व्याप्तमन्तर्भावितम् । सत्यबाहुल्यमेव भवति । एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्य किञ्चित्करत्वञ्च योविद्वांस्तमेनं विद्वांसमनृतं प्रमादोत्थं कदाचिदपि न हिनस्ति ॥ १ ॥

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेता वन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् सयदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्याप्यन्ति ॥ २ ॥**

सत्यस्य परब्रह्मणः स्थानविशेषे उपासनां दर्शयति तद्यदिति तत् प्रसिद्धं यत्सत्यं तदसौ असौ कः एतस्मिन् परिदृश्यमाने मण्डले य एष पुरुषो वर्त्तते स आदित्यः योऽयं दक्षिणेऽक्षन्नक्षणि पुरुषो वर्त्तते स चेति योजना। अधिदैवतमध्यात्मञ्चावस्थितौ । आदित्यचाक्षुषपुरुषौ परस्परोपकारकौ भवतः रश्मिद्वाराऽऽदित्यपुरुषश्चाक्षुषस्य पुरुषस्योपकारकः । आदित्यरश्मिसम्बन्धाभावे चाक्षुषस्य पुरुषस्य परमात्मनः स्वकार्यासमर्थत्वात् । चाक्षुषश्च पुरुषः प्राणद्वाराऽऽदित्य पुरुषस्योपकारकः । प्राणनाभाभाव आदित्यपुरुषस्य प्रकाशकत्वाभावात्। एवं विद्वानुत्क्रान्तिवेलायां द्वारभूतमादित्यमण्डलं द्रष्टुं शक्नोति न सूर्यरश्मयश्चक्षुषःप्रतिघाताय भवन्ति । चक्षुरादित्यमण्डलस्थयोः परस्परोपकार्योपकारकभावज्ञानवैभवादिति भावः ॥२॥

**य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति वाहू द्वौ वाहू द्वे एते अक्षरे स्वरितिप्रतिष्ठाद्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति-पाप्मानं जहाति च य एवं वेद ॥ ३ ॥**

आदित्यमण्डले वर्त्तमानस्य सत्यपुरुषस्य भूरितिव्याहृतिः शिर इत्यर्थः तच्छिरस्कत्वेन ध्यानं कर्तव्यमिति भावः । प्राथम्यात् तत्र सामान्यं स्वयमेवाह श्रुतिः । एकमेकसङ्ख्यायुक्तम् । शिरस्तथैतदक्षरमेकं भूरिति भुव इति बाहू द्वित्वसामान्यात् द्वौ बाहौ बाहू द्वे एते अक्षरे तथा स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे। तस्यादित्यमण्डलान्तर्वर्त्तिनोऽहरित्युपनिषद्रहस्यनामेत्यर्थः । उक्तं च श्रीवादरायणाचार्यैः

सम्बन्धादेवमन्यत्राऽपि ब्र० सू० ३।३।२० इत्यत्रोपनिषदादौ रहस्यनामनी इत्यर्थः। अहरिति हन्तेर्जहातेश्च रूपसम्भवमभिप्रेत्य तदनुसारेण फलं दर्शयति हन्तीति योऽयं दक्षिण इतिपूर्ववद्व्याख्येयम् । इदं चिन्तितं गुणोपसंहारपादे सत्यं ब्रह्मेत्युपक्रम्य तद्यत्सत्यमसौ स आदित्यः य एष एतस्मिन्मण्डल इति व्याहृतिशरीरत्वेनादित्यमण्डलेऽक्षिणि चोपास्य-त्वमुक्त्वा द्वे उपनिषदौ रहस्यनामनी उपासनाशेषतया श्रूयेते तत्र तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्याध्यात्ममिति क्रमेणादि-त्याधारस्याद्याधारस्य च सत्यब्रह्मणोऽहर्नामत्वमहंनामत्वञ्चोक्तं तत्र संशयः किमुक्तनाम्नोर्यथा स्थानं ध्यानं कर्त्तव्यमुतोपसंहारपूर्वकमुभय त्रेति यथा शाण्डिल्यविद्यायां विद्यैक्यसम्बन्धाद्गुणोपसंहार एवमन्य-त्रापि आदित्यमण्डलेऽक्षिणि च विद्यैवचसम्बन्धात् उभे नामनी उभयत्रो-पसंह्रियेते। सम्बन्धादेवमन्यत्रापि । ब्र० सू० ३।३।२० इतिपूर्वपक्षं कृत्वा उच्यते 'नवा विशेषात् ब्र० सू० ३।३।२१ य एतस्मिन्मण्डले पुरुषः याश्चायं दक्षिणेऽक्षिन् पुरुषः तावेतावन्योन्यस्मिन् प्रतिष्ठिताविति द्वित्वसङ्ख्यया प्रधानोपास्यभेदप्रतीतेरादित्याक्षिस्थानभेदेन रूपभेदाच्च विद्याभेदान्न नाम्नोरव्यवस्था दर्शयति च ब्र० सू० ३।३।२२। दर्शयति चाक्ष्यादित्याधारयोर्गुणानुपसंहारम् । तस्य तदेव रूपं यदमुष्यरूपम् ।छा० १।७।५ इत्यादिना रूपाद्यतिदेशेन यदि स्थानभेदेऽपि परस्पररूपप्राप्तिस्तर्ह्य तिदेशानर्थक्यमेव स्यात् अतआदित्यस्थानविशिष्टस्यैवाहरितिनामाक्षि-स्थानस्यैवाहं नामेति स्थितम् ॥३।४॥

इतिबृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

मनोमयो विशुद्धमनोग्राह्यः । भाः भारूपः । समानप्रकरणे छान्दोग्ये मनोमयः 'प्राणशरीरो भारूप' इति श्रवणात् । सत्यं नर्विकारं देहादिध्वंसेऽपि निर्विकार इति यावत् । तस्मिन्निति हृद-यान्तर्गतस्तदवच्छेदनिवन्धनस्वल्पपरिमाण इत्यर्थः सर्वस्येशानः नियन्ता । सर्वस्याधिपतिः पालयिता सर्वमिदं प्रशास्ति । प्रशा-सनेन धारक इत्यर्थः ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥ ६ ॥

---

**विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युविद्यत्येनं पाप्मानो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

---

विद्युति ब्रह्मदृष्टिःकर्त्तव्येति केचिदाहुः । विद्युति ब्रह्मध्यानहेतु-भूतं साम्यमाह । विदानादिति । विदानान्मेघान्तःस्थितान्धकार-खण्डनाद्विद्युत । ब्रह्म चाज्ञानलक्षणतमः खण्डनमिति विद्युत्त्वामस्तीति भावः ॥ एतद्वेत्तुः फलमाह । विद्यत्येनमिति योविद्युद्ब्रह्मेत्येवं वेदैनं पाप्मानो विद्यति । विशेषेण द्यति खण्डयति दोऽअवखण्डन इति धातुः तत्रोपपत्तिमाह। विद्युद्ध्येवब्रह्मेति ब्रह्मणो विद्युत्त्वात् खण्डकत्वादित्यर्थः।१

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्याये सप्तम् ब्राह्मणम् ॥ ७ ॥

---

**वाचं धेनुमुपासीत तस्याश्चत्वारस्तनाः स्वाहाकारो वषट्-कारो हन्तकारः स्वधाकारस्तस्यैद्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारञ्च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥

---

उपसनान्तरमाह । वाचमिति । त्रयीलक्षणां वाचं धेनुरित्युपासीत । यथा धेनुश्चतुर्भिः स्तनैः स्तन्यं पयः क्षरति वत्सायैवं वाग्धेनुर्वक्ष्यमाणैः स्तनैः पयइवान्नं क्षरति देवादिभ्यः । के पुनस्ते स्तनाः के वा ते येभ्यः क्षरति तस्या एतस्या वाचो धेन्वा द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीया कौ तौ। स्वाहाकारञ्च वषट्कारञ्च आभ्यां हि हविर्दीयते देवेभ्यः । हन्तकारं मनुष्याः । हन्तेति मनुष्योभ्योऽन्नं प्रयच्छन्ति । पितरः स्वधाकारेण पितृभ्यः स्वधां प्रयच्छन्ति । तस्या धेन्वा वाचः प्राणः ऋषभः । प्राणेन हि वाक् प्रस्तूयते मनोवत्सः । मनसा हि प्रस्राव्यते मनसा ह्यालोचिते विषये वाक् प्रवर्त्तते । तस्मान्मनो वत्स स्थानीयमित्यर्थः ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिका टीकायां पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥ ८ ॥

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैव घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ १ ॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

---

अयमग्निर्वैश्वानरः । कोसावग्निरित्याह । योऽन्तःपुरुषे । येनाग्निना वैश्वानराख्येनेदमन्नं पच्यते । किं तदन्नं । यदिदमद्यते भुज्यतेऽन्नं । तस्य वैश्वानराग्नेर्जाठरस्यैष घोषो भवति यं घोषमेतदिदानीं कर्णावपिधाय कर्णौ अङ्गुलिभ्यां पिधाय शृणोति। तादृशवैश्वानराग्नौ ब्रह्मदृष्टिः कर्त्तव्येत्यर्थः ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वमाक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ॥ १ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

———

उत्क्रान्तिप्रसङ्गात् ब्रह्मविदो गतिमाह । यदा वै इति । यदा वै पुरुषो विद्वानस्माल्लोकात् प्रैति शरीरं परित्यजति स तदा वायुमागच्छत्यन्तरिक्षे तिर्यग्भूतो वायुः स्तिमितोऽभेद्यस्तिष्ठति । स वायुस्तत्र स्वात्मनि तस्मै संप्राप्ताय विजिहीते । स्वात्मावयवान्वि-गमयति छिद्रीकरोत्यात्मानमित्यर्थः किं परिमाणं छिद्रमिति उच्यते । यथा रथचक्रस्य खं छिद्रं प्रसिद्धपरिमाणं तेन च्छिद्रेण स विद्वा-नूर्ध्वं माक्रमत ऊर्ध्वः सन् गच्छति आदित्यमागच्छति । आदित्यो ब्रह्मलोकं जिगिमिषो मार्गनिरोधं कृत्वा स्थितः सोऽप्येवंविद उपा-सकाय द्वारं प्रयच्छति तस्मै स तत्र विजिहीते । यथा लम्बरस्य खं वादित्रविशेषस्य च्छिद्रपरिमाणं तेन स ऊर्ध्व माक्रमते स चन्द्रमस-मागच्छति । सोऽपि तस्मै तत्र विजिहीते । यथा दुदुन्भेः खं प्रसिद्धं तेन स ऊर्ध्व माक्रमते विद्युद्वरुणेन्द्रधातृलोकमतिक्रम्य शोकशून्यं । अहिमं हिमवर्जितं शारीरदुःखवर्जितं ब्रह्मलोकं प्राप्य तस्मिन् वसति शाश्वतीर्नित्याः समाः सम्वत्सरानित्यर्थः ॥१०॥

इति बृहदारण्यकोपनिपत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥ १० ॥

———

एतद्वै परमं तपो यद्व्याधितस्तप्यते परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपोयं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद ॥ १ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥ ११ ॥

---

एतद्वै परमं तपः किन्तत् । यद्व्याधितो व्याधितो जरादिपरिगृहीतः सन् यत्तप्यते तदेतत् परमं तप इत्येवं चिन्तयेत् । दुःखसाम्यात् । तस्यैवं चिन्तयतो विदुषः कर्मक्षयहेतुस्तदेव तपो भवत्यनिन्दतोऽविषीदतः स एव च तेन विज्ञानतपसा दग्धकिल्बिषः परमं हैव लोकं जयति य एवं वेद । तथा मुमूर्षुरादावेव कल्पयति किमेतद्वै परमं तपो यं प्रेतं मां ग्रामादरण्यं हरन्ति । ऋत्विजोऽन्त्यकर्मणे तद्ग्रामादरण्यगमनसामान्यात्परमं मम तत्तपो भविष्यति ग्रामादारण्यगमनं परमं तप इति हि प्रसिद्धम् । अग्निप्रवेशसामान्याद्भविष्यत् प्रेतस्याग्नावभ्यादाने परमतपस्त्वबुद्धिं कुर्वतः परलोकप्राप्तिरित्यर्थः ॥ १ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥ ११ ॥

---

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधा भूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किंस्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माऽऽह पाणिना मा प्रातृद कस्त्वेनयोरेकधा भूयं भूत्वा परमतां गच्छतीति तस्मा-

उहैतदुवाच वीत्यन्नं वै व्यन्ने हीमानि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥ १२ ॥

केचिदन्नं ब्रह्मेत्याहुः । तन्न तथा युज्यते प्राणादृते तदन्नं पूयते पूतीभावमापद्यते तस्मान्नान्नं ब्रह्मेति केचित् प्राणो ब्रह्मेत्याहुः । तदपि न युक्तम् । अन्नाभावे प्राणस्य शोषणदर्शनात् । एते तस्मादन्नप्राणरूपे देवते एकधा भूयम् । एकधाभावं गत्वा परमतां परमत्वं गच्छतः । तद्धस्माऽऽह इति । तदेवमध्यवस्य ह स्म प्रातृदो नाम पुत्रः पितरमाह । किंस्विदेवैवं विदुषे साधु कुर्यामन्नं प्राणा एकभूतौ ब्रह्मेतिविदुषे मह्यं किंवा साधु कर्म कुर्यां किंवाऽसाधु कर्म कुर्याम् । कृतकृत्यस्य मे साध्वसाधुकर्मभ्यां किं भविष्यतीति भावः । अस्मा इति । स्वात्मानमेव निर्दिशति । देहादिविवेकज्ञापनाय । तमेवं वादिनं पुत्रं हस्तेन निवारयन् हे प्रातृद मैवं वोचः । कस्त्वेनयोरन्नप्राणयोरेकधा भूयं भूत्वा परमतां गच्छति न कश्चिदपि विद्वाननेन दर्शनेन परमतां गच्छति । तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसाविति । यद्येवं ब्रवीतु भगवान् कथं परमतां गच्छतीति । तस्माउहैतदुवाच एतद्वक्ष्यमाणम् । किंतत् वीति । किं तद्वीति । उच्यते । अन्नं वै वी अन्ने हि यस्मादिमानि सर्वाणि भूतानि विष्टान्याश्रितान्यतोऽन्नं वीत्युच्यते । किंच रमिति रमिति चोक्तवान् पिता । किंपुनस्तद्रम् । प्राणो वै रम् । कुत इत्याह । प्राणे हीति यस्मादिमानि भूतानि प्राणे रमन्तेऽतः प्राण एव रमित्यर्थः । विरमितिगुणविशिष्टान्नप्राणोपासनस्य फलमाह । सर्वाणीति स्पष्टोऽर्थः ॥१॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥ १२ ॥

प्राणस्यैव ऋग्यजुः सामत्वेनोपासनमाह। उक्थमिति।

**उक्थं प्राणो वा उक्थं प्राणोहीदं सर्वमुत्थापयति उद्धास्मादुक्थविद्वीरस्तिष्ठति । उक्स्थस्य सायुज्यं सलोकतां जयति य एवं वेद ॥ १ ॥**

प्राणो वा उक्थं। प्राणश्च प्रधानइन्द्रियाणामुक्थञ्च शस्त्राणामतस्तदुपासीत । कथं प्राण उक्थमित्याह । प्राणो हि यस्मादिदं सर्वमुत्थापयति उत्थापनादुक्थं प्राणः नह्यप्राणः कश्चिदुत्तिष्ठति। तदुपासनफलमाह । उद्धास्मादिति । अस्मादेवंविद उक्थ प्राणविद्वीरः पुत्र उत्तिष्ठति । एवं दृष्टं फलमुक्त्वाऽदृष्टं फलमाह। उक्थस्येति। उक्तप्राणेन सायुज्यं सलोकतां प्राप्नोतीति भावः ॥ १ ॥

**यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यं स लोकतां जयति य एवं वेद ॥ २ ॥**

यजुरिति चोपासीत प्राणम्। प्राणो वै यजुः कथं यजुः प्राणः प्राणे हि यस्मात्सर्वाणि भूतानि युज्यन्ते नह्यसति प्राणे केन चित् कस्यचिद्योगसामर्थ्यम्। अतो युनक्तीति प्राणो यजुः । एवं विदः फलमाह। युज्यन्त इति युज्यन्ते संनह्यन्ते उद्युञ्जते। शिष्टं स्पष्टम् ॥२॥

**साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यं सलोकतां जयति य एवं वेद ॥ ३ ॥**

सम्यञ्चि सङ्गतानि भवन्ति श्रैष्ठ्याय सम्यञ्चि कल्प्यन्ते नः श्रेष्ठो भवत्विविति प्राणविदः श्रैष्ठ्यानि सङ्गतानि भवन्ति कल्पन्ते शिष्टं स्पष्टम् ॥ ३ ॥

**क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं**

प्राणः क्षणितोः प्रक्षत्रमत्र माप्नोति क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वद ॥ ४ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्याये त्रयोदशं ब्राह्मणम् ॥१३॥

---

क्षत्रमिति प्राणमुपासीत । तत्रोपपत्तिः । प्राणो वै क्षत्रमिति । तत्र विविदमानं प्रत्याह । प्राणो ह वै क्षत्रमिति । प्राणस्य क्षत्रत्वप्रसिद्धेरितिभावः । तदुपपादयति । त्रायते हैनं प्राणः क्षणितो क्षणुहिंसायां । हिंसातस्त्रायते प्राण इत्यर्थः । शस्त्रादिहिंसायामपि प्राणसद्भावे पुनर्मांसेन पूर्णं भवतीत्यर्थः विद्यायाः फलमाह । क्षत्रमत्र प्राप्नोति । न त्रायतेऽन्येन केन चिदितित्रत्रं प्राणस्तमत्रं क्षत्रत्वगुणविशिष्टं प्राप्नोतीत्यर्थः । क्षत्रस्य सायुज्यं सलोकतां गच्छति क्षत्रप्राणस्य सायुज्यसालोक्ये गच्छतीत्यर्थः ॥४॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥ १३ ॥

---

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं हवा एकं गायत्र्यै पदमेतदुहैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

मनोहृदयाद्यनेकविशिष्टस्योपासनमभिधाय गायत्र्युपाधिविशिष्टस्योपासनामाह । भूमिरिति । अत्र दियोरिति यकारेण सहाष्टत्वं द्रष्टव्यम् । गायत्र्या एकं पादमष्टाक्षरम् । एकैकशः पादोऽष्टाक्षर इत्यर्थः । एतदुहैवास्या इति । एतल्लोकत्रयात्मकमस्या गायत्र्या एतत्पदमेकं पदमित्यर्थः लोकत्रयेण गायत्र्येकपदत्वज्ञानस्य फलमाह । सयावदेष्विति । एवमेतत्पदं यो वेद स त्रिषु लोकेषु यावज्जेतव्यं तावज्जयतीत्यर्थः ! एवमुत्तरत्रापि ॥ १ ॥

ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदुहैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥

तथर्चो यजूंषि सामानीति त्रयी विद्यानामक्षराण्येतान्यष्टावेव तथैवाष्टाक्षरं ह वा एकं गायत्र्यै पदं द्वितीयमेतदुहैवास्या एतदृग्यजुः सामलक्षणमष्टाक्षरत्वसाम्यादेव । स यावतीयं त्रयीविद्या त्रय्या विद्यया यावत्फलजातमाप्यते तावद्‌ध जयति योऽस्या एतद्‌गायत्र्यास्त्रैविद्यलक्षणं पदं वेद ॥ २ ॥

प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदुहैवास्या एतत्सयावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्य एतदेव तुरीयं दर्शतं पदं परोरजाय एष तपति यद्वै चतर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येषपरो रजा इति सर्वमुह्येवेष रज उपर्युपरितपत्येवं हैव श्रिया यशसा तपति योऽस्याएतदेव पदं वेद ॥ ३ ॥

अत्र वियान इति यकारेण सहाष्टाक्षरत्वं द्रष्टव्यम् । प्राणिजातं सर्वं जयति । अथास्या इति । अस्या गायत्र्या एतदेव तुरीयं पदम् अत्र तुरीयदर्शतशब्दौ स्वयमेव व्याचष्टे यद्वै चतुर्थमिति । एष मण्डलान्तर्गतपुरुषो दृश्यत इव हि भासतेऽतो दर्शतं पदमित्यर्थः । परो रजा इत्येतद्‌व्याचष्टे । परोरजा इति । सर्वं रजः सर्वमपि राजसं लोकमुपरितपति । अत्यन्तमूर्ध्वं स्थित्वा तपतीत्यर्थः स श्रिया यशसा च दीप्यत इत्यर्थः ॥ ३ ॥

सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परो रजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यम् । तस्माद्यदिदानीं द्वौविवदमानावेयाताम् । अहमद-

**र्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वैतत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोजीय इत्येवमुहैषागाय त्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यदगयांस्तत्रे तस्माद्गायत्रीनाम सयामेवामूं सावित्रीमन्वाहैषैव सासयस्माअन्वाह तस्य प्राणां स्त्रायते ॥४॥**

तथा प्राणोऽपानो व्यान एतान्यपि प्राणाद्यभिधानाक्षराण्यष्टौ तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं सैषा त्रिपदोक्ता गायत्रो तुरीये दर्शिते पदे परो रजसि मण्डलपुरुषे प्रतिष्ठिता तद्वै तुरीयं पदं सत्ये प्रतिष्ठितम्। किं पुनः तत् सत्यमित्यत आह चक्षुरिति। चक्षुर्वै सत्यं तत्रोपपत्तिमाह। तस्मादिति। इदानीमेव द्वौ विवदमानौ विरुद्धं वदमानावेयातामागच्छेयातामहमदर्शं दृष्टवानस्मीत्यन्य आहाहमश्रौषं त्वया दृष्टं न तथा तद्वस्त्विति तयोर्य एवं ब्रूयादहमद्राक्षमिति तस्मै एव श्रद्दध्याम न पुनर्यो ब्रूयादहमश्रौषमिति श्रोतुश्श्रवणं मृषा सम्भवति नतु चक्षुषा मृषा दर्शनम्। तत्प्राणे प्रतिष्ठितं तत्सत्यं प्राणे प्रतिष्ठितमित्यर्थः। यस्माद्बलं सत्ये प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोजीय ओजीय ओजस्तरमित्यर्थः। लोकेऽपि यस्मिन् हि यदाश्रितं भवति तस्मादाश्रितादाश्रयस्य वलवत्तरत्वं प्रसिद्धं नहि दुर्बलं बलवतः कचिदाश्रयभूतं दृष्टम्। एवमुक्तन्यायेन एषागायत्र्याध्यात्मं प्रतिष्ठिता अध्यात्मे प्राणे गायत्री प्रतिष्ठिता। गायत्रीनिर्वचनमाह सा हैषेति। साहैषा गयांस्तत्रे त्रातवती पालयतिस्मेति यावत् त्रेङ्पालने तस्माल्लिटिरूपम्। गयशब्दं व्याचष्टे। प्राणा वै गया इति। प्राणा वागादयो वै गयाः। तत्तान् प्राणान् स्तत्रे सैषागायत्री तत् तत्र यद्यस्माद्गयां स्तत्रे तस्माद्गायत्रो नामगायत्राणाद्गायत्रीति प्रथिता। स आचार्य उपनीय माणवकमष्टवर्षं यामेवामूं गायत्रीं सावित्रीं सावित्रिदेवताकामन्वाह

पच्छोऽर्धर्चशः समस्तां च । एषैव सा साक्षाज्जगतः प्राणो जगत आत्मा माणवकाय समर्पितेह इदानीं व्याख्याता नान्या स आचार्यो यस्मै माणवकायान्वाहानुवक्ति तस्य माणवकस्य गयान्प्राणां स्त्रायते नरकादिपातनात ॥ ४ ॥

**तां हैतामेके सावित्रीमनुष्टभमन्वाहुर्वागनुष्टवेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्री मनुब्रूयाद्यदिह वा अप्येवं विद्वह्विव प्रतिगृह्णाति नहैवतद्गायत्र्या एकश्चन पदं प्रति ॥ ५ ॥**

तामेतां सावित्रीं हैके शाखिनोऽनुष्टभमनुष्टुप्छन्दस्कामन्वाहुरुपनीताय तत्र हेतुः । वागनुष्टुवेतद्वाचमनुब्रूम इति । सावित्र्यनुवचने प्रवर्त्तमानाः प्रवर्त्तन्ते वाक्चानुष्टुप्छन्दःप्रधानेति । अनुष्टुप् च्छन्दसैव सावित्र्युपदेष्टव्या । अतस्तुरीयेणाष्टाक्षरेण पादेन युक्ता सावित्र्युपदेष्टव्या । अतश्च द्वित्रिंशदक्षरतयानुष्टप्छन्दस्का सावित्र्युपपद्यते । तद्दूषयति । न तथेति । गायत्रीमष्टाक्षरैस्त्रिभिः पादैर्युक्तां गायत्रीछन्दस्कामेव सावित्री मनुब्रूयादित्यर्थः । यदि हवा अप्येवमिति । एवं जानन् देहयात्रायै बहुप्रतिग्रहं करोति तत्प्रतिग्रहजातं गायत्र्या एकैकपदस्य न पर्याप्तं तेन न स्पर्धते । एवं पादविदः प्रतिग्रहे दोषाः शमं यान्तीत्यर्थः ॥५॥

**स इमांस्त्रिलोकान् पूर्णान् प्रतिगृह्णीयात्सोऽस्याएतत्प्रथमजं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पादमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजसा य एष तपति नैव केनचनाऽऽप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ६ ॥**

स यो गायत्री विदिमान् भूरादींस्त्रीन् गोऽश्वादिधनपूर्णां-ल्लोकान् प्रतिगृह्णीयात् स प्रतिग्रहोऽस्या गायत्र्या एतत्प्रथमं पदं यद्व्याख्यातमाप्नुयात् प्रथमविज्ञानफलं तेन भुक्तं स्यान्नत्वधिकदोषोत्पादकः स प्रतिग्रहः । अथ पुनर्यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात् सोऽस्याएतद्द्वितीयंपदमाप्नुयात् । द्वितीयपदविज्ञानफलं-तेन भुक्तं स्यात् । तथा यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात्सो-ऽस्या एतत्तृतीयं पदमाप्नुयात् तेन तृतीयपदविज्ञानफलं भुक्तं स्यात्। अथास्या गायत्र्या स्तुरीयस्य पादस्य यत्फलं तत्केनापि नाप्यं न प्राप्तुं योग्यम् । कुत इत्यत्राह । कुत उ एतावत्प्रतिगृह्णीयात् । एतदनुरूपं कुतः स्यादित्यर्थः तस्मात्तस्यानन्त्यमेव फलं नान्यत ॥ ६ ॥

**तस्या उपस्थानं गायत्र्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे। नमस्तेतुरीयायदर्शताय पदायपरोरज-सेऽसावदोमाप्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वान हैवास्मै सकामसमृद्ध्यते यस्मा एव मुपतिष्ठते-ऽहमदः प्रापमिति वा ॥ ७ ॥**

तस्या गायत्र्याउपस्थानमुच्यते । हे गायत्रि त्रैलोक्यपादेनैकपदी भवसि । त्रयीविद्यारूपेण द्वितीयेन पादेन द्विपदी । प्राणादिना तृतीयेन त्रिपद्यसि चतुर्थेन पादेन परोरजसा चतुष्पद्यसि अपदसि। तदुपपादयति । न हि पद्यस इति पद्यसे ज्ञायस इत्यर्थः। अपरिच्छिन्नमहिमत्वात् परिच्छिन्नतया ज्ञातुं न शक्यस इत्यर्थः । तुरीयं पादं नमस्यति। नमस्त इति। यः द्विष्पादसौ शत्रुरदोऽस्मै-शत्रवे यं शत्रुमुदिश्य गायत्री मुपतिष्ठते तस्मै तस्य कामो न समृद्धि माप्नोति । इदं वांच्छितं मा प्रापन् मैव प्राप्नोति । असौ कामोऽस्मै शत्रवे मा समृद्धीमाभूत् । अहमदः श्रेयं प्रापं प्राप्तवानस्मीति य उपतिष्ठते तस्य तत्प्राप्नोति। एवञ्चैषां त्रयाणां मन्त्राणां विकल्पेन प्रयोग इति द्रष्टव्यम् ॥ ७॥

एतद्ध वै जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु-होतद्गायत्रीविद् ब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदांचकारेति होवाच तस्या अग्निरेवमुखं यदि हवा अपि बह्विवाग्नावभ्यादधाति सर्वमेवैतत्संदहत्येवं हैवैवं विद्यद्यपि बह्विव पापं कुरुते सर्वमेवतत्संसाय शुद्धः पूतोऽजरोमृतः सम्भवति ॥ ८ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥

---

एतद्गायत्रीविज्ञानं प्रस्तुत्य वैदेहो जनको नाम्ना बुडिलमश्व-तरस्यापत्यश्विमाश्वतराश्विमुवाच । यद्गायत्रो विदस्मीत्यत्र ब्रूथास्तस्य-वचसोऽनुरूपमिदम् कुत इत्यत्राह । अथेति । हस्तीव प्रतिग्रहादिजन्यं-पापं वहसि अथाप्यहं गायत्रीविदिति ब्रूषे वै नै तदनुरूपमित्यर्थः स आह । मुखमिति । हे सम्राड् गायत्रीं जानेऽपि तु तस्या मुखं न ज्ञातवानस्मि । अतः पापं वहामीत्युक्तवान् । इतर आह । तस्या इति । गायत्र्या अग्निर्मुखं यदि बह्वपीन्धनमग्नौ प्रतिक्षिपति तत्सर्वं दहति । एवमेवं विद्वह्वपि कृतं पापं संसाय पोन्तकर्मणि दग्ध्वेत्यर्थः । पूतो ब्रह्मविद्याप्रतिबन्धकपापरहितः सम्पन्नब्रह्मविद्योजरा-मरणशून्यो भवतीत्यर्थः ॥ ८ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य
चतुर्दशं ब्राह्मणम् ॥ १४ ॥

---

हिरण्मयेनपात्रेण सत्यस्यापिहितं मुखम् । तत्वं पूषन्न-पावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यमसूर्य प्राजापत्य व्यूहरश्मीन् । समूहतेजोयत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिल-

ममृतमथेदं भस्मान्तं शरीरम् । ओं ऋतोस्मर कृतं-स्मर ऋतोस्मर कृतं स्मर अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ १ ॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
पञ्चदशं ब्राह्मणम् ॥ १५ ॥

---

इति बृहदारण्यकोपनिषदि पञ्चमोऽध्यायः ॥ ५ ॥

---

अर्चिराद्यातिवाहिकानुप्रविष्टादित्यप्रार्थनामन्त्रः। हिरण्मयेनेति। सत्यस्य ब्रह्मणो मुखं द्वारं ब्रह्मगमनमार्गमिति यावत् । हिरण्मयेन पात्रेण तेजिष्ठेन तेजोमण्डलेन पिहितमावृतम्। तत्त्वमिति । तद्द्वारं हे पूषन्निरावृतं कुरु किमर्थमित्यत्राह सत्यधर्मायेति सत्यं ब्रह्म धर्म आश्रयः साधनं यस्य तस्मै ब्रह्मैकनिष्ठाय ब्रह्मदर्शिनार्थिने मह्यं दृष्टये ब्रह्मदर्शनायेत्यर्थः। हेपूषन् एकश्चासावृषिश्चैकर्षिः ऋषिर्द्रष्टा सवितुर्जगदेकचक्षुष्ट्वादिति भावः । यमयित सूर्यसुष्ट्रवीरयति रश्मीनीतिसूर्यः प्राजापत्यः प्रजापतेः पुत्र। तावकान् रश्मीन् व्यूहापगमय तेजः समूहसंक्षिपकिमर्थ मित्यत्राह। यत्ते रूपमिति तेजसां संक्षेपाभावे तव रूपं दुर्दशमिति भावः। आत्मा यादृग् रूपस्तादृग्रूपोऽहमस्मि तादृगरूपतया वेद्मि आत्मतत्वविदस्मीत्यर्थः। वायुरनिलमिति। अर्चिरादिना गतस्य मे प्राणवायुर्वायौ लीयतां मृतं च शरीरं भस्मान्तञ्च भवतु। ततश्च देहेन्द्रियादिश्चात्माभिमानी नाहमस्मि तद्विलक्षणात्मज्ञानवानित्यर्थः। ओमिति प्रणवप्रतिपाद्यत्वादादित्यस्य सम्बोधनम्। अधीगर्धदयेशां कर्मणीति कर्मणि षष्ठी ऋतूपासनं मदनुष्ठितं स्मरतदङ्गतया कृतमपि कर्मस्मर। देहात्मविलक्षणज्ञानी कर्माङ्गकब्रह्मविद्यानिष्ठश्चातस्त्वतत्स्वरूपं प्रदर्शय मुक्तिमार्गञ्च प्रयच्छ अर्चिरादिप्रथमपर्वाग्निप्रार्थनामन्त्रः । अग्ने नय

इति । हेऽग्ने सुपथा शोभनेनार्चिरादिमार्गेण राय ऐश्वर्याय स्वाराज्याय मोक्षायेतियावत् अस्मान्नय प्रापय हेदेव द्योतमान विश्वानि वयुनानि ज्ञानानि विद्वान् भवसि अतो मदीयमध्यात्मज्ञानं त्वं जानासीत्यर्थः । युयोधि अपनय अस्मदस्मत्तः जुहुराणं कुटिलम् हुर्छाकौटिल्यइत्यस्मात्कानचि रूपम् एनः पापम् भूयिष्ठां भूयसीं नम उक्तिं करवामेत्यर्थः ।

इतिबृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम् ॥ १५ ॥

---

इति बृहदारण्यकोपनिषदि पञ्चमोऽध्यायः ॥ ५ ॥

---

**ओम् ३ यो ह वैज्येष्ठश्च श्रेष्ठश्च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वैज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां वुभूषति य एवं वेद ॥ १ ॥**

प्राणज्ञानमवश्यं सम्पादनीयमितिभावेन तज्ज्ञानिनः फलमाह यो ह वेति । योऽधिकारी अखिलमिन्द्रियाणां मध्ये प्राणस्य ज्येष्ठं श्रेष्ठञ्च वेद स इहैव स्वानां मध्ये ज्येष्ठश्च श्रेष्ठश्च भवति ज्येष्ठः श्रेष्ठश्च क इत्यत आह प्राण इति । ज्येष्ठश्च वक्ष्यमाणरीत्यैव द्रष्टव्यम् प्राणव्यापारप्रवृत्त्यनन्तरभावित्वादिन्द्रियप्रवृत्तेरिति भावः य एवं प्राणं वेद सस्वानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति इतरेषां येषां श्रेष्ठो भवितुमिच्छति तेषामपि ज्येष्ठः श्रेष्ठश्च भवतीत्यर्थः ॥ १ ॥

**यो ह वै विसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपिच येषां बुभूषति य एवं वेद ॥ २ ॥**

योहि वसिष्ठाम् अतिशयेन वसुमत्त्वं वेद स इहैव स्वकीयानां वसिष्ठो भवति का वसिष्ठेत्यत आह वाग्वा इति वाग्मिन एव हि वसुमत्ता भवति । अतो वाचो वसिष्ठत्वम् ॥ २ ॥

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति स मे प्रतिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥**

प्रतितिष्ठत्यनयेति प्रतिष्ठा तां प्रतिष्ठां गुणवतीं वेद तस्यै तत्फलं प्रतितिष्ठति समे देशे काले च तथा दुर्गे विषये च दुर्गमने देशे दुर्भिक्षादौ वा काले विषये का सा प्रतिष्ठा इत्यत आह चक्षुर्वै तिष्ठति कथं चक्षुषः प्रतिष्ठात्वमित्याह चक्षुषा हि समे दुर्गे च दृष्ट्वा प्रतितिष्ठति समविषमदेशप्रदर्शनद्वारा पुरुषप्रतिष्ठाहेतुत्वं चक्षुष इति भावः ॥ ३ ॥

**यो ह वै सम्पदं वेद संहास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः संहास्मै पद्यते यं कामं कामयते स एवं वेद ॥ ४ ॥**

सम्पदं सम्पद्गुणयुक्तं वेद तस्यैतत्फलमस्मै विदुषे सम्पद्यते किम् यं कामं कामयते स कामः किं पुनः समपद्गुणकम् श्रोत्रं वै सम्पत् कथं पुनः श्रोत्रस्य सम्पद्गुणत्वमिति उच्यते श्रोत्रे सति हि यस्मात्सर्वे वेदा अभिसम्पन्नाः श्रोत्रेन्द्रियवतोऽध्येयत्वात् वेदविहितकर्मायत्ताश्च कामास्तस्माच्छ्रोत्रं सम्पत् अतो विज्ञानानुरूपं फलम् संहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

**यो ह वा आयतनं वेदाऽऽयतनं स्वानां भवत्या यतनं जनानां मनो वा आयतनमायतनं स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥**

मनो वा आयतन माश्रय इन्द्रियाणां विषयाणाञ्च मनः सङ्कल्प वशानि चेन्द्रियाणि प्रवर्त्तन्ते निवर्त्तन्ते च अतो मन आयतनमिद्रियाणाम ॥ ५ ॥

**यो हवै प्रजापतिं वेद प्रजायते ह प्रजयापशुभीरेतो वै प्रजापतिः प्रजायते ह वै प्रजया पशुभिर्य एवं वेद ॥ ६ ॥**

यो ह प्रजापतिं वेद स प्रजया पशुभिश्च प्रजायते प्रकृष्टो जायते कः प्रजापतिरित्यत आह। रेत इति रेतश्शब्देन प्रजननेन्द्रियं लक्ष्यते तेन हि पुत्रपौत्रादिमत्तया प्रकृष्टतया जायते पुरुष इत्यर्थः ॥ ६ ॥

**ते हेमे प्राणा अहं श्रेयसे विविदमाना ब्रह्म जग्मुस्तद्धोचुः कोनोर्वसिष्ठ इति तद्धोवाच यस्मिन् व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥**

प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वञ्चोक्तं तत्कुत इत्यतोमीमांसया समर्थित्वादितिभावेनाख्यायिकामाह। ते हेम इति। त इमे पूर्वोक्ताः प्राणाः। अहं श्रेयसे अहं श्रेयानित्यर्थे विवदमानाश्चतुर्मुखं प्रति जग्मुर्ह। तत्र गत्वा देवास्तं प्रत्यूचुः। किमिति। नोऽस्माकं मध्ये को वसिष्ठः श्रेष्ठ। इति एवमुक्तं तद्ब्रह्म देवान् प्रत्युवाच किमिति वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते अस्माच्छरीरान्निर्गते सति इदं शरीरं पापीयः पापिष्ठं मन्यते लोकः स वोयुष्माकं मध्ये वसिष्ठः श्रेष्ठ इति। यस्मिन्नुत्क्रान्ते सत्यन्ये स्थातुमशक्ताः सः श्रेयानित्यर्थः ॥ ७ ॥

**वाग्घोच्चक्राम सा सम्वत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेशह वाक् ॥ ८ ॥**

एवमुक्ते सति तत्परीक्षणाय तेषां मध्ये वागुच्चक्राम ह तदुच्चक्रमणेऽपि शरीरं न पपातेतिग्राह्यं सोत्क्रान्ता वाक् सम्वत्सरं सम्बत्सरपर्य्यन्तं प्रोष्यान्यत्र स्थित्वा पुनर्ब्रह्मदेहस्थान् देवान् प्रत्यागत्योवाच। किमिति यूयं मदृते मां विना जीवितुं स्थातुं कथमशकतेति। एवमुक्तास्ते देवा ऊचुर्ह यथा अकलामूकाः वाचा वागिन्द्रियेण वदन्तोऽपि प्राणेन प्राणन्तः चक्षुषा पश्यन्तः श्रोत्रेण शृण्वन्तो मनसा विद्वांसो

रेतसा प्रजायमानाः प्रजामुत्पादयन्तो जीवन्ति एवमजीविष्मेति । एवमुक्ता वाक् नाहं वसिष्ठेति निश्चित्य तस्मिनश्शरीरे प्रविवेश ह ॥ ८ ॥

चक्षुर्होच्चक्राम तत्सम्वत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽन्धा अपश्यन्त श्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाँ सो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥

तथा चक्षुर्होच्चक्रामेत्यादि पूर्ववत् ॥ ९ ॥

श्रोत्रं होच्चक्राम तत्सम्वत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसोरेतसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो हो च्चक्राम तत्सम्वत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धाअविद्वांसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्त श्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥

रेतोहोच्चक्राम तत्सम्वत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीवा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणविद्वांसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवं हैवेमान् प्राणान् संववर्ह दे होचुर्माभगव उत्क्रमीनवैशक्ष्याम त्वदृते जीवितुमिति स्यामेवालङ्कुरुतेति तथेति ॥ १३ ॥

यथा लोके महासुहयः महांश्चासौ सुहयश्चेति महासुहयः परिमाणतो महान् सुशोभनलक्षणोपेतो हयः। सैन्धवः सिन्धुदेशभवः। अश्वपरीक्षार्थं पुरुषेणारूढ़ः कशा वेत्रादिना ताड़ितश्च पट्वीशशङ्कून् पटनशीलाः पटव स्तेषां संहतिः पट्वी तस्याः ईशा नियामकाः पट्वीशाः पट्वीशाश्च तेशङ्कवश्चेति तथोक्तास्तान्।यद्वा पटुभूतस्य हयस्येशा नियामका बन्धकाइति यावत् पट्वीशाःते च शङ्कवश्चेति तथोक्तास्तान् संवृहेदुन्मूलयेदेवमेव प्राणो मुख्यप्राण उत्क्रमिष्यन् इमान् वागादीन् संववर्ह स्वस्वस्थानाद्भ्रंशितवान्। एतावता किं सिद्धमित्यत आह ते हेति। ते इमे प्राणा ऊचुर्ह किमिति हे भगवो भगवन् अस्माच्छरीरात् मोत्क्रमीः उत्क्रमणं माकुरु कुतः यस्मात् वयं त्वद्दते जीवितुं न वै शक्ष्यामः नैव शक्नुम इति यद्येवं मच्छ्रेष्ठता भवद्भिर्ज्ञाता तर्हि तस्य मे मम यूयं बलिं पूजां कुरुतेति प्राणेनोक्तादेवास्तथेति पूजां कुर्म इत्यूचुः ॥१३॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

---

**सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहं सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनोयद्वा अहं प्रजापतिरस्मि त्वं तत्प्रजापतिरसीति रेतस्तस्ये मे किमन्नं किं वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापोवास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥**

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥ १ ॥

सा पूर्वोक्ता वागुवाच हे प्राण अहं वसिष्ठास्मीति यत त्वं तद्वसिष्ठोऽसि वै त्वमपि स्थित्वा मदीयवसिष्ठत्वनियामकः। यशेन

गुणेनाहं वसिष्ठास्मि तत्तेन त्वमेव वसिष्ठोऽसि मद्वसिष्ठत्वं त्वदधीन-
मिति वागुवाचेति भावः एवमुत्तरत्रापि द्रष्टव्यम् एतादृशगुणविशिष्टस्य
मेऽन्नं किं वस्त्रं किमिति मुख्यः प्राण इतरान् प्राणान् पप्रच्छेत्यर्थः ।
ते होचुः यदिदमिति श्वकृम्यादिपर्यन्तप्राणिजातस्य यदन्नं तत्सर्वं प्राणस्य
तेऽन्नमापोवासः सर्वप्राणिजाते प्राणान्नत्वचिन्तनं कर्तव्यमप्सु च
वासस्त्वचिन्तनं कार्यमित्यर्थः नतु सर्वभक्षणं कर्तव्यमद्भिर्वाच्छादनं वा
कार्यमिति वा तस्यासम्भवादिति द्रष्टव्यम् । सर्वप्राणिजातान्नेऽन्न-
त्वचिन्तनं स्तौति न हवा इति सर्वप्राण्यन्ने प्राणान्नचिन्तनं कुर्वतो
नाभक्ष्यं भक्षितं भवति अभक्ष्यभक्षणे न दोष इत्यर्थः । नानन्नं गजा-
श्वादिकं प्रतिगृहीतं भवति गजाश्वप्रतिग्रहादिना न दोष इति भावः ।
सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ब्र० सू० ३।४।२८

इति सर्वान्नानुमतेः प्राणात्ययविषयत्वसमर्थनादभक्ष्य भक्षणादौ
दोषाभावमपि आपद्विषयमेवद्रष्टव्यम्। यस्मादपां वासस्त्वमनुसन्धातव्यं
तस्माद्धेतोः श्रोत्रिया विद्वांस आचमनीयाभिरद्भिर्वासोभिरेतदनं प्राण-
मनग्नं कुर्वतो मन्यमाना अन्नात्पूर्वं पश्चाच्चाचामन्तीत्यर्थः अत्रानग्नं
कुर्वन्तो मन्यन्त इत्युक्त्या वासस्त्वचिन्तनमर्थसिद्धम् । वासःकार्यत्वादन-
ग्नताया इति द्रष्टव्यम् ।

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां षष्ठाध्याये
प्रथम ब्राह्मणम् ॥ १ ॥

---

प्रकृतिविविक्तजोवयाथात्म्यविषयां पञ्चाग्निविद्यां संसृति-
वराग्याय प्रस्तौति । श्वेतुकेतुरिति ।

**श्वेतकेतुर्हवा आरुणेयः पाञ्चालानां परिषदमाजगाम आजगाम जैवालिं प्रवाहणं परिचारयमाणम् तमुदीक्ष्याभ्युवाद कुमारा ३इति सभो ३इतिप्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥**

श्वेतकेतुर्नामतः । अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयो ह पित्राऽनुशिष्टः स्वपाण्डित्यख्यापनाय पाञ्चालानां परिषदं सभामाजगाम । तत्रागत्य जिविलस्यापत्यं जैवालिस्तं प्रवाहणं नामत परिचारयमाणं स्वभृत्यैः परिचर्यमाणं प्रत्याजगाम स प्रवाहणस्तमागतं श्वेतकेतुमुदीक्ष्य गर्वेणागतोयमित्युत्प्रेक्ष्य तद्गर्वशान्त्यर्थं हे कुमारा इत्यभ्युवादाभ्युक्तवान् आमन्त्रणे प्लुतिः सभो३इतिशुश्राव एवंप्रतिश्रावितः प्रवाहण आहत्वं पित्रानुशिष्टोऽसिनु किमितिएवमुक्तः श्वेतकेतुरोमिति होवाच ॥ १ ॥

**वेत्थ यथेमाः प्रजाः प्रयन्त्यो विप्रतिपद्यन्ता ३ । इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३इति नेति हैवोवाच वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३इति नेति होवाच वेत्थया वतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३इति नेति होवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वाऽपि हि नऋषेर्वचः श्रुतं द्वे सृती अश्रृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्चेति नाहमत एकञ्च न वेदेति होवाच ॥ २ ॥**

तत्र प्रवाहणः पृच्छति । वेत्थेत्यादिना । इमाः प्रजाः प्रयत्यः लोकान्तरं गच्छन्त्यो यथाविप्रतिपद्यन्ता ३ इति येन मार्गेण विशिष्टस्थानं ब्रह्मलोकं चन्द्रलोकं वा प्राप्नुवन्ति तं मार्गं त्वं वेत्थ किमिति । विप्रतिपद्यन्ता ३ इति प्लुतिर्विचारणार्था॥ एवं पृष्टः श्वेतकेतुः नेति न वेद्मीति होवाच । द्वितीयं पृच्छति । वेत्थेति । पुनरावृत्तिमच्चन्द्रलोकरूपविशिष्टस्थानं गता इमाः प्रजा यथा येन मार्गेणेमं लोकं पुनरापद्यन्ता३इति वेत्थ किमिति । किंगतेन मार्गेणागमनम् । उत मार्गान्तरेणेति भावः । एवं पृष्टः श्वेतकेतुर्नेति

होवाच । तृतीयं पृच्छति । वेत्थेति । एवं प्रसिद्धजरादिनिमित्तेन पुनः पुनः प्रयद्भिर्गच्छद्भिर्बहुभिरप्यसौ लोकः परलोको यथा येन हेतुना न संपूर्यते तं प्रकारं वेत्थ किमिति पृष्टो नेति होवाच । चतुर्थं पृच्छति। वेत्थेति । यत्तिथ्यांयत्सङ्ख्याकायामाहुत्यां हुतायामापः जीवपरिष्वक्ताः जीवलब्धदेहाकारपरिणताः पुरुष इति वाक् यासां ता पुरुषवाचः पुरुषशब्दवाच्या भूत्वा समुत्थाय वदन्ति वदनादिव्यापारं कुर्वन्ति तामाहुतिं वेत्थ किमिति पृष्टो नेति होवाच। पञ्चमं पृच्छति वेत्थेति। देवयानस्य वा पथः पितृयाणस्य वा पथः प्रतिपदं वेत्थ उवेत्थ किं तत्प्रतिपदमित्यत आह। यदिति। यत्कर्म कृत्वा देवयानं वा पितृयाणं वा पन्थानं प्रतिपद्यते तत्प्रतिपदसाधनं वेत्थ किमित्यर्थः ननु देवयानपितृयाणरूपमार्गद्वयमेव नास्ति तत्सद्भावे प्रमाणाभावात्। अतः कथमयं प्रश्न इत्यत आह । अपिहीति हि यस्मात् नः । अस्माभिर्मार्गद्वयप्रकाशकं ऋषेर्वचोऽपि श्रुतमतोमार्गद्वयमस्तीत्यर्थः तद्वचनमुदाहरति। द्वे इति। मर्त्यानां मरणशीलानां द्वे एव सृती मार्गौ अहमश्रृणवं के ते देवानाञ्च पितॄणाञ्च सम्बन्धिन्यो देवयानपितृयाण-लक्षणइति यावत्। यदि मर्त्यानां द्व एव सृती तर्हि तमः प्रभृत्यधोगतिः केषाञ्चिन्न स्यादित्यत आह । ताभ्यामिति एजत् प्रत्यवायाद्बिभ्यत्। वेदोक्तप्रवृत्तनिवृत्तकर्मादिसाधनसम्पूर्त्तिमदिति यावत् । इदं विश्वं जीवजातं ताभ्यां सृतिभ्यां ब्रह्मस्वर्गञ्च समेति। एजदितिवैदिकानुष्ठान-वत उक्तेर्नाधोगतिविरोधः तन्मार्गद्वयं क्वास्तीत्यत उक्तम् । यदिति। द्यावापृथिव्योर्मध्ये वर्त्तमानं यदेजदिदं विश्वं जीवजातमिति वा सम्बन्ध इतिशब्दो मन्त्रसमाप्तिद्योतकः । एवमुक्तः श्वेतकेतुरहमेतेषु प्रश्नेषु एकञ्चनैकमपिन वेदेति होवाच॥ २॥

अथ हैनं वसत्योपमन्त्रयांचक्रे । अनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वा किल नोभवान्पु-रानुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान् राजन्य-

**बन्धुरप्राक्षीत्ततो नैकञ्चनवेदेति कतमे त इति। इम इति ह प्रतीकान्युदाजहार ॥ ३ ॥**

अथ स्वकृतप्रश्नोत्तरदानासामर्थ्यनिर्णयानन्तरं एनं श्वेतकेतुं वसत्या वसतिप्रयोजनेन स्वसमीपे वासायेति यावत्। उपमन्त्रयांचक्रे आज्ञां दत्तवान्। स कुमारःश्वेतुकेतुः वसतिमनादृत्य प्रदुद्राव गतवान् स कुमारः स्वपितरं प्रत्याजगाम आगत्य तं पितरं प्रत्युवाच हे पितस्त्वं इति वात्र किलैवंप्रकारेण वैपुरा पूर्वं नः अस्माननुशिष्टानवोच इति सम्यक् विद्यामनुक्त्वैवानुशिष्टानवोच इति भावः। इति साक्षेपं पुत्रवचः श्रुत्वा पिताऽऽह। कथमिति हे सुमेधः कथं नानुशिष्टोऽऽसीति। तत्कारणं पुत्र उवाच। पञ्चेति। राजन्यबन्धुः क्षत्रियाभासः मा मां पञ्च प्रश्नान् प्रष्टव्यार्थानप्राक्षीत् ततस्तेषु प्रश्नेषु एकञ्चन अहं वेदेति। एवमुक्तः पिता ते प्रश्नाः कतमा इत्याह पुत्र इमे ते प्रश्ना इति प्रतीकानि प्रश्नवाक्यान्युदाजहारोदाहृतवान् ॥ ३ ॥

**स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्च वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य-जैवालेरास तस्मै। आसनमाहृत्योदकमाहारयांचकार अथ-हास्माअर्घ्यं चकार तं होवाच वरं भगवते गौतमाय दद्मइति ॥४॥**

एवं प्रश्नवाक्यानि श्रुत्वा स पिता पुत्रक्रोधमुपशमयन्नुवाच। हे तात वत्स यथा येन प्रकारेण यत्किञ्चन यत्किञ्च विद्याजात महं वेद तत्सर्वं तथा तेन प्रकारेणाहं तुभ्यमवोचमित्येवं नोऽस्मान् जानीथा इति त्वत्तः कोन्यो मम प्रियतरोऽस्ति यदर्थमहं रक्षयिष्ये राजप्रष्टां विद्यामहं न जानामीति भावः। तामपि विद्यां चेदवाप्तुमिच्छसि तर्हि प्रेहि आगच्छ तत्र राजसमीपं प्रतीत्य गत्वा तु आवां विद्यार्थं ब्रह्मचर्यं वत्स्याव इतिपित्रोक्ते पुत्र आह भवानेव गच्छत्विति इत्युक्तः स गौतमो गौतमगोत्रोत्पन्नः तत्राजगाम कुत्र यत्र

प्रवाहणस्य जैवालेरिति षष्ठीद्वयं प्रथमार्थे जैवालिः प्रवाहण-नामराजा आस। आगतं ब्राह्मणं दृष्ट्वा स राजा तस्मै गौतमाय अर्घ्यं तदुपलक्षितां पूजां चकार। पूजां कृत्वा गौतमं प्रति गौतमाय भवते वरं दद्म इत्युवाच ह ॥ ४ ॥

**सहोवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते-वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥**

एवमुक्तः स गौतम उवाच। हे राजन् वरं दद्म इति त्वया प्रतिज्ञातो वरो मे एष कः कुमारस्य मत्पुत्रस्य अन्ते समीपे यां वाचं प्रश्नरूपामभाषथास्तां मे ब्रूहीति ॥ ५ ॥

**स होवाच दैवेषु गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥६॥**

एवं प्रार्थितः स राजोवाच हे गौतम तत् त्वया प्रार्थितं दैवेषु वरेषु वै अतस्तस्य रहस्यत्वात्तन्न प्रार्थनीयं किन्तु मानुषाणां हिरण्या-दीनां मध्ये किमपेक्षितं ब्रूहीति ॥ ६ ॥

**सहोवाच विज्ञायतेहास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान्बहोरनन्त-स्यापर्यन्तस्याभ्यवदान्योभूदिति स वै गौतमतीर्थेनेच्छासा इत्युपैम्यहं भवन्तमितिवाचाह स्मैव पूर्वं उपयन्ति सहोपा-यनकीर्त्योवास ॥ ७ ॥**

एवमुक्तः स गौतम उवाच मम हिरण्यस्य बहुतरस्यापात्तं प्राप्तिरस्तीति त्वया विज्ञायते न केवलं हिरण्यपात्रस्य किन्तु गो-अश्वानां दासीनां गवामश्वानां दासीनां प्रवाराणां परिवाराणां दासा-नामिति यावत्। परिधानस्य परिधानयोग्यस्य क्षौमादेरप्यपात्तं प्राप्तिरस्तीति त्वया विज्ञायते ह अतो न मानुषो वरो मया प्रार्थ्यते किन्तु दैव एव स त्वया देय एवेति भावेनाह। मा नो भवानिति। नोऽस्माकं भवान् बहोः प्रभूतस्यानन्तस्यानन्तफलहेतुभूतस्यापर्यन्त-

स्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्य दैववित्तस्याभ्यावदान्योऽदाता-माभूदिति अवश्यं दैवं वित्तं त्वया देयमेवेति भावः। एवं प्रार्थितवरं प्रति राजा हे गौतम तीर्थेनोपसदनशास्त्रेण तदुक्तप्रकारेण विद्यामिच्छसि इच्छस्वेत्याह। अन्यथाऽदेयत्वात्। एवं राज्ञा स्मारितशास्त्रार्थो गौतम आह। अहं भवन्तमुपैमि शिष्यत्वेनोपगच्छामीति। नन्वेवं क्षत्रिये ब्राह्मणेन शिष्यवृत्तिकरणे शास्त्रविरोधस्स्यादित्यतः श्रुतिःस्वयमाह। वाचेति पूर्वे हि किल ब्राह्मणाः क्षत्रियान् विद्यामर्थयमानाः सन्तः क्षत्रियान् शिष्यवृत्त्या वाचैवोपेयन्ति उपगच्छन्ति नोपायनशुश्रूषणादिभिः। अतः स गौतम उपायनकीर्त्योपायनकथनमात्रेणोवास ॥७॥

**सहोवाच तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा-यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवासतां त्वहं तुभ्यं वक्ष्यामि को हि त्वेवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥८॥**

स राजोवाच हे गौतम तव च पितामहा यथा नः पूज्या स्तथा-त्वमपि पूज्य एव। स वै गौतमतीर्थेनेच्छासै इति चिरवासाज्ञापन-कृतमदीया अपराधा मा गणनीयाः। इयञ्च विद्येतः पूर्वं कस्मिञ्चिदपि ब्राह्मणे नोवास स्थितवती तादृशीं ब्राह्मणैरितः पूर्वमलब्धां विद्यां तुभ्यं वक्ष्यामि को वा निकृष्टं प्रति शिष्योऽहं भवामीति वदन्तं त्वां प्रत्या-ख्यातुमर्हति। अतो दुर्लभामपि विद्यां तुभ्यं वक्ष्यामीत्यर्थः॥ ८॥

**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मि-न्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥ ९ ॥**

यावति थ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति प्रश्नस्य प्रतिवचनमाह। असाविति। हे गौतमासौ द्युलोक एवाग्निस्तस्यादित्य एव समित्। आदित्येन हि द्युलोको दीप्यते।

आदित्यस्य रश्मयो धूमः। आदित्यरूपसमित् प्रभवत्वात्। अहरर्चिः प्रकाशवत्वात्। दिशः अङ्गाराः। अवान्तर दिशो विस्फुलिङ्गा दिशामवान्तरदिशां चाहो वार्चिः प्रादुर्भावाधीनाभिव्यक्तिकत्वेनाङ्गारत्वविस्फुलिङ्गत्वे तस्मिन्नेतस्मिन्नग्ना आदित्यादिलक्षणसमिधाद्युपेते अग्नौ देवा इन्द्रियाणि श्रद्धां जुह्वति। श्रद्धा वा आपः। इति श्रद्धाशब्देनाप उच्यन्ते। आत्मधर्मभूतायाः श्रद्धायाः होतव्यत्वासम्भवात्। एतच्च प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः। ब्र० सू० ३।१।५।

इतिसूत्रभाष्ययोः स्पष्टम्॥ ६॥

**पर्जन्यो वा अग्निर्गौतम तस्य सम्वत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गाराह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति॥ १०॥**

वृष्टिप्रवर्त्तको देवः पर्जन्यः सम्वत्सर एव समिदितिशरदादिग्रीष्मान्तैः सम्वत्सरावयवैः पर्जन्याग्नेर्दीप्यमानत्वात्। ह्रादुनयः स्तनयित्नुशब्दाः। विस्फुलिङ्गाः। विप्रकीर्णत्वानेकत्वसामान्यात्। सोमं राजानं जुह्वति। कर्मफलभोगावसाने ऽमृतमयदिव्यदेहो द्रवीभूतः सन् देव शब्दवाच्यैरिन्द्रियैः सह पर्जन्ये पततीत्यर्थः शिष्टं स्पष्टम्॥१०॥

**अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गा तस्मिन्नेतस्मिन्नग्नौ देवावृष्टिं जुह्वति तस्या आहुत्याअन्नꣳ सम्भवति॥ ११॥**

अयं समुद्रपर्वतादियुक्तो लोकोऽग्निः पृथिव्यंशस्तु समित् अग्निर्धूमः समिदाश्रितत्वाद् धूमस्याग्नेरपि पृथिवीरूप समिदाश्रितत्वादग्नेर्धूमत्वं युक्तम् रात्रिरर्चिः। अर्चिः प्रकाशस्य रात्र्यधीनत्वाद्रात्रिरेवार्चिरित्यर्थः। शिष्टं स्पष्टम्॥ ११॥

**पुरुषो वा अग्निर्गौतम तस्य व्यात्तमेव समित् प्राणो धूमो वागर्चिः चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥१२॥**

पुरुषः शिरः पाण्यादिमान् पुरुषश्चतुर्थोऽग्निस्तस्य व्यात्तं विवृतं मुखं समित्। विवृतेन हि मुखेन दीप्यते पुरुषोवचनं स्वाध्यायादौ। प्राणोधूमस्तदुत्थानसामान्यात् मुखाद्धि प्राण उत्तिष्ठति। वाक्शब्दोऽर्चिर्व्यञ्जकत्वसामान्यात्। अर्चिश्च व्यञ्जकम्। तथा वाक्शब्दोऽभिधेयव्यञ्जकः चक्षुरङ्गाराः प्रकाशाश्रयत्वात् श्रोत्रं विस्फुलिङ्गाविक्षेपसामान्यात् तस्मिन्नन्नं जुह्वति। तस्या आहुतेः रेतः सम्भवति। अन्नपरिणामो हि रेतः॥ १२॥

**योषा वा अग्निर्गौतम तस्या उपस्थ एव समित्। लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥**

योषास्त्री पञ्चमो होमाधिकरणोऽग्निः वर्णसाम्याद्योनेरर्चिष्ट्वम्। अभिनन्दाः सुखलवा क्षुद्रत्वसाम्यात्। तस्मिन् रेतो जुह्वति तस्या आहुतेः पुरुषः सम्भवति। एवं द्युपर्जन्यापृलोकपुरुषयोषाग्निषु क्रमेण हूयमानाः श्रद्धासोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते। यः प्रश्नश्चतुर्थो वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवचो भूत्वा समुत्थाय वदन्ती ३ इति स एष निर्णीतः। पञ्चम्याहुतौ योषाग्नौ हुतायां रेतो भूत्वा आपः पुरुषवाचो भवन्तीति। स पुरुष एवं क्रमेण जातो जीवति कियन्तं कालमिति, उच्यते यावज्जीवति यावदस्मिञ्छरीरे स्थितिनिमित्तं कर्म विद्यते तावदित्यर्थः। अथ तत्क्षये यदा यस्मिन् काले म्रियते॥ १३॥

**अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥ १४ ॥**

अथ तदैनं मृतमग्नयेऽग्न्यर्थमेवान्त्याहुत्यै हरन्ति ऋत्विजस्तस्याहुतिभूतस्य प्रसिद्धोऽग्निरेव होमाधिकरणं न परिकल्प्योग्निः प्रसिद्धाएव समित्प्रभृतयः । तस्मिन्नग्नौ । ऋत्विग्भिरसौ स्वर्गाय लोकाय स्वाहेति यजमाने हुते सति दीप्यमानशरीरो यजमानो निष्पद्यते ॥ १४ ॥

**ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवत्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषो मानसएत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १५ ॥**

इदानीं प्रथमप्रश्ननिर्णयार्थमारभ्यते । येऽनेन प्रकारेण पञ्चाग्नीन् विदुः । द्युपर्जन्यप्रभृतिष्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतानुषक्तसञ्चरन्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन य उपासत इति यावत् ये चामीपुरुषा अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य सत्यशब्दवाच्यं परमात्मानं प्रत्यगात्मनि उपासते ते उभयेऽपि अर्चिरभिमानिनीं देवतां सङ्गता भवन्ति अर्चिषोऽहः सर्वत्र सम्भवतीत्यनुषङ्गः । अह्न आपूर्यमाणपक्षं शुक्लपक्षाभिमानिदेवतालोकं प्राप्नुवन्ति । आपूर्यमाणपक्षात् यान् षण्मासान् आदित्य उदङ्ङुत्तरतः एति । तान् षण्मासान् उत्तरायणसंज्ञकान् तदभिमानिदेवतालोकं प्राप्नुवन्ति । मासेभ्यः सम्वत्सरद्वारा देवलोकं वायुलोकं प्राप्नुवन्ति । योऽयं पवते एष देवानां गृहे इति प्रसिद्धेः । एतत्सर्वं वायुमब्दा

विशेषविशेषाभ्याम् । ब्र० सू० इतिसूत्रभाष्ये स्पष्टम् । देवलोकादादित्यमिति । आदित्याचन्द्रमसं चन्द्रमसो विद्युतमितिमध्ये चन्द्रमसः श्रवणाचन्द्रद्वारा विद्युदभिमानीं देवतां प्राप्नुवन्तीत्यर्थः । तान् वैद्युतादिति । वैद्युताद्वैद्युत इत्यर्थः । वैद्युतः पुरुषोऽमानवः परेण ब्रह्मणा मनसा सृष्टोऽमानवशब्दितः पुरुषः स एनान् ब्रह्मलोकान् गमयति । ब्रह्मैव लोको ब्रह्मलोकः ते तेष्विति । अर्चिरादिनागतास्ते सर्वे तेषु लोकेषु परा निरतिशयानन्दैश्वर्यशालिनः पारवतो नाथवन्त इति यावत् परमात्मना सनाथास्तेनानुगृहीता स्तद्दत्तानि भोग्यभोगस्थानभोगोपकरणानि भुञ्जानाः सुखेन तत्रैवाऽऽसते तेषां न पुनः संसारबन्ध इत्यर्थः ॥ १५ ॥

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाचद्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येव मेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाऽऽकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्त्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाःपतङ्गा यदिदं दन्दशूकम् ॥ १६ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

---

एवं देवयानमार्गं ससाधनमुक्त्वा पितृयाणमार्गं ससाधनमाह । अथेति । अथ ये यज्ञेन ज्योतिष्टोमादिना दानेन सत्पात्रे द्रव्यत्यागेन । तपसा कृच्छ्रचान्द्रायणादिना कामनया कृतेन लोकान्

जयन्ति प्राप्नुवन्ति । तत्कथमित्यत आह । ते धूममिति । ते प्रथमं धूमं धूमाभिमानिदेवतालोकमभिसम्भवन्ति प्राप्नुवन्ति धूमाद्रात्रिं रात्र्यभिमानिदेवतालोकमभिसम्भवन्तीति प्रत्येकं सम्बन्धः । रात्रेरपक्षीयमाणपक्षं कृष्णपक्षाभिमानिदेवतालोकं प्राप्नुवन्ति । अपक्षीयमाणत्वात् यान् षण्मासानादित्योदक्षिणाद्दक्षिणत एति तान् षण्मासान् दक्षिणायनसंज्ञकान् तदभिमानिदेवतालोकं प्राप्नुवन्ति । मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं प्राप्नुवन्ति ते चद्रं प्राप्यान्नं भवन्ति देवानां भोग्या भवन्तीत्यर्थः । तद्विशदयति तांस्तत्रेति । देवास्तांश्चन्द्रलोकं प्राप्तान् भोग्यान् कर्मिणः पुरुषान् तत्र चन्द्रलोके भक्षयन्ति तैः सेवां कारयन्तीत्यर्थः तत्र दृष्टान्तमाह ॥ यथेति यथा यज्ञे ऋत्विजः सोमं राजानं तदभिमन्यमानलताविशेषमाप्यायस्वापक्षीयस्वेति भक्षयन्ति एवमेनांस्तत्र देवाभक्षयन्तीत्यर्थः । प्रथमप्रश्नस्योत्तरमुक्त्वा इदानीमेतल्लोकप्राप्तिप्रकारदर्शनेन द्वितीयप्रश्नोत्तरमाह । तेषामिति तेषां चन्द्रलोकप्राप्तानां कर्मिणां तत् कर्मार्जितमदृष्टं यदा पर्येति गच्छति । अथ तदा ते इममेवाकाशलोकमभिनिष्पद्यन्ते । आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीमभिनिष्पद्यन्त इति प्रत्येकं सम्बन्धः । ते पृथिवीं प्राप्यान्नमन्नगता भवन्ति पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नेः जायन्ते ते कर्म कृत्वा लोकान् पुनरावृत्तिलोकान् प्रत्युत्थायिनोगमनशीला भवन्ति । ते लोकं प्रति गताः । एवमेव पूर्वोक्तप्रकारेणैवानुस्वकर्मार्जितादृष्टसमाप्त्यनन्तरं परिवर्त्तन्ते- पुनरागच्छन्ति । त एवमेवानुपरिवर्त्तन्ते परिभ्रमन्तीत्यर्थः । तृतीयप्रश्नोत्तरमाह । अथेति । अथ ये एतौ पन्थानौ विद्याकर्ममार्गौ न विदुस्ते कीटाः पतङ्गा भवन्ति । यदिदं दन्दशूकं दशनशीलं सर्यादिकं तच्च भवन्तीत्यर्थः ॥ १६ ॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां षष्ठाध्यायस्य
द्वितीयं ब्राह्मणम् ॥ २ ॥

---

स यः कामयेतमहत्प्राप्नुयामित्युद्गयन आपूर्य्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कंसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्याऽऽवृताऽऽज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं संनीय जुहोति । यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् । तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा ॥ १ ॥

योऽधिकारी दृष्टादृष्टमहत्त्वमिच्छेत्तस्य कर्तव्यविशेषमाह । स य इत्यादिना ब्राह्मणेन । योऽधिकारी अहं महत् महत्त्वं दृष्टादृष्टमहत्त्वं प्राप्नुयामिति कामयेत स उदगयने उत्तरायणे आपूर्यमाणपक्षस्य शुक्लपक्षस्य पुण्याहे पुण्यदिवसे पुंसा नक्षत्रेण हस्तस्वात्यादिपुंनक्षत्रेण जुहोति जुहुयादित्यन्वयः । तत्रेति कर्तव्यताविशेषमाह । द्वादशाहमिति । होमदिवसात् प्राक् द्वादशाहं द्वादशदिवसपर्यन्तमुपसद्व्रती पयोमात्रादिभक्षणेनोपवासलक्षणव्रतवान् भूत्वौदुम्बरे उदुम्बरवृक्षमये चमसे चमसपात्रे कंसे कांस्यपात्रे वा सर्वौषधं सर्वासामोषधीनां वक्ष्यमाणव्रीह्यादिधान्यानां समुदायं फलानि अनिषिद्धानि क्रमुककदलीप्रभृतीनि फलानीत्येवमादिसम्भरणीयं सम्भृत्य संगृह्य परिसमूह्य भूशुद्धिं कृत्वा परिलिप्य कुण्डमुपलिप्य तत्राग्निमुपसमाधाय स्थापयित्वा परिस्तीर्य स्वशाखोक्तिप्रकारेण दर्भैरास्तीर्य आवृताज्यं होमाज्यं विलेपनादिना संस्कृत्य मन्थं सर्वौषधीनां पिष्टं संनीय समीपमानीय संस्कृताज्येन जुहोति । होममन्त्रान् पठंस्तावद्देवताप्रार्थनारूपं मन्त्रद्वयं पठति । यावन्त इत्यादिना । जातं सर्वं वेत्तीतिजातवेदास्तस्य सम्बुद्धिर्हे जातवेदः त्वयि स्थिता यावन्तो देवा स्तिर्यञ्चो वक्रगतयः सन्तः पुरुषस्य मम कामान् घ्नन्ति । तेभ्यो देवेभ्यः भागधेयमाज्यभागमहं जुहोमि । ते गृहीताज्यभागा देवास्तृप्ताः सन्तो मा मां सर्वैः कामैस्तर्पयन्तु स्वाहेति प्रथमाहुतिमन्त्रः । अहं विधरणी विघ्नकर्त्रीति या देवता तिरश्चीवक्रगतिर्निष्पद्यते

ज्ञायते तां संराधनीं समस्तपुरुषार्थसाधिकां त्वा त्वां अहं घृतस्य धारया यजे स्वाहेति द्वितीयहोममन्त्रः । प्रथमाहुतिद्वयमाज्यमात्रेण घृतस्य धारयेति श्रवणात् । तथा चेयं योजना । संराधनीमहंस्वाहेति मन्त्रेणाग्नावाज्यं हुत्वा मन्थे सर्वौषधीनां पिष्टे संस्रवं स्रुवसंस्पृष्टमाज्यमवनयति सिञ्चेत् । एवमाज्यसंस्कृतं पिष्टं ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा तस्यैव विवरणं प्राणाय स्वाहेति मन्त्रेणाग्नौ जुहुयात् । एवमग्नौ हुत्वा मन्थे संस्रवमवनयति । तदाज्यसंस्कृतं पिष्टं वसिष्ठायै स्वाहा । तस्यैव विवरणं वाचे स्वाहेति जुहुयादित्यपि द्रष्टव्यम् । एतेनाग्नौ हुत्वा मन्थे संस्रवमवनयतीत्यन्ते उक्तस्याधिक्यं नेति न तस्योपसंहारपरत्वं कल्पनीयम् । यद्वा ज्येष्ठाय श्रेष्ठाय स्वाहेति मन्त्रेणाग्नावाज्यसंस्कृतमन्थं हुत्वा पुनर्होम्ये मन्थे संस्रवमवनयतीत्यादि यथाश्रुतमेव नचान्ते उक्तस्याधिक्यं होमशेषस्य मन्थस्योत्तरत्रोपयोगकथनेन तत्संस्कारार्थमन्तेऽपि मन्थे संश्रवणं कर्त्तव्यमिति भावेन तथोक्तत्वात् । एवं हुते दृष्टादृष्टमहत्त्वं लभ्यते ॥ १ । २ । ३ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति चक्षुषे स्वाहा सम्पदेस्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति ॥ २ ॥

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सं स्रव-

मवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा-मन्थे संसूवमवनयति । भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे संसूवमवनयति ॥ ३ ॥

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि सम्वर्गोऽसीति ॥ ४ ॥

अथ होमानन्तरमेनं होमावशिष्टपिष्टं अभिमृशति । अभिमर्शनं कुर्यात् । तन्मन्त्रमाह । भ्रमदसीत्यादिना अत्र मन्थस्थो विष्णुस्तूयते हेमन्थस्थब्रह्मन् त्वं भ्रमदसि । जगत्सर्जनादिक्रियारूपमसि ज्वलदसि प्रकाशरूपमसि । गुणैः पूर्णमसि प्रस्तब्धं निष्क्रियमसि अक्लिष्टकारित्वात् एकसभमसि । एकासभा जगद्रूपा यस्य तत्त्वमेकसभमसि यज्ञारम्भे प्रस्तोत्रा हिं कृतं तत् त्वमसि त्वमेव यज्ञारम्भे उच्चारितहिंकारपद-प्रतिपाद्यमिति भावः । तेनैव यज्ञमध्ये यत् हिंक्रियमाणं तत् त्वमसि । अध्वर्युणा श्रावितमसि । आग्निध्रेण त्वं प्रत्याश्रावितमसि त्वमेव तदुभयोच्चारितमन्त्रप्रतिपाद्यमितियावत् आर्द्रे मेघोदरे विद्युदाद्यन्तर्गत-रूपेण दीप्तमसि । विभुर्व्यापकोऽसि । प्रभुः समर्थोऽसि । अन्नमसि । अद्यत्वादत्तृत्वाच्च ज्योतिर्ज्ञानरूपोऽसि । निधनं सर्वेषां लयस्थानमसि सम्वर्गोऽसि समीचीनो वर्गो देवतारूपो यस्य सः सम्वर्गः सोऽसीति ॥ ४ ॥

**अथैनमुद्यच्छत्यामं स्यामं हि ते महि सहि राजेशानोऽधिपतिः समां राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥**

अथैनमभिमर्शानन्तरमेनं मन्थं सपात्रमुद्यच्छति हस्ते गृह्णाति हस्ते गृहीत्वा जप्यमन्त्रमाह। आमंसीति। हेमन्थस्थभगवन्। ते तव महिमहत्तरं रूपं त्वमेवाऽऽमंसि। आसमन्तात् साकल्येन जानासि वयं च ते तव महिमहत्तरं रूपं ते तव प्रसादात् आमं हि ईषदेव जानीम इत्यर्थः। स त्वं राजेशान ईशानां ब्रह्मादीनामनश्चेष्टकः। गुणाधिकः पालकश्चेत्यधिपतिरिति हप्रसिद्धमित्यर्थः। स्वराजेशानो भगवान् ममाधिपतिं स्वावरस्वामिनं करोतु। इति शब्दो मन्त्रसमाप्तिद्योतकः ॥ ५ ॥

**अथैनमाचमति तत्सवितुर्वरेण्यम्। मधुवाता ऋतायन्ते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। भूः स्वाहा भर्गोदेवस्य धीमहि। मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः मधुद्यौरस्तु नः पिता भुवः स्वाहा। धियो यो नः प्रचोदयात्। मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः। माध्वीर्गावो भवन्तु नः स्वः स्वाहेति। सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदं सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः सम्विशन्ति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥६॥**

अथैवं जपमन्त्रानन्तरम् एवं हस्ते गृहीत्वा मन्थं ग्रासचतुष्टयं कृत्वा पृथक् संस्थाप्य प्रथमग्रासमाचमति भक्षयति भक्षयेदित्यर्थः। तन्मन्त्रमाह। तत्सवितुरिति। द्वितीयग्रासमन्त्रमाह। भर्गोदेवस्येति। तृतीयग्रासमन्त्रमाह धियोयोन इति। चतुर्थग्रासमन्त्रमाह। सर्वाञ्चेति। सर्वाञ्चसावित्रीं गायत्रीं सर्वां च मधुमतीरुक्त्वा अनुपश्चादहमेवेदं सर्वं स्वयोग्यतानुसारेण पूर्णं भूयासमिति वदेत्। ततो

भूर्भुवः स्वाहेति चतुर्थग्रासं भक्षयेत् । अन्ततो भक्षणान्तत आचम्या ऽऽचमनं कृत्वा पाणीहस्तौ प्रक्षाल्य शुद्धाचमनञ्च विधाय जघने-नाग्निम् अग्नेर्जघनप्रदेशे प्राक् शिरा रात्रौ संविशति शयीतेत्यर्थः । अयं गायत्र्यर्थः । यः नोऽस्माकमशेषप्रत्यगात्मनां धियोः बुद्धीः प्रचोदयात् प्रेरयेत् तस्य सवितुर्देवस्य श्रीवासुदेवस्य तत्गुणै-स्ततं तस्मादेव वरेण्यं वरणीयं भर्गो धीमहि चिन्तयाम इति । अयं मधुमत्यर्थः । वाता वायवो मधुनः सुखं यथा भवति तथा ऋतायते वान्ति वान्तु प्रार्थनप्रकरणात । सिन्धवो नद्यः मधुनः सुखं यथा स्यात्तथा क्षरन्ति स्रवन्ति स्रवन्तु । ओषधी ओषधयो नोऽस्माकं माध्वीरानन्दकराः सन्तु । नक्तं रात्रिरुषसउत दिवसश्च मधु सुखमुद्दिश्य सन्तु पार्थिवं रजो मधुमत् आनन्दकरमस्तु । पिता द्यौर्नो मधु सुखमुद्दिश्यास्तु । वनस्पतिर्नोमधुमान् सुखकरोऽस्तु । सूर्यो मधुमानस्तु । गावो नोऽस्माकं माध्वीः सुखकराः भवन्त्विति । पूर्णो भूतिकरोऽनन्तसुख इति व्याहृत्यर्थः । रात्रौ शयित्वा प्रातः सन्ध्यावन्दनं कृत्वा सूर्योदयकाले आदित्यमुपतिष्ठते । तन्मन्त्रमाह । दिशामिति । हेआदित्यान्तर्गतभगवंस्त्वं दिशां सर्वदिग्वर्त्तिप्राणिना-मेकं पुण्डरीकमसि मुख्यः श्रेष्ठोऽसि । अतस्तदुपासकोऽहं मनुष्या-णामेकं पुण्डरीकं भूयासमित्यर्थः ॥ पूर्वं शयनाद्यथेतं सन्ध्या-वन्दनाद्यर्थं गतं तथा एत्य गत्वा जघनेनाग्निमग्नेः पश्चिमदेशे आसीन उपविष्टः सन् वंशमेतद्विद्योपदेशकाचार्यपरम्परालक्षणं जपति जपेत ॥ ६ ॥

तमेव वंशमाह । तंहैतमिति ।

**तंहैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥**

तमेतं निर्माणक्रमसहितं मन्थं । अरुणस्यापत्यमारुणिरुद्दाल-कनामा वाजसनेयाय याज्ञवल्क्यायान्तेवासिने शिष्यायोक्त्वोवाच । किं हेयाज्ञवल्क्य योऽधिकारी । एनं होमावशिष्टमन्थं यदि शुष्के

स्थाणौ निषिञ्चेत् तर्हि यस्मिन् स्थाणौ शाखा जायेरन् पलाशानि पर्णानि च प्ररोहेयुरिति । एवमुत्तरत्रापि व्याख्येयम् ॥ ७ ॥

एतमुहैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥

मधुकोनामतः पिङ्गस्यापत्यं पैङ्ग्यः ॥ ८ ॥

एतमुहैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन-उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥

चूलोनामतः भागवित्तेरपत्यं भागवित्तिः ॥ ९ ॥

एतमुहैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥

जनकस्यापत्यं जानकिः । आयस्थूणो नामतः ॥ १० ॥

एतमुहैव जानकिरायस्थूणः सत्यकामाय जावालायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥

सत्यकामो नामतः जवालाया अपत्यं जावालः ॥ ११ ॥

एतमुहैव सत्यकामो जावालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेवं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥

वहुत्वात्तच्छिष्याणामन्तेवासिभ्य इत्येवोक्तम् । एतद्विद्यासम्प्रदानयोग्यानाह । तमेतमिति । तमेतं पूर्वोक्तमाहात्म्यविशिष्टं मन्थमपुत्राय पुत्रशून्याय न ब्रूयात् । अनन्तेवासिने शिष्यशून्याय च न ब्रूयात् ॥ १२ ॥

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि-धान्यानि भवन्ति व्रीहि यवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चन्त्याज्यस्य जुहोति ॥ १३ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥१३॥

---

औदुम्बरः उदम्बरविकारश्चतुश्चतुःसङ्ख्याको भवति । तदेवाह । औदुम्बरः स्रुव इति । उपमन्थान्यावरणी । सर्वौषधं भृत्युक्तं विवृणोति । दशेति । ग्राम्याणि प्रधानानि धान्यानि दश भवन्ति भवेयुः कानीत्यत आह । व्रीहियवा इति । व्रीहियवास्तिलमाषाः प्रसिद्धाः । अणवः श्यामाकाः । प्रियङ्गवो गोधूमाश्च प्रसिद्धाः मसूराः देशान्तरप्रसिद्धाः खल्वा निष्पावाः खलुकुलाः कुलित्थाः तान व्रीह्यादीन् पिष्टान् पिष्टीकृतान् दधनि मधुनि कृते उपसिञ्चति तेनोक्तं कुर्यादित्यर्थः । एवमुक्तं कृत्वानन्तरमाज्यभागं पूर्वोक्तप्रकारेण जुहोतीति ॥ १३ ॥

इति बृहदारण्यकोपनिषत्तत्त्वप्रकाशिकाटीकायां षष्ठाध्यायस्य
तृतीयं ब्राह्मणम ॥ १३ ॥

---

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

अनेनोपनिषदुक्तविधानेन जातः पुत्रः प्रायः स्वर्गापवर्गयोग्यो भवतीति तत्सम्पादनायेदं ब्राह्मणं प्रवर्त्तते एषां प्रसिद्धानां

भूतानां चराचराणां पृथिवी रसः सारभूतः सर्वभूतानां मध्विति-ह्युक्तम् । पृथिव्या आपो रसः । अप्सु पृथिव्योता च प्रोता च । अपामोषधयो रसः कार्यत्वाद्रसत्वमोषध्यादीनाम् ओषधीनां पुष्पाणि पुष्पाणां फलानि । फलानां पुरुषः । पुरुषस्य रेतः सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतम् । इति श्रुत्यन्तरात् ॥ १ ॥

**स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियं ससृजे तां सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारय-त्तेनैनामभ्यसृजत ॥ २ ॥**

यत एवं सर्वभूतानां सारतममेतद्रेतोऽतः का नु खल्वस्य योग्या प्रविष्ठेति स ह सृष्ट्वा प्रजापतिरीक्षांचक्रे । ईक्षां कृत्वा स स्त्रियं ससृजे । तां च सृष्ट्वाऽधउपास्ते मैथुनाख्यमध उपासनं कृत-वान् । अत्र वाजपेयसामान्यात्क्लृप्तिमाह । एतं प्राञ्चं प्रकृष्टगतियुक्त-मात्मनोग्रावाणं सोमाभिषवो फलस्थानीयं काठिन्यसामान्यात् प्रज-ननेन्द्रियमुदपारयदुत्पूरितवान् स्त्रीव्यञ्जनं प्रति तेनैनां स्त्रियमभ्यसृज-दभिसंसर्गं कृतवान् ॥ २ ॥

**तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समीद्धो मध्यतस्तौ मुष्कौ स यावान्हवै वाजपेयेन यजमानस्य लोको भवन्त तावानस्य लोको भवति य एवं विद्वानधोपहासं चर-त्यासां स्त्रीणां सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चर-त्याऽस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥**

तस्या इति । तस्या स्त्रियः । उपस्थो वेदिः तत्साम्यात् । लोमानि तद्वृत्तीनिबर्हिः । तद्वृत्तचर्मैव चर्मकृष्णाजिनस्थानीयं यौ मध्यतो मध्यदेशे त्रियमानौ मुष्कौ वृषणौ तावधिषवणे सोमाभिष-वफलक इत्यन्वयः ॥ मध्यतो योनिमध्यप्रदेशः समिद्धो दीप्तोग्निः

तस्मिन्नग्नौ रेतो जुहुयादिति भावः। उक्तप्रकारेण मिथुनीभावस्य यज्ञभाव-नाकर्त्तुः फलमाह। स इति। वाजपेयेन यजमानस्य स प्रसिद्धो यावाँल्लोको भवति तावाँल्लोकः अस्य भवति। फलान्तरमाह। य एवमिति। य एवं विद्वानधोपहासं चर त्यासां स्त्रीणां सुकृतं वृङ्क्ते आवर्जयति। अथ पुनर्योवाजपेयसम्पत्तिं न जानात्यविद्वान् रेतसो रसतमत्वं चाधो-पहासं चरति। अस्य स्त्रियः सुकृतमावृञ्जतेऽविदुषः॥ ३॥

एतद्धस्म वै तद्विद्वानुद्दालक आरुणिराहैतद्धस्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्धस्म वै तद्विद्वान् कुमार-हारित आह। बहवो मर्या ब्राह्मणायनानिरिन्द्रियावि-सुकृतोऽस्माल्लोकात्प्रयन्ति यइदमविद्वांसोऽधोपहासं चरन्तीति वहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति॥ ४॥

एतदभिज्ञा उद्दालकादयस्त्रयो वक्ष्यमाणप्रकारेणाहुरित्यर्थः। येऽविद्वांस एतत्प्रकारानभिज्ञा मैथुनं कर्माचरन्ति ते मर्यामरण-धर्माणो ब्राह्मणायना ब्राह्मणा अयनं येषान्ते ब्रह्मवन्धवो जाति-मात्रोपजीविन इति यावत्। निरिन्द्रियाः निर्वाप्याः ज्ञानकर्मबल-हीनाः। विसुकृतः सुकृतशून्याः बहवो बहुविधाः। एवम्भूताः सन्तो-ऽस्माल्लोकात्प्रयान्तीत्यर्थः। बहु वा इदमिति। एतद्विद्यानिष्ठस्याल्पं वहु वा जाग्रत्स्वप्नयोरेतः स्कन्देत॥ ४॥

तदभिमृशेदनुवामन्त्रयेतयत यन्मेऽद्य रेतः पृथिवीमस्का-न्त्सीद्यदोषधीरप्यसरद्यदपः। इदमहं तद्रेत आददे पुनर्मामै-त्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वानिभृज्यात्॥ ५॥

तस्य रेतसोऽभिमर्शनं वाऽनुमन्त्रणं वा वक्ष्यमाणेन मन्त्रेण कुर्यादित्यर्थः। मे ममाद्य प्रातः काले यद्रेतः पृथिवीं प्रत्यास्का-

स्सीत् रागातिरेकेण स्कन्नमासीत् ' ओषधीः प्रत्यप्यसरदगमवाप: स्वयोनिं प्रति गतमभूत् । इदं रेतः सम्प्रत्याददेऽहमित्यादानमन्त्रार्थः । केनाभिप्रायेण तदादानं तदाह पुनरिति । तत्पुनारेतो रूपेण वहिर्निर्गतमिन्द्रियं मां प्रत्यागच्छतु । तेजस्त्वगता कान्तिः भगः सौभाग्यं ज्ञानं वा तदपि सर्वं रेतोनिर्गमनात्तदात्मना वहिर्निर्गतं सन्मां प्रत्यागच्छतु । अग्निर्धिष्ण्यं स्थानं येषां ते देवास्तद्रेतो यथास्थानं कल्पयन्त्वितिमार्जनमन्त्रार्थः ॥ यदाऽभिमृशति तदाऽनामिकाङ्गुष्ठाभ्यां यद्रेत आदत्त आदद इत्येवमन्तेन मन्त्रेण पुनर्मामित्यन्तेन निमृज्यादन्तरेण मध्ये भ्रुवौ भ्रुवोर्वा स्तनौ स्तनयो र्वा ॥५॥

**अथ यद्युदकआत्मानं पश्येत्तदभिमन्त्रयत मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति श्रीर्हवा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ६ ॥**

अथ यदि कदाचिदुदक आत्मानमात्मप्रतिविम्वं पश्येत्तदा मयि तेज इतिमन्त्रेणाभिमन्त्रयेतेत्यर्थः । स्त्रीणां मध्ये या रजस्वला सा श्रीः उत्कृष्टेत्यर्थः । स्त्रीणामृतुप्राप्तिरेव यशः तादृशयशो युक्तां मलोद्वाससमभिगम्यावाभ्यां पुत्र उत्पादयितव्य इत्युपमन्त्रयेतेत्यर्थः ॥ ६ ॥

**सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात् काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यशआदद इत्ययशा एव भवति ॥ ७ ॥**

स ाचेदस्मै न दद्यात । मैथुनं कर्त्तुं काममेनामवक्रीणीयादाभरणादिना ज्ञापयेत् । दण्डेन हस्तेन वा पीडयित्वा । इन्द्रियेण इतिमन्त्रेणातिक्रम्य गच्छेत् । सा च तदा प्रभृतिअरजस्का भवति ॥ ७ ॥

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥ ८ ॥

सा चेदस्मै दद्यादनुगुणैव स्याद्भर्त्तुस्तदाऽनेन मन्त्रेणोपागच्छेदिन्द्रियेण ते यशसा यश आदधामीति तद्यशस्विनावेवोभावपि भवतः ॥ ८ ॥

स यामिच्छेत् कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धमिव मादयेमाममूं मयीति ॥ ९ ॥

वाजपेयसम्पत्तिप्रत्कारविद्यां स्वीयां स्त्रियं मां कामयेतेतिच्छेत् तस्यामर्थंनिष्ठाय तस्यां प्रजननेन्द्रियं निक्षिप्येत्यर्थः मुखेन मुखं सन्धाये ॥ ९ ॥

अथ यामिच्छेन्नगर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायाभिप्राण्यापान्यादिन्द्रयेण तेरेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥

अथ यामिच्छेन्न गर्भं दधीत न धारयेद् गर्भिणी माभूदिति तस्यामर्थमिति पूर्ववत् । अभिप्राण्यापान्यात् श्वासं गृहीत्वा विसृजेदित्यर्थः ॥ १० ॥

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायान्याभिप्राण्यादिन्द्रियेण तरेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥

अत्रापाननान्तेऽभिप्राणनमिति शेषः ॥ ११ ॥

अथ यस्य जायायै जारः स्यात्तञ्चेद्द्विष्यादामपात्रऽग्निमुपसमाधाय प्रतिलोमं शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमः सर्पिषाऽक्ता जुहुयान्मम समिद्धेऽहौषीः

**प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्र-पशूंस्तआददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आद-देऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवं विद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोप-हासमिच्छेदुतह्येवंवित्परो भवति ॥ १२ ॥**

अथ पुनर्यस्य जायायै जारः उपपतिः स्यात्तं चेद्द्विष्याद्मुं हरिष्यामीति यदि मन्येत तदाऽऽमपात्रेऽग्निमुपसमाधाय सर्वं कर्म प्रतिलोमं कृत्वा शरमयं वर्हिस्तीर्त्वा तस्मिन्नग्नावाज्येनाक्ताः शरभृष्टीः वाणैषिका प्रतिलोमाः विपरीताग्राः जुहुयात् । तन्मन्त्रमाह—ममेति । मम मदीये समिद्धे यौवनादिना समिद्धयोषाग्नौ अहौषीः रेतो हुतवानसि अतस्ते तव प्राणापानावाददइतिमन्त्रमुच्चार्य्य प्रथमाहुतिं जुहुयात् । अनन्तरमसाविति शत्रोर्नाम गृह्णीयात् । एवमुत्तरत्रापि द्रष्टव्यम् । एवंविद्ब्राह्मणो यं शपति स निरिन्द्रियो विसुकृतः गतसुकृतः । अस्माल्लोकात्प्रैति मृतो भवतीत्यर्थः । तस्मादेवंवित् परदारगमने उक्तानिष्टवित् श्रोत्रियस्य दारेण दारैः सह नोपहासमिच्छेत् न कुर्यादिति किमु वक्तव्यम् । किन्तत इत्यत आह । उतेति हियस्मात्परदारहर्त्तुरेवंवित् अभिचारकर्मवेत्ता परः शत्रुर्भवति उत्तस्मान्नेच्छेदित्यर्थः ॥ १२ ॥

**अथ जायामार्त्तवं विन्देत् त्र्यहं कंसे न पिवेदहतवासा नैनां वृषलो न वृषल्युपहन्यात् त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥**

स्त्रीणां ऋतुकालेऽनुष्ठेयं व्रतमाह । अथेति । यस्य पुंसः जायां भार्य्यायामार्त्तवं ऋतुभावो विन्देत् प्राप्नुयात् तदा तस्य भार्या तदारभ्य त्र्यहं दिवसत्रयं कंसे कांस्यपात्रे न पिवेत् नाश्नीयात् । अहतवासा अधौतवासा भवेत् । एनां ऋतुमतीं वृषलः शूद्रो नोपहन्यात् । न स्पृशेत् । वृषली शूद्री च न स्पृशेत् ।

त्रिरात्रान्ते चतुर्थेऽहनि प्रातः काले आप्लुत्य स्नात्वा व्रीहीन-अवघातयेत् ॥ १३ ॥

**स इच्छेत्पुत्रो मे शुक्लो गौरोजायेत वेदमनुब्रवीत सर्वमायुरियादिति क्षीरोदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता-मीश्वरौ जनयित वै ॥ १४ ॥**

इदानीं पुत्रविशेषेच्छायां कर्त्तव्यविशेषमाह । स इति । स यः पुरुषो मे मम पुत्रः शुक्लः शुद्धो गौरो गौरवर्णो जायेत वेदमेकं वेदमनुब्रवीत सर्वमायुः शतवर्षपरिमितमायुरियात् प्राप्नुया-दितीच्छेत । तदा क्षीरोदनं पाचयित्वा तेन होमं कृत्वा सर्पिष्मन्तं तच्छेषं तौ दम्पती अश्नीयाताम् । एवं सति जनयित वै तादृशं पुत्रं जनयितु मीश्वरौ समर्थौ भवतः ॥ १४ ॥

**अथ य इच्छेत् पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनु-ब्रवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तम-श्नीयातामीश्वरौ जनयित वै ॥ १५ ॥**

**अथ यइच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदा-ननुब्रवीत सर्वमायुरियादितिदध्यौदनं पाचयित्वा सर्पिष्मन्तम-श्नीयातामीश्वरौ जनयित वै ॥ १६ ॥**

कपिलोलोहितः पिङ्गलः पिङ्गलाक्षः दध्योदनं पाचयित्वा दध्ना चरुं श्रपयित्वा ॥ १५ ॥

उदौदनमुदकेनोदनं पाचयित्वेति क्षीरादिव्यावृत्त्यर्थम् ॥ १६ ॥

**अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरिया-दिति तिलोदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै ॥ १७ ॥**

दुहितुः पाण्डित्यं लौकिकविषये वेदेऽनधिकारादिति द्रष्टव्यम् ॥ १७ ॥

**अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः समितिं गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता-मीश्वरौ जनयित वा औक्षेण वार्षभेण वा ॥ १८ ॥**

विजिगीथो जयशीलः समितिं गमो विद्वत्सभां प्रवेष्टा शुश्रूषितां रमणीयां माननीयार्थाम् । उक्षा गोवृषः तत्सम्बन्ध्यौक्षं । वृषभोवलीवर्दस्तत्सम्बन्धिवार्षभं तेन मांसेन युक्तमोदनमित्यन्वयः ॥१८॥

**अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थाली-पाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सावित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्ये-तरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सञ्जायां पत्या सहेति ॥ १९ ॥**

क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामित्युक्तं तत्कदे-त्यतो वक्ष्यमाणहोमानन्तरमेवेति भावेन सत्पुत्रोत्पत्त्युपयुक्तं होममाह । अथेति । त्रिरात्रान्ते आप्लुतया स्त्रिया व्रीह्यवहननकरणानन्तरं चतु-र्थेह्नि प्रातरेव स्थालीपाकावृताज्यं स्थालीपाकञ्चावृताज्यञ्चेति स्थाली-पाकावृताज्यं तत् । अभिवेष्टयित्वा सम्यक्कृत्वा स्थालीपाकस्याज्य-संस्कृतस्योपघातं भागं जुहोति जुहुयात् । तन्मन्त्रमाह । अग्नये स्वाहेति । अत्राग्न्यनुमितिसवितृशब्दास्तदन्तर्गतविष्णुपराः तस्यैव सकलयज्ञभोक्तृत्वात् देवाय क्रीडादिगुणसम्पन्नाय । सवितृशब्दार्थ-माह । सत्यप्रसवायेति । सत्यभूतजगत्कारणाय । सत्पुत्रप्रसवकार-णायेति वा । इत्यनेन मन्त्रेण हुत्वा स्थलीपाकस्थं चरुशेषमुद्धृत्य प्राश्नाति भक्षयेत् । स्वयं प्राश्य इतरस्याः भार्यायाः तदेव प्रयच्छति दद्यात् । ततः पाणी प्रक्षाल्योदपात्रं पूरयित्वा तेनोदकेनैनां भार्यां त्रिरभ्युक्षति त्रिवारमभ्युक्षणं कुर्यात् । तन्मन्त्रमाह । उत्तिष्ठेति ।

हेविश्वावसो गन्धर्व अतो मद्भार्यातः । उत्तिष्ठ त्वमन्यां प्रभार्यां पीवरीं तरुणीमिति यावत् । इच्छ इमां जायान्तु पत्या मया सह संसृज संयोजयेत्यर्थः ॥ १६ ॥

अथैवं गन्धर्वोच्चाटनानन्तरं यथाकामं क्षीरोदनादिभोजनानन्तरम् । एनां स्वभार्यामभिपद्यते प्राप्नुयात् । तदा वक्तव्यमाह अथेति ।

**अथैनामभिपद्यतेऽमोऽहमस्मि सात्वमस्यमोहं सा माहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वं तावेहि संरमावहै स रेतो दधावहै पुंसे पुत्राय वित्तय इति ॥२०॥**

अमोऽहमस्मीतिमन्त्रेणैनां सङ्गच्छेत ॥ २० ॥

**अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थंनिष्ठाय मुखेन मुखं सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं देहि सिनीवालि गर्भं देहि पृथुष्टुके । गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥**

**हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ तत्ते गर्भं हवामहे दशमे मासि सूतवे । यथाग्निगर्भा पृथिवी यथा द्यौ रिन्द्रेण गर्भिणी । वायुर्दिशां यथागर्भ एवं गर्भं दधामितेऽसाविति ॥ २२ ॥**

**सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः । एवाते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतःसार्गलः सपरिश्रयः तमिन्द्रः निर्जहिगर्भेण सावरां सहेति ॥ २३ ॥**

प्रसवावसरे कर्तव्यमाह । सोष्यन्तमिति । सोष्यन्तीं प्रसविष्यन्तीं भार्यामद्भिरभ्युक्षति तन्मन्त्रमाह । यथेति । यथा वायुः

पुष्करिणीं सर्वतः समिङ्गयति । स्वरूपोपघातमकृत्वा चालयति । एवा एवमेव ते गर्भः सूचिकावायुना प्रेरित एजतु स्थानाच्चलतु । तदनन्तरं जरायुणोल्वेन सहावैतु निर्गच्छतु । उत्तरत्रेन्द्रं प्रार्थयितुमादौ हेतुमाह । इन्द्रस्येति । इन्द्रस्येन्द्रेण परमैश्वर्यसम्पन्नेन भगवता । सार्गलः । अर्गलया वायुनिरोधेन सहितः सपरिश्रयः परिश्रयेण परिवेष्टनेन जरायुणा सहितः अयं गर्भः व्रजःआश्रयः कृतः गर्भमाश्रित्य तद्रक्षकतया भगवान वर्त्तत इति यावत। किन्तत इत्यत आह। तमिति हेइन्द्र परमैश्वर्य्यसम्पन्न सावरमावरणसहितं तं गर्भं निर्जहि निर्गमय॥ २३ ॥

**जातेऽग्निमुपसमाधायाङ्कआधाय कंसेपृषदाज्यं संनीय पृषदाज्यस्योपघातं जुहोति । अस्मिन्सहस्रं पुष्यासमेधमानः स्वेगृहे । अस्योपसन्द्यां माच्छैत्सीत् प्रजया च पशुभिश्च स्वाहा। मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु नः स्याहेति॥ २४ ॥**

प्रसवानन्तरं कर्त्तव्यमाह । जात इति । पुत्रे जाते सति तमङ्के आधायाग्निमुपसमाधाय कंसे कांस्यपात्रे पृषदाज्यं संस्कृताज्यं संनीय सम्पाद्य पृषदाज्यस्योपधातं भागं जुहोति । होममन्त्रमाह । अस्मिन्निति । हि अग्न्यन्तर्गतभगवन्नहमस्मिन स्वे गेहे सहस्रं पुष्यासमेधमानो वर्द्धमानश्च भूयासमित्यर्थः अस्य पुत्रस्योपसद्यां सन्ततिं प्रजया पशुभिश्च सहमाच्छैत्सीः विच्छिन्नं माकुरुः । मयि स्थितान् प्राणान् मनसा सह त्वयि जुहोमि त्वद्विपयान्करोमि । इह कर्त्तव्यकर्मविषये कर्मणा यदत्यरीरिचमधिकभवमधिककर्मकृतवानस्मीति यावत । तत्सर्वं स्विष्टकृत् स्वभक्तिज्ञानादिपूर्वकमिष्टं न्यूनाधिकमपि सम्यक् करोतीतिस्विष्टकृन्नामा विद्वान् सर्वज्ञोऽग्निस्तदन्तर्गतो भगवान् स्विष्टं सुहुतं करोत्वित्यर्थः ॥२४॥

अथास्य दक्षिणकर्णमभिनिधाय वाग्वागितित्रिः । अथ दधिमधुघृतं संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥

अथास्य नाम करोति वेदोऽसीतितदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥

एतद्धोमानन्तरं कर्त्तव्यमाह । अथेति । अथस्विष्टकृद्धोमानन्तरमस्य शिशोदक्षिणकर्णमभिनिधाय पिता स्वाभिमुखं निधाय त्रयीलक्षणा वाक् त्वयि प्रविशत्वित्यभिप्रायवान् वाग्वागितित्रिर्जपेदिति शेषः । अथ त्रिर्जपानन्तरं दधिमधुघृतं सन्नीयानन्तर्हितेन वस्त्राद्यनावृतेन जातरूपेण सुवर्णेन प्राशयति । अत्र प्राशनमन्त्रं पठति भूरिति । हेभूः ते त्वयि दधामीत्यर्थः ॥ २५ ॥

अथ पूर्वोदाहृतचतुर्मन्त्रैः प्रत्येकमन्नप्राशनानन्तरमस्यशिशोर्नाम करोति । किमिति । वेदोसि । वेदनामकोऽसीति नामास्यशिशोर्गुह्यं गोप्यमेव भवति नतु प्रकटनीयं व्यवहारार्थं प्रसिद्धनाम तु स्वाभिप्रेतदेववाचकं कर्त्तव्यमिति भावः ॥ २६ ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो-यो मयोभूर्योरत्नधा वसुविद्यः सुदत्रःयेन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥

अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति तं वा एतमाहुरतिपिता वताभूतिपितामहो वताभूः परमां वत काष्टां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवं विदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

———

अथ नामकरणानन्तरमेनं शिशुं तन्मात्रे प्रादाय स्तनं प्रयच्छति दापयेत्। तन्मत्रमाह। यस्त इति। हे सरस्वति ते तव यस्तनः शशयः शं सुखं तस्य शयः आशयः। शे सुखे शेत इति वा शशयः। यो मयोभूः अवग्रहदर्शनाद्भिन्नं पदं मयः सर्वप्रधानो भूः पूर्णः योरत्नान्याभरणरूपाणि धत्त इति रत्नधा वसुआभरणरूपमेव विन्दति प्राप्नेतीतिवसुवित्। यः सुदत्रः सम्यक्दाता रक्षकश्च येन त्वदीयेन स्तनेन त्वं विश्वा विश्वानि वार्याणि वरणीयानि देवादीनि पुष्यसितं स्तनमिह लोके धातवे शिशोः पानार्थम्। अकः अकार्षिरित्यर्थः॥ २७॥

अथस्तनप्रदानानन्तरमस्य शिशोर्मातरमभिमन्त्रयते तन्मन्त्रमाह। इलासीति हे भार्ये त्वमिलासि स्तुत्यासि मैत्रावरुणी मित्रावरुणनामकभगवद्रूपाधिष्ठानभूतासि हेवोरे भवती वीरं पुत्रमजीजनत् सा त्वं पुनर्वीरवती पुत्रवती भव। एवमाशीर्वादकरणनिमित्तमाह। यस्यामिति। याऽस्मान्वीरवतः पुत्रवतो करत्। अकरोदिति। एवमुक्तप्रकारेण शिशोः संस्कारकरणे किं स्यादित्यत आह। तं वा एनमिति। एवंविदः पूर्वोक्तप्रकारेण भगवज्ज्ञानवतो ब्राह्मणस्य पुत्रो जायते तं वा एनं जनाः हेपुत्र त्वमतिपिता पितरमतिक्रान्तो भूः वतेत्याश्चर्ये न केवलमेतावत्। अतिपितामहः पितामहमतिक्रान्तोऽभूः कुतः। अयं श्रिया यशसा ब्रह्मवर्चसेन परमां काष्टामवधिं प्रापद्दैश्वर्यादिसम्पन्न इत्याहुरितिसम्बन्धः॥ २८॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम्॥ ४॥

---

अथेदानीमध्यायद्वयोक्तविद्याप्रवर्त्तकऋषिपरम्परा स्त्रीप्राधान्यमुखेन कीर्त्यते गुणवान् पुत्रो भवतीति तस्याः प्रस्तुत्वात्॥

**अथवंशः पौतिमाषी पुत्रः कात्ययनीपुत्रात् कात्ययनी·**

पुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणिपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रः । आर्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतिपुत्रात्सांकृतीपुत्रः । आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डुकायनीपुत्रान्माण्डुकायनीपुत्रः शाण्डलीपुत्राच्छाण्डलीपुत्रो राथीतरीपुत्राद्रथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्रात्क्रौञ्चिकीपुत्रो वेदभृतीपुत्रापुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रात् प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान्वाध्योगोऽसिताद्वार्षगणादसितोवार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवः कश्यपो नैध्रुविर्वाचो वागम्भिण्याद्म्भिण्य आदित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥३॥

सामानमाङ्गीवीपुत्रात्साङ्गीवीपुत्रो माण्डुकायनेर्माण्डु-
कायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थानान्मा-
हित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो
वात्स्याद्वात्स्यः कुश्रेः कुश्रिः यज्ञवचसो राजस्तम्बायना-
द्यज्ञवचाराजस्तम्बायन स्तुरात् कावषेयात् तुरः कावषेयः
प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भूः ब्रह्मणे नमः ॥४॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

स्वयंभूरिति । स्वतः सर्वज्ञ इत्यर्थः ॥४॥

इति बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे । अमन्दानन्द-
सान्द्राय निम्बार्काय नमो नमः ॥ १ ॥

बृहदारण्यटीकेयं पूर्वाचार्योक्तितः मया ॥ तत्वप्रकाशि-
कानाम्ना सङ्गृहीता स्वतुष्टिदा ॥ २ ॥

इति श्रीनिवृत्तिपथप्रवर्तक भगवदवतार श्री १०८ सनन्दनादि-
प्रवर्तितस सम्प्रदायानुगताशेषरसिकचक्रचूड़ामणि श्री-
स्वामिहरिदासपदाश्रिताश्रिता परमविरक्तश्रीस्वामिनी
शरणपदाश्रितामोलकरामेण विदुषा संगृहीतायां
बृहदारण्यकोपनिषत्तत्वप्रकाशिकाटीकायां
षष्ठोऽध्यायः ॥ ६ ॥

---

समाप्तेयं तत्वप्रकाशिकाटीकोपेताबृहदारण्यकोपनिषत ॥

---

मुद्रक—बाबू प्रभूदयाल मीतल, अग्रवाल प्रेस, वृन्दावन ।

॥ श्रीराधासर्वेश्वरो विजयतेतराम् ॥

॥ पूज्यपाद श्री १०८ महामुनीन्द्र भगवन्निम्बाकाचार्य्याय नमः ॥

# श्वेताश्वेतरोपनिषत्

अनादिनिवृत्तिपथप्रवर्तकलोकाचार्य श्री सनन्दनादि-
प्रवर्तित श्री १०८ महामुनीन्द्र भगवन्निम्बार्काचार्य-
चरणोपबृंहितवैदिकसत्सम्प्रदायानुगतपूज्यपाद
परमार्थिदासपदाश्रितविद्वद्गोष्ठिवरिष्ट श्री-
मुकुन्ददेवशरणशिष्यविद्वद्वर्य्यरणछोडदास
सम्पादिता तत्त्वप्रकाशिकाटीका
सम्वलिता

सा च

श्रीवृन्दावनस्थाखिलभारतवर्षीय श्री १०८ निम्बार्कमहासभा-
सभासद्महानुभावैः वैष्णवैः मुद्राप्य
प्राकाश्यं नीता

# श्वेताश्वतरोपनिषद्विषयसूचीपत्रकम्

## अथ प्रथमोऽध्यायः



## अथ द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

इति श्वेताश्वतरोपनिषद्विषयसूचिः

* महामुनीन्द्रायभगवते श्री १०८ निम्बार्काचार्याय नमः *

श्री १०८ भगवन्निम्बार्काचार्यसम्प्रदायानुगत

श्रीविद्वद्गोष्ठिवरिष्ठरणछोडदासविरचिता-

# श्रीश्वेताश्वतरोपनिषत्।

## उपनिषत्प्रकाशिकाव्याख्यासम्वलिता।

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः ३॥

ॐ ब्रह्मवादिनो वदन्ति।

**किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व सम्प्रतिष्ठाः। अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थाम् ॥ १ ॥**

श्रीगुरुचरणकमलेभ्यो नमः। जयन्ति श्रीमदाचार्या नियमानन्दसंज्ञकाः। नियमेन यदानन्दो विश्वं भासयतेऽनिशम् ॥ १ ॥

वन्दे श्रीश्रीनिवासार्य्यं वेदान्ताम्बुजभास्करम्।
भक्ताज्ञानतमोध्वंसिसूत्रवाक्यार्थभासकम् ॥२॥

श्रीमुकुन्दं गुरुं वन्दे यत्कृपालब्धबुद्धिना।
श्वेताश्वतरमन्त्राणां विवृतिः क्रियते मया ॥३॥

भाष्यं तेषां कृतं श्रीश्रीनिवासाचार्यदेशिकैः।
तस्य शब्दार्थतो गौढ्यात् सुवृत्ती रच्यते मया ॥४॥

अथ खलु ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठवेदान्तैकवेद्यपरब्रह्म-

पुरुषोत्तमादिशब्दाभिधेय सकलविश्वजन्माद्यभिन्ननिमित्तोपादानकारण-मोक्षप्रदातृमुक्तोपसृप्यकल्याणगुणगणरत्नाकरश्रीकृष्णाज्ञयावनितलाव-तीर्णस्य तदचिन्त्यशक्त्युपबृंहितानन्तशक्तेर्जगदुद्दिधीर्षोः श्रीसुदर्शना-वतारस्याद्याचार्य्यशिरोमणेर्भगवतः श्रीनियमानन्दाभिधस्य शिष्यप्रवरो भगवान् पाञ्चजन्यावतारो निरतिशयवात्सल्यकारुण्यादिगुणरत्न-महोदधिर्निजाश्रितसंरक्षणलब्धदीक्षः श्रीश्रीनिवासाचार्य्यः श्वेताश्वत-रमन्त्राणामर्थं भाष्यमुखेन निगदं वभाषे । तस्य च शब्दतोऽर्थतश्च विस्तृतत्वादतिगूढार्थत्वाच्च तदुक्तार्थलाभाय सुगमा वृत्तिः श्रुत्यर्थ-प्रकाशिकाभिधा स्वबोधाय मया विरच्यते ।

'ब्रह्मवादिना' इति । स्वरूपतोगुणतश्च बृहत्तमवस्तु वदन-शीला मुनयो वक्ष्यमाणप्रकारेण वदन्ति स्मेत्यर्थः । प्रकारमेवाह 'किं कारणमिति' । हेब्रह्मविदः जगतः कारणं ब्रह्म किं किं प्रकारकं निमित्तं वोपादानं वोभयात्मकं वा ? अथवा जगत्कारणं किं ब्रह्म वाऽन्यद्वा ? 'कुतः स्म जाताः' कस्माद्वयं जाताःस्म तत्राप्याकाशादि-जडवर्गवत्स्वविकृततया वा स्थूलशरीरभजनकर्म्मफलभोगार्हज्ञान-प्रकाशमात्रेण वेति । 'जीवाम केन लडर्थे लोट् । केनादृष्टादिना वा ईश्वरेण वा जीवामः प्राणान्धारयामः । 'क्व च सम्प्रतिष्ठाः' मोक्षावस्थाभाजिताः सन्तः कस्मिन्नधिष्ठाने स्थास्याम इति । अधिष्ठिताः केनेति केनेन्द्रियप्रवर्त्तकदेवगणेनवेश्वरेणवाऽधिष्ठिताः नियमिताः सन्तः सुखेतरेषु सुखदुःखेषु पुण्यापुण्यकर्म्मफलभूतेषु वर्त्तामह इति व्यवस्थां ब्रूत इति शेषः ॥ १ ॥

**कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां नत्वात्मभावादात्माऽप्यनीशः सुखदुःखहेतोः ॥ २ ॥**

न तावत्कालादीनां कारणादिभावः संभवति पारतन्त्र्यादित्याह । काल इत्यादि तत्र "कालः सृजति भूतानि कालः संहरति प्रजाः ।

सर्वे कालस्य वशगा न कालः कस्यचिद्वशः ॥ कालो भवाय भूतानामभवाय च पाण्डव । कालमूलमिदं ज्ञात्वा भव स्थैर्य्यधरोऽर्जुने" त्यादिस्मृतेः । काल एव कारणमिति कालविदः स्वभाव इति लोकायतिकाः, दैवज्ञा नियत्याख्यं कर्म्मैव हेतुरितिमीमांसकाः, कारणभावरूपयदृच्छयैव जगज्जायत इति निरीश्वरवादिनः, भूतानि कारणमिति केचित् योनिः प्रकृतिः कारणमिति साङ्ख्याः, पुरुषो हिरण्यगर्भो हेतुरिति योगविदः, इति अनेन प्रकारेण चिन्त्यमेव न निश्चेतुं शक्यं जडानां चेतनस्य वा प्रत्येकं हेतुत्वासम्भवादित्यर्थः । ननु तेषां संयोग एव कारणं भवेत्तन्मध्य आत्मनश्चेतनस्य संयोजकस्य सद्भावेन संयोगसम्भवादित्यत आह-संयोग एषां न त्वात्मभावादिति । तु शब्द एवार्थः आत्मसद्भावादेषां संयोगः सम्भवतीत्येतन्नैवेत्यर्थः तस्य स्वातन्त्र्याभावात् अन्यथा सुखभोक्तृत्वमेव स्यात् नतु दुःखभोक्तृत्वम् अतएव तस्य कारणत्वमपि न सम्भवतीत्याह । आत्माऽप्यनीशः सुखदुःखहेतोरिति पुण्यापुण्यकर्म्मपरवशत्वेन सुखदुःखभोगकर्त्तृतया वर्त्तमानोजीवोऽपि विश्वनिर्म्माणेऽनीशोऽसमर्थ इत्यर्थः ॥ ३ ॥

**ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ।**
**यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ।३।**

एवं पूर्वपक्षनिरसनपूर्वकं मुनयो यद् दृष्टवन्तस्तदाह । ते इति ते मुनयो ध्यानलक्षणयोगमनुगताः सन्तो ध्याननिष्ठिता भूत्वा देवस्य 'कृष्ण एव परोदेवस्तं ध्यायेदि'त्यादि श्रुतिप्रतिपाद्यस्यात्माख्यं जीवभूतां परां शक्तिं स्वगुणैः सत्त्वादिभिर्निगूढां युक्तामपरां जडात्मिकाञ्च शक्तिमपश्यन् यश्चैको निखिलानि सर्व्वाणि कारणानि तानि पूर्व्वं विकल्पितानि कालात्मयुक्तानि कालप्रभृत्यात्मपर्य्यन्तानि अधितिष्ठति सर्व्वकारणकारणतया सर्व्वाधिष्ठातृतया सर्वनियन्तृतया सर्व्वाधारतया सर्व्वव्यापकतया च सर्व्वं चिदचिद्वर्गमधिष्ठाय तिष्ठति वर्तते तञ्चापश्यन्निति योजना ।

यद्वा देवं देवपदार्थं आत्मानञ्चेतनवर्गं अचेतनवर्गञ्चापश्यन समाधाविति शेषः । अचेतनं विशिनष्टि स्वगुणैर्निगूढामिति । देवं विशिनष्टि य इति शेषं पूर्व्ववत् । तथा च तत्त्वत्रयमत्र वाक्ये प्रतिपादितम्भवति "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ताक्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्भुक्तभोगामजोऽन्यः । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।" इत्यादिभिरग्रेऽपि स्पष्टोक्तेः तेष्वपि ब्रह्मणश्चेतनाचेतनयोश्च स्वाभाविकभेदाभेद एव सम्बन्ध इति 'पुरुष एवेदं सर्व्वमि'त्यस्य व्याख्याने स्फुटीकरिष्यामः ॥

**तमेकनेमिं त्रिवृतं षोडशान्तं शतार्द्धारं विंशति प्रत्यराभिः।**
**अष्टकैःषड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥**

चित्तावतारसौकर्याय तं च चक्ररूपेण निरूपयति—तमेकनेमिमिति । एका प्रकृत्याख्या संसाररथभ्रमणनिर्वाहिका नेमिर्यस्य तं परमात्मानं सत्त्वादिगुणैर्ब्रह्मविष्ण्वादित्रिप्रकारतया त्रिवृतं प्राणादिनामान्तषोडशकलानामन्तोऽवसानं समाप्तिर्यस्मिंस्तं वाचकभूता अकारादिपञ्चाशद्वर्णलक्षणा अरा यस्य तं शतार्द्धारं द्वादशमासषड्ऋत्वयनद्वयं संवत्सरात्मकं विंशतिप्रत्यरैर्युक्तं लिङ्गव्यत्ययश्छान्दसः तत्रारा नाभिनेम्योरन्तरालवर्त्तिकाष्ठानि । प्रत्यराश्च तद्दार्ढ्याय निहितास्तन्मध्यवर्त्तिनः काष्ठकीलाः अष्टकैरिति दयाक्षान्त्यनसूयाशौचानायासमंगलकार्पण्यास्पृहेत्यात्मगुणाष्टकमेकम् अणिमाद्यैश्वर्य्याष्टकम् द्वितीयम् प्राच्यादिदिगष्टकम् दिक्पालाष्टकं वा तृतीयं । 'भूमिरापोऽनलो वायुरित्यादिगीतोक्तं प्रकृत्यष्टकं, अष्टौ प्रकृतय इत्युक्तं प्रकृत्यष्टकं वा चतुर्थम् । धर्म्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्य्याणीति गौतमोक्तम्भावाष्टकं अपहतपाप्मत्वादिब्रह्मगुणाष्टकं वा पञ्चमम् ।

ब्रह्मा प्रजापतिर्देवा गन्धर्वा यक्षराक्षसाः पितरः पिशाचाश्चेति देवाष्टकं अष्टौ वसव इति वस्वष्टकं वा षष्ठम् एभिः षड्भिरष्टकै-रुपेतं विश्वरूपो विराट्पुरुषः स एव मुख्यः पाशो यस्य तं स्वाश्रित-जगन्नैश्चल्यहेतुतया बन्धकपाशवद्विराट् पुरुषो ब्रह्मचक्रस्य पाशरूप इत्यर्थः। त्रयो देवयानपितृयाणक्षुद्रजन्तुभवनलक्षणमार्गभेदा यस्मिंस्तं त्रिमार्गभेदं पितृयाणक्षुद्रजन्तुभवनलक्षणमार्गद्वयस्य हेतुभूतदेहात्मै-क्याभिमानलक्षणो मोहो यस्मात्तं द्विनिमित्तैकमोहमपश्यन्निति पूर्वेणैव सम्बन्धः ॥ ४ ॥

**पञ्च स्रोतोऽम्बुपञ्चयोन्युग्रवक्त्रां पञ्चप्राणोर्मिंपञ्चबुद्ध्या-दिमूलाम्। पञ्चावर्त्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्च-पर्वामधीमः ॥ ५ ॥**

एवं चक्रतया निरूपयित्वा तच्छक्तितयोक्तां प्रकृतिं नदीत्वेन वैराग्यार्थं निरूपयति—पञ्चस्रोतोऽम्बुमिति। पञ्चाविच्छिन्नस्रोतो-रूपेण प्रवर्त्तमानानि तमोऽक्षराव्यक्तमहदहङ्काररूपाणि जलस्थानी-यानि यस्यास्तां पञ्च योनयो महाभूतोपादानानि पञ्चतन्मात्राण्येत्रो-ग्राणि प्रवाहमुखरूपाणि यस्यास्तां पञ्चयोन्युग्रवक्त्रां पञ्चप्राणादय ऊर्म्मिस्थानीया यस्यास्तां पञ्चप्राणोर्मिं बुद्धेर्ज्ञानस्यादिभूतानि कारण-रूपाणि पञ्चज्ञानेन्द्रियाणि मूलं यस्यास्तां पञ्चबुद्ध्यादिमूलाम्। कर्म्मेन्द्रियाण्यावर्त्तस्थानीयानि यस्यास्तां पञ्चावर्त्ताम्। गर्भजन्मव्याधि-जरामरणाख्यदुःखानि पञ्चमहाभूतानि वात्यन्तप्रतिकूलतया प्रवर्त्त-मानानि ओघस्य पूरस्य वेगस्थानीयानि यस्यास्तां पञ्चदुःखौघवेगाम्। आकारादिपञ्चाशद्वर्णलक्षणभेदा यस्यास्तां पञ्चाशद्भेदाम्। तमोमोह-महामोहतामिस्रान्धतामिस्राः पञ्चपर्वाणि यस्यास्तां पञ्चपर्वां ब्रह्मा-त्मिकां प्रकृतिं तदधिष्ठातारं परमात्मानं चाधीमः स्मराम इति शब्दो मन्त्रसमाप्त्यर्थः ॥ ५ ॥

सर्व्वाजीवे सर्व्वसंस्थे बृहन्ते तस्मिन्हंसो भ्राम्यते

ब्रह्मचक्रे। पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥

'एवं किं कारणं ब्रह्म कुतः स्म जाता' इति प्रश्ने कारणनीत्यनेन देवशब्दितः श्रीकृष्ण एव सर्व्वजगदभिन्ननिमित्तोपादानकारणं ततः सकाशादेव कर्म्मफलभोगार्हज्ञानप्रकाशतच्छक्तिपरिणतस्थूलशरीरभाक्तया जाता इत्युत्तरमुक्तम्। जीवाम केनेत्यादि प्रश्नत्रयोत्तरं क्रमेण दर्शयति। सर्व्वाजीव इति। सर्व्वाना जीवयति यस्तस्मिन् सर्व्वेषां संस्था समाप्तिः प्रलयो यत्र तत्तस्मिन् बृंहते बृहति ततश्च निरतिशयबृहत्त्वादेव सर्वसंस्थत्वादिकं तस्मिन्युज्यत एवेति भावः तादृशे ब्रह्मरूपे चक्रे हन्तुं गन्तुमनेकजनिषु सञ्चरितुं शीलमस्येति हंसो जीवः 'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इत्युक्तरीत्या ब्रह्मचक्रेणैव भ्राम्यमाणत्वात् परवशतया भ्राम्यते परिभ्रमतीत्यर्थः। एवं ज्ञातुः फलं कथयति—पृथगिति। पूर्वमन्त्रोक्तरीत्या भ्रामयितृत्वेन प्रेरितारं नियन्तारं परमात्मानं पृथग् मत्वा तन्नियम्यभूतं स्वात्मानं च पृथग् मत्वा ततो मननप्रीतेन तेन परमात्मना जुष्टः प्रीतिविषयकृतः सन्नमृतत्वं मोक्षमेति प्राप्नोतीत्यर्थः। एतेनापरमार्थज्ञानस्य मोक्षहेतुत्वासम्भवात् मोक्षप्राप्तिहेतुभूतज्ञानविषयस्य नियम्यनियन्तृत्वरूपजीवेश्वरभेदस्य परमार्थत्वमुक्तम्भवति ॥ ६ ॥

उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरञ्च। अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥

पूर्व्वं चक्ररूपतया निर्दिष्टस्यैव परमत्वं सर्व्वाधारत्वं स्वमहिमप्रतिष्ठितत्वं व्यापकत्वञ्चाह—उद्गीतमिति। एतत्प्रकृतं परमं उत्कृष्टं तुएवार्थः ब्रह्मैव 'परं ब्रह्म परं धाम पवित्रं परमं भवान्। नारायणं परं ब्रह्म स्वे महिम्नि प्रतिष्ठितः।" एतद्वै तदक्षरं

गार्गि ब्राह्मणा अभिवदन्तीत्यादिवाक्यैरुत् ऊच्चैर्गीतं, उद्गीथमिति पाठेऽप्ययमेवार्थः ।

स्वस्मिन्नात्मीये महिम्नि प्रतिष्ठा यस्य तत् स्त्रीलिङ्गं छान्दसम्। अक्षरमश्नुते व्याप्नोतीत्यक्षरं तस्मिन्प्रतिष्ठाऽक्षरे परब्रह्मणि प्रकृतिपुरुषकालरूपत्रयमाश्रितमिति शेषः । अत्रान्तरमिति वेदविदः परमं साम्यमुपैतीत्यादिवेदतात्पर्य्यविदस्तत्परा ब्रह्मपराः ब्रह्मप्राप्तिकामाः । अत्र ब्रह्मणि प्रकृत्यादीनामपृथक्सिद्धतयान्तरशब्दोदितमाधाराधेयभावलक्षणं भेदं विदित्वा योनिमुक्ताः प्रकृतिसम्बन्धविनिर्म्मुक्ताः सन्तः लीनास्तत्साधर्म्यलक्षणं श्लेषं गता इत्यर्थः ॥७॥

ननु प्रकृतिसम्बन्धस्य जीवेशयोरविशिष्टत्वात्कुतो जीवस्यैव तया बन्धो नेश्वरस्येत्याशङ्क्याह—

**संयुक्तमेतत्क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ८ ॥**

संयुक्तमिति । व्यक्ताव्यक्तलक्षणं क्षरमचिद्वर्गमक्षरं जीववर्गं भोक्तृभोग्यरूपेण परस्परसंयुक्तं विश्वं सर्व्वईशः परमात्मा भरते बिभर्ति नच तया बद्ध्यते। 'न मे कर्म्मफले स्पृहे' त्युक्तरीत्या कर्म्मफलस्पृहाभावतया अपहतपाप्मत्त्वादिवत्तया च कर्म्मलेपासम्भवात् । तस्याश्च स्वनियम्यायाः स्वशक्तिरूपतया बंधकत्वासम्भवाच्च । अनीशो जीवस्तु कर्मफलभोक्तृत्वाभिमानेन तया बद्ध्यते यदा तु "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तक" इत्यादि भारतस्मृतेर्जन्मसमये भगवत्कृपाकटाक्षावलोकितत्वेन जन्मत एव सात्त्विक धृतिबुद्ध्यादियुक्तसात्त्विको भूत्वा मुमुक्षुः स्यात सत्याञ्च मुमुक्षायां सत्सम्प्रदायनिष्ठं सद्गुरुं शरणं प्रपद्य तत्साधने निष्कामकर्मज्ञानादौ यतते ततः कर्म्मज्ञानादि साधनेनाराधितः श्रीपुरुषोत्तमः प्रसीदति तदा देवं दीव्यति क्रीडति विश्वसर्गादिभिरिति विश्वजन्मादिहेतुं असु-

शान् विजिगीषते इति तं स्वभक्तत्रातारं सर्व्वभूतेष्वन्तर्य्यामितया व्यवहरतीति सर्व्वान्तर्य्यामिणं द्योतते इति स्वयम्प्रकाशं स्तूयते इति तं सर्वैः स्तुत्यं सर्वत्र गच्छतीति सर्व्वगतं सर्वज्ञं सर्वव्यापकञ्च । मोदयते इति स्वभक्तमोदकं देवशब्दवाच्यं तमेव श्रीपुरुषोत्तमं ज्ञात्वा साक्षादनुभूय सर्व्वपाशैः कर्म्मक्लेशविपाकाद्यैर्मुच्यते सर्व्वकर्मध्वंसाभावपूर्व्वकसमस्तनिःशेषाविद्यानिवृत्त्या परिपूर्णयावदात्मभावि ब्रह्मस्वरूपगुणादिविषयकानुभूतिसन्ततिं मुक्तिम्प्राप्नोतीत्यर्थः ॥ ८ ॥

जीवेशयोः परस्परं वैलक्षण्यमेव विशदयति—

**ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।**
**अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥९॥**

ज्ञाज्ञाविति । द्वयोर्मध्ये परमात्मा ज्ञः सर्व्वज्ञ अतएवेशश्च । जीवस्त्वज्ञोऽनीशश्च । अजत्वमुत्पत्तिराहित्यं तु द्वयोरविशिष्टं ईशनीशाविति छान्दसो ह्रस्वः । भोक्तुर्जीवस्य भोगप्रयोजनयुक्ता अजा उत्पत्तिरहिता एका चिदन्या प्रकृतिरित्यर्थः । परमात्मनो जीवाद्यन्तर्यामित्वेन सर्वत्र वर्त्तमानत्वेऽपि प्रकृतिजीवभोगोपकरणवत् परमात्मभोगोपकरणं न भवतीत्याह । अनन्तश्चेति । अनन्तोऽनन्तगुणाश्रयः आत्माऽन्तर्य्यामी विश्वं रूपयतीति विश्वरूपो विश्वनिर्माता तथात्वेऽप्यसङ्गनिरपेक्षकर्त्तृत्वेनाकर्त्ता एवञ्च विश्वान्तर्यामिणोऽपि तस्यापहतपाप्मत्वाद्यनन्तकल्याणगुणाश्रयतयाऽगुणाश्रयतयाऽसङ्गतया निरपेक्षतया च जीववत्कर्मफलभोगाभिलाषपूर्व्वककर्त्तृत्वाभावान्न तद्भोगप्रयोजनत्वं प्रकृतेरित्यभिप्रायः । एतादृशवैलक्षण्यज्ञानस्य फलमाह— त्रयमिति । एतत्त्रयं जीवेशप्रकृतिरूपं परस्परविलक्षणतया यदा विन्दते लभते ध्यानेन विषयीकरोति तदा ब्रह्म भवति स्वस्वरूपानुभवपूर्व्वकं ब्रह्मस्वरूपमनुभवतीत्यर्थः ब्रह्ममितिमान्तत्वं छान्दसम् ॥ ९ ॥

**क्षरम्प्रधानममृताक्षरं हरः क्षरात्मानावीशते एव**

**एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्व मायानिवृत्तिः ॥ १० ॥**

संयुक्तमिति मन्त्रोक्तक्षराक्षरशब्दार्थं कथयन् तत्त्वत्रयपरस्पर-वैलक्षण्यज्ञानेन मुक्त्यङ्गीकारे मनननिदिध्यासनयोर्वैयर्थ्यं स्यादित्या-शङ्काञ्च शमयन्नाह—क्षरमिति । प्रधानं प्रकृतिः क्षरं नश्वरमित्यु-च्यते भोग्यपदार्थमात्मनो भोगार्थं हरतीति हरो जीवः । अमृतं मरणशून्यञ्च तत् न क्षरतीत्यक्षरं चेत्यमृताक्षरमित्युच्यते क्षरात्मानौ प्रकृतिपुरुषौ एको मुख्यः देवशब्दोक्तः परमात्मा ईशते ईष्टे 'तस्येति' अभिध्यानं तल्लीलासंशीलनं योजनं योगो भक्तियोगः तत्त्वभावस्त-त्त्वत्रयमनननिदिध्यासनरूपोज्ञानयोग एतेभ्यो हेतुभ्यः अन्ते चरम-शरीरावसाने भूयः विश्वमायानिवृत्तिः सम्पूर्णप्रकृतिसम्बन्धनिवृत्ति-र्भवतीत्यर्थः । एवञ्च त्रयं यो विन्दते ब्रह्ममेतदिति मन्त्रेणोपासनाकाली-नब्रह्मानुभवरूपा मुक्तिरभिधीयते इत्युक्तम् ॥ १० ॥

**ज्ञात्वा देवं सर्व्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्यु-प्रहाणिः । तस्याभिध्यानात्तृतीयदेहभेदे विश्वैश्वर्य्यं केवल आप्तकाम ः॥ ११ ॥**

ज्ञानसाध्यमुक्तिक्रममाह—

ज्ञात्वेति । देवमुक्तार्थं देवशब्दवाच्यं परमात्मानं ज्ञात्वा ज्ञानेन-विषयीकृत्य पाश्यते बध्यतेऽनेनेति कर्म्मात्मिकाविद्या तत्कार्य्यराग-द्वेषादिलक्षणसंसारहेतुस्तस्य सर्वस्यापि पूर्व्वोत्तरस्यापहानिरश्लेष-विनाशौ भवतः । 'तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ' इति ब्रह्मसूत्रे ४।१।१३ तथैवोक्तेः । क्षीणैः क्लेशैः क्लेशसाधनदेहेन्द्रियादिभिः सहजन्ममृत्युप्रापकारब्धकर्म्मणां प्रकृष्टाहानिर्भवति । 'साम्पराये तर्त्त व्याभावात्' ब्र० सू० ३।३।२७ इति सूत्रे तथाऽभ्युपगमात् । 'यस्येति' तस्य परमात्मनः आभिमुख्येन ध्यानादनेकजन्मानुष्ठिततत्स्वरूपगुणलीला-ऽनुचिन्तनात् स्वर्गाद्यैश्वर्यापेक्षया तृतीयमपहतपाप्मत्वादिलक्षणं विश्वा-

तिशायि ऐश्वर्यं तु प्राकृतदेहभिन्नाप्राकृतशुद्धभागवतदेहभेदे एव भवति केवलः प्रकृतिसम्बन्धविनिर्मुक्तः सन् देशविशेषशिष्टं परम्ब्रह्म प्राप्य आप्तकामः प्राप्तसमस्तकामो भवति न प्रकृति-मण्डल इत्यर्थः ॥ ११ ॥

**एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् । भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वम्प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥**

एतदिति । आत्मन्यन्तर्यामितया संस्थितं नित्यमेतत्परं ब्रह्म ज्ञेयं ज्ञातव्यं अतः परब्रह्मणः परं किञ्चिदपि ज्ञातव्यं नास्ति। भोक्ता जीवः भोग्यम्प्रकृतिः प्रेरिता परमात्मा एतत्त्रिविधं प्रोक्तं सर्व्वं मत्वा ज्ञात्वा ब्रह्म भवति । ध्वस्तघटावरणासङ्कुचितप्रकाशदीपवत् निवृत्तमायावरणासङ्कुचितबृहद्ज्ञानविशिष्टो मुक्तो भवतीत्यर्थः प्रेरितारमिति द्वितीयान्तं ब्रह्ममिति मान्तत्वं च छान्दसम् ॥ १२ ॥

**वह्नेर्यथा योनिगतस्य मूर्त्तिर्न दृश्यते नैव च लिङ्गनाशः । स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥**

आत्मसंस्थमित्युक्तस्य सर्व्वान्तर्यामिणो गूढतया सर्वत्र विद्यमानत्वेऽपि प्रत्यक्षादिनाऽगृह्यमाणत्वादविद्यमानत्वशङ्कां वह्निदृष्टान्तेन परिहरति—वह्नेरिति । यथा वह्नेर्योनौ गतस्यारण्यादीन्धने विद्यमानस्यापि मूर्त्तिः स्वरूपं प्रत्यक्षतया न दृश्यते तर्ह्यविद्यमानत्वमेव किमिति नाङ्गीक्रियते तत्राह—नैव च लिङ्गनाश इति । काष्ठादौ वह्निसद्भावे लिङ्गस्य हेतुत्वात् तस्य च विद्यमानत्वात् किं तत्र लिङ्गमिति चेत मथने धूमोपलम्भनमित्यवेहि द्वयोः सत्त्वेऽपि मथनकर्म्मत्वं कस्येति चेद्वन्हिजननशक्तिमत्त्वात्काष्ठस्यैवेति जानीहि तथा प्रलयादौ सूक्ष्मशक्तिरूपेण कारणे स्थितस्य कार्यस्य कारणात्मना सदिति श्रुति-शतैः प्रतिपादितं तथा शक्तिसन्बन्धेन वह्निसद्भावस्य तत्रेष्टत्वात् स भूय इति स एव काष्ठे सूक्ष्मरूपेण विद्यमान एव

वह्निर्भूयो मथनादिन्धनमेव योनिस्तत्र गृह्यते उपलभ्यते एतेनासत्कार्य-वादिनो निरस्ताः तद्वेति वा शब्द उपमार्थः तद्वत्प्रणवरूपसाधनेन देहे यस्यात्मा शरीरमित्यादिश्रुत्युदितपरमात्मशरीरभूते जीवे शोध्यमाने सति उभयं ब्रह्म तल्लिङ्गञ्च लभते प्रागप्रतीतस्याप्यन्तर्यामिणः सूक्ष्म-निचोलान्तर्गतमणिवत् प्रेरकत्वकर्म्मफलपातृत्वादिलिङ्गेन तदन्तर्गत-स्योपलब्धिर्भवतीत्यर्थः ॥ १३ ॥

उपलब्धिप्रकारमेवाह—

**आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्यान-निर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ १४ ॥**

आत्मानमिति । स्वात्मानमधारणिं प्रणवञ्चोत्तरारणिं कृत्वा प्रणवेन स्वात्मानं ध्यात्वेत्यर्थः, तत्र स्वात्मनि ध्यानं तस्य स्वप्रयोजक-त्वकर्म्मफलदातृत्वान्तर्यामित्वादिचिन्तनमेव निर्मथनं तस्याभ्यासात् देवं द्योतनस्वभावं गूढवत् पित्रादिनिहितनिधिवत् स्थितं पश्येज्जानीया-दुपलभते इत्यर्थः ॥ १४ ॥

**तिलेषु तैलं दधिनीव सर्पिरापः स्रोतःस्वरणिषु चाग्निः । एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५**

तदेव विस्तारयति—तिलेष्विति । तिलादिषु स्थितं तैलादिकं यथा यन्त्रनिष्पीडनाद्युपायेन गृह्यते एवमसौ आत्मा स्वात्मनि यः सत्य-तपोलक्षणोपायेनैनमनुपश्यति तेन गृह्यते ॥ १५ ॥

**सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् । आत्मविद्या-तपोमूलं तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परम् ॥ १६ ॥**

प्रकरणार्थमुपसंहरति—

सर्वव्यापिनमिति । क्षीरेऽर्पितं व्याप्तं सर्पिरिव "यच्च किञ्चि-ज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्व्वं व्याप्य नारा-यणः स्थितः" इत्यादिश्रुत्यन्तरात्सर्वं व्याप्नुं शीलमस्येति तं आत्मानं

परमात्मानं आत्मविद्या त्वम्पदज्ञानं तपः मनसश्चेन्द्रियाणाञ्च स्वै-कामय परमं तप इत्युक्तम् ते मूले अभिव्यञ्जके यस्य तं तत् तत्पदार्थभूतं ब्रह्म स्वरूपेण गुणैश्च बृहत्तमं उपनिषदा परं परमप्रतिपाद्यं विद्यादित्यर्थः । द्विरुक्तिरादरार्थाऽध्यायसमाप्तिद्योतनार्था च ॥१६॥

इति श्वेताश्वतरोपनिषदि प्रथमोऽध्यायः ॥१॥

---

**युञ्जानः प्रथमं मनस्तत्वाय सविता धियः अग्निर्ज्योति-निचाय्य। पृथिव्योअध्या भवत् युक्तेन मनसा वयं देवस्य सवितुः सवे सुवर्गोपायशक्त्या ॥ १ ॥**

आत्मगतपरमात्मप्रतीत्युपयोगीन्द्रियनिग्रहरूपतपः सिद्धे फलक-परमात्मप्रार्थनामन्त्रमाह—युञ्जान इति । धियः धीशब्दोपलक्षितसर्वे-न्द्रियाणां सविता प्रेरकः परमात्मा पृथिव्या अधि ऊर्द्ध्वंअग्निरूपं ज्योतिर्निचाय्य पूजयित्वा अग्निसाध्ययागादिकं कारयित्वा तत्त्वाय स्वसाक्षात्काराय प्रथमं स्वस्मिन्नस्मदीयं मनो युञ्जानः नियोजयिता भवत् । भवतु भरदितिपाठे भरतु धारयिता स्वप्रवणं करोत्वित्यर्थः ततो देवस्य स्वभक्तहर्षकस्य सवितुः प्रेरकस्य सवे अनुज्ञायां सत्यां अनुज्ञयेतियावत् युक्तेन परमात्मप्रवणेन मनसा चेतसा युक्ता वयं सुवर्गोपाय 'सुवर्' शब्दवाच्यनिरतिशयानन्दयुक्तभग-वल्लोकसाधनाय श्रवणादिकर्मणे शक्त्या परमात्मप्रसादलब्धबलेन युक्ता भवेमेति शेषः ॥ १ ॥

**युक्त्याय मनसा देवान् सुवर्यतो धिया दिवं बृहज्ज्योतिः करिष्यतः सविता प्रसुवति तान् युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः विहोत्रा दधे वयुना विदेक-उत्मही देवस्य सवितुः परिष्टुतिः ॥२॥**

भगवतोऽनुज्ञादाने द्वारमाह—

युक्त्वायेति । सुवर्शब्दवाच्यं निरतिशयानन्दयुक्तं भगवल्लोकं

यतो गच्छतः देवान् द्योतनस्वभावान् आचार्यान्मनसा युत्काय युत्का छन्दसि त्को यत् प्रणम्यत्यर्थः दिवं द्योतनस्वभावं निरतिशयबृहत्त्वा-वच्छिन्नं परमात्मरूपं ज्योतिः धियोपासनात्मकज्ञानेन विषयीकरिष्यतः ध्यातुं प्रवृत्तान् तान्मुमुक्षून सविता परमात्मा प्रसुवाति अनुजानाति अनुगृह्णातीत्यर्थः अतो विवेकिनस्तत्प्रवणमेव मनः कुर्वन्तीत्याह—युञ्जत इति। विप्रा विवेकिनः परमात्मन्येव मनो युञ्जते योजयन्ति उत अपि धियो ज्ञानेन्द्रियाण्यपि युञ्जते विषयान्तरेभ्य आकृष्य तत्प्रवणं कुर्वन्तीत्यर्थः।

विप्रस्य परिपूर्णस्य 'प्रा पूरणे' धातुः बृहद्गुणाश्रयस्य विपश्चितः सर्वज्ञस्य मही भूमिरुपलक्षकेयं श्रीलीलयोरपि श्रीभूलीलासहितस्य देवस्य सवितुः परमात्मनः वयुना वित् वयुनं ज्ञानं सर्वज्ञत्वादिमहिमा तद्वित दीघश्छान्दसः उत एव एकः परिष्टुतिः ह्रस्वश्छान्दसः परिष्टुतीः परिचरणार्हाः क्रियाः होता ऋत्विग्भिर्मन्त्रेण च विदधे चकारेति योजना। एवञ्च भगवतः स्वरूपगुणलीलादि महिमसंज्ञानस्यैव सम्यक्प्रीतिहेतुत्वात्तज्ज्ञाने मुमुक्षुभिर्यतितव्यमिति भावः॥ २॥

**युञ्जे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरैः। शृण्वन्तु विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुः॥ ३॥**

कश्चन मुमुक्षुः पूर्व्वेषां मुक्तानां मार्गमनुसरन् तत्प्रार्थनापूर्व्वकं योगप्रवृत्तेः पूर्वकमन्येषामप्युपदिशन्नाह—युञ्जे इति। हे अमृतस्य ब्रह्मणः परमात्मनः पुत्राः पुत्रवत्परिपाल्याः मुक्ता इति यावत ये दिव्यानि धामानि स्थानानि आतस्थुस्ते विश्वे सर्व्वे शृण्वन्तु मत्प्रार्थनामिति शेषः। वामिति वचनव्यत्ययश्छान्दसः। वो युष्माभिः पूर्वं ब्रह्म यथा प्राप्तं तथाऽहमपि युञ्जे ब्रह्मप्राप्तये मनः समादधे सूरैः पथ्येव पथादनपेता पथ्या सूरिकर्त्तृका स्तुतिविश्लोकः विविधः श्लोकः स्तोत्रादिरूपः नमोभिर्नमस्कारैः सह ब्रह्म एतु

प्राप्नोतु मुक्तस्तुतिं परमात्मा यथा गृह्णाति तथा मत्स्तुतिमप्यङ्गीकरोत्वित्यर्थः ॥ ३ ॥

**अग्निर्यत्राभिमथ्यते वायुर्यत्राभिरुध्यते । सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः ॥४॥**

एवं योगप्रवर्त्तनात्पूर्वं परमात्मस्तुतिः कर्त्तव्येत्युपदिश्य योगमारभमाणेन शीतोष्णदेशोऽपि त्याज्य इत्याह—अग्निरिति । यत्राग्निरभितो मथ्यते निवार्यते, वायुर्यत्र अधि अधिकं रुद्धयते आत्रियते न वाति, यत्र सोमो हिमं अतिरिच्यते अतिशयेन निरस्यते तत्र मनो ध्येयप्रवणं सम्यक् जायते इत्यर्थः ॥४॥

**सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यं तत्र योनिं कृणवसे न हि ते पूर्त्तिमक्षिपत् ॥ ५ ॥**

एवमाचार्य्यप्रणतिभगवत्स्तुतिपूर्वकं प्रवृत्तस्य ध्येयं वस्तु आह—सवित्रेति । गुरुप्रणत्यादिप्रसन्नेन सवित्रा परमात्मना कृतेन प्रसवेनानुज्ञया योगे प्रवृत्तः पूर्व्यं पूर्वकालेऽनुज्ञाकृती ब्रह्म जुषेत् सेवेत ध्यायेदित्यर्थः । तत्र ब्रह्मणि योनिं मनसः स्थानं कृणवसे कुरुष्व, हि यस्मात् तद्ब्रह्म ते मुमुक्षोः पूर्त्तिं मनोरथपूरणं न अक्षिपत क्षिपति न निरस्यतीत्यर्थः । लङ् लडर्थे ॥ ५ ॥

**त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्व्वाणि भयावहानि ॥६॥**

पद्मासनादीनामन्यतमासनं परिगृह्य शरीरस्थापनप्रकारकथनपूर्वकं प्रत्याहारं कथयन् प्रणवाश्रयणेन संसाराब्धितरणमाह—

त्रिरिति । उरोग्रीवाशिरोङ्गेषून्नतमन्यत्र समं शरीरं स्थाप्य हृदि हृदये इन्द्रियकुहरे इन्द्रियाणि सर्वाणि मनसा सन्निवेश्य सम्यक् निवेशयित्वा नियम्य ब्रह्मोडुपेन प्रणवरूपप्लवेन प्रणवस्वरूपतत्प्रतिपाद्य

परमात्मस्वरूपञ्च विद्वान् यद्वा ब्रह्मरूपेण सवेन परमात्मसहायेनेति यावत स्रोतांसि सुरनरादिनानायोनिषु जन्मप्रवाहरूपाणि सर्व्वाणि भयावहानि दुःखप्रदातृणि प्रतरेदित्यर्थः ॥ ६ ॥

**प्राणान्प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत। दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताप्रमत्तः ॥ ७ ॥**

प्राणायामप्रकारमाह—प्राणानिति। इह योगकाले युक्तचेष्टः युक्ता योगाविरोधिनी योगप्रवणा चेष्टा यस्य स प्राणान्प्रपीड्य निरुद्ध्य कुम्भकं कृत्वा क्षीणे निरुद्धे प्राणे पीडापरिहाराय नासिकया नासापुटेनोच्छ्वसीत रेचनं कुर्यात्। ततश्चाप्रमत्तः सन् एनं मनोनिरोधप्रकारं विद्वान् दुष्टैरदान्तैरश्वैर्युक्तं वाहं रथं कुशलः सारथिरिव मनो धारयेत स्ववशं कुर्यादित्यर्थः ॥ ७ ॥

**समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः। मनोऽनुकूले न तु चक्षुपीड़ने गुहानिवाताश्रयेण प्रयोजयेत् ॥ ८ ॥**

योगानुष्ठानोपयोगिदेशमाह—सम इति। निम्नोन्नतभावरहिते शुचौ शुद्धे शर्कराभिः क्षुद्रपाषाणैः वह्निना सिकताभिश्च विवर्जिते शब्दैः प्राणिकर्त्तृकवाद्यादिनिमित्तदोषैः जलाश्रयैरत्यन्तसमीपस्थैः आदिना मण्डपादिभिश्च विवर्जिते मनोऽनुकूले मनःप्रसक्तिजनके चक्षुःपीडाहेतुभूतोष्णत्वादिरहिते, चक्षु इत्यत्र विसर्गलोपश्छान्दसः। एवम्भूते देशे गुहानिवाताश्रयेण गुहादिलक्षणनिवातस्थानमाश्रित्य प्रयोजयेत् योगमनुतिष्ठेदिति यावत्। अत्र समे शुचावित्यादिविशेषणैकाग्रतानुकूलदेशविशेषाङ्गकीर्त्तनेन निश्चलत्वासीनत्वादिकमप्यपेक्षितमस्तीत्यवसीयते, सूत्रितञ्च भगवता बादरायणेन "यत्रैकाग्रता तत्राविशेषात् आसीनसम्भवात अचलत्वञ्चापेक्ष्यमिति ॥ ८ ॥

**नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशी-**

नाम् । एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ९ ॥

योगमभ्यस्यमानस्य तत्सिद्धिलक्षणमाह--

नीहारेति । नीहारस्तुषारस्तद्वत् प्रथमतः स्फुरति तत उत्तरोत्तरं धूमार्काद्याकारतया स्फुरति । एतानि रूपाणि स्फुरणानि पुरःसराणि पूर्वप्रवृत्तानि प्राप्स्यमानब्रह्माभिव्यक्तिकराणि योगे प्रवृत्तस्य योगिनश्चित्ते आविर्भवन्तीत्यर्थः ॥ ९ ॥

पृथिव्याप्यतेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ १० ॥

योगाभ्यासवतः कार्यसिद्धिमाह—पृथ्वीति । पृथिवी आप्यं आपः तेजः अनिल एतानि कारणतया विद्यन्ते यस्मिंस्तस्मिन् अतएव पञ्चात्मके पाञ्चभौतिके समुत्थिते सम्यक् नीरोगवत्तया उत्कर्षेण स्थिते शरीरे योगगुणे गुणोगुणनं अभ्यासः योगाभ्यासे प्रवृत्ते सति अतएव योगरूपाग्निप्रचुरं शरीरं प्राप्तस्य तस्य योगिनो रोगादिनाशं भवतीत्यर्थः ॥ १० ॥

लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादः स्वरसौष्ठवञ्च । गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ ११ ॥

लघुत्वमिति । यदा योगे प्रवृत्तस्य योगिनः शरीरे लघुत्वादि दृश्यते तदा योगसिद्धिसूचिकां प्रथमां योगप्रवृत्तिं वदन्ति योगशास्त्रविद इति शेषः ॥ ११ ॥

यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधातं तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थोभवते वीतशोकः ॥ १२

योगाभ्यासवतो ब्रह्मोपलब्धिप्रकारं तत्फलञ्चाह--

यथैवेति । तेजोमयं बिम्बं प्रतिमाविशेषः मृदया मृजया जस्य

दृश्छान्दसः। शुद्धिसाधनद्रव्येणोपलिप्तं सुधातं सुधातञ्च सत तत् भ्राजते दीप्यते तद्वा तद्वत् योगाभ्यासरूपशुद्धिहेतुना शुद्धान्तःकरणः सन् भ्राजमानः एकः कश्चित् देही पुरुषधौरेयः आत्मनस्त्वम्पदार्थस्य तत्त्वं यथार्थस्वरूपम्प्रसमीक्ष्य ध्यानेनोपलभ्य वीतशोको निवृत्तसंसारगन्धः कृतार्थः सिद्धार्थो भवते भवतीत्यर्थः। तद्वत्सतत्त्वमिति पाठेऽप्ययमेवार्थः॥ १२॥

त्वम्पदार्थज्ञानोत्तरभावितत्पदार्थज्ञानेन सर्वबन्धनिवृत्तिं दर्शयति—

**यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्।**
**अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥१३॥**

यदेति। यदा युक्तो योगी इह शरीरे दीपोपमेन दीपवत्प्रकाशमानेन परमात्मनः प्रतीत्युपायभूतेन आत्मतत्त्वेन प्रत्यगात्मना हेतुना अन्तर्यामितया तत्स्थं ब्रह्मतत्त्वं सूक्ष्मवस्त्रान्तरितमाणिक्यवत् प्रपश्येत् ध्यानेनानुभवेत तदेव तु शब्द एवार्थः। अजमजन्मानं ध्रुवं नित्यं सर्वतत्त्वैः सर्वतत्त्वात्मकवस्त्रभूषणैरुपेतं विशुद्धं शुद्ध्यनपेक्षं सदा शुद्धमिति यावत् देवशब्दवाच्यपरमात्मानं ज्ञात्वा साक्षादनुभूय सर्वैः पाशशब्दिताविद्यात्मककर्म्माद्यैर्बन्धैर्मुच्यत इत्यर्थः॥१३॥

परमात्मनः सर्व्वान्तर्यामितया सर्वात्मत्वमाह—

**एषो ह देवः प्रदिशो नु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः॥ १४॥**

एषो हेति। हे जना मुनयः नु निश्चितं सर्वाः प्रदिशः पूर्वाद्या दिशस्तद्वर्त्तिपदार्थाश्च एष ह एवार्थे देवशब्दोक्तः परमात्मैव तस्य सर्वात्मत्वेन सर्वशब्दवाच्यत्वात् पूर्वो ह जातः ह अप्यर्थे कल्पादौ सर्वेभ्यः पूर्वः प्रथमः। हिरण्यगर्भरूपेणोत्पन्नोऽपि एष एव गर्भे अन्तः स उ स एव जातो जनिष्यमाणश्च स एव अतएव सर्वतोमुखश्चेतनाचेतनवाची सर्वशब्दवाच्यः सन् तिष्ठति सर्वत्र प्रव-

र्त्तते कथमेकस्य सर्वात्मत्वं तत्राह—प्रत्यगिति। अहमर्थतया भासमानत्वं प्रत्यक्त्वं, वामदेवादीनामात्माऽहमिति प्रतीतौ परमात्मनोऽपि भासमानत्वेन तस्य सर्वान्प्रत्यक्त्वात् आत्मत्वमप्युपपन्नमिति भावः। अस्मदाद्यहंबुद्धौ च दोषवशादभासमानत्वेऽपि योग्यत्वसत्त्वान्न दूषणमिति ॥ १४ ॥

**यो देवोऽग्नौ यो अप्सु यो विश्वम्भुवनमाविवेश। य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥१५॥**

इति श्वेताश्वतरोपनिषदि द्वितीयोऽध्यायः ॥२॥

---

तदेव प्रदर्शयति—

योदेव इति। यः देवः परमात्माऽग्नौ अग्निशब्दवाच्ये अन्तर्यामितया आविवेश न स्वरूपेण एवमग्रेऽपि योजनीयं तस्मै सर्वान्तर्यामितया सर्वात्मने देवाय सर्वस्तुत्याय नमो नमः नमस्काराऽस्तु। द्विरुक्तिरध्यायसमाप्त्यर्थाऽऽदरार्था च ॥ १५ ॥

इति श्वेताश्वतरोपनिषदि द्वितीयोध्यायः ॥२॥

---

**य एको जालवानीशत ईशनीभिः सर्व्वांल्लोकानीशत ईशनीभिः। य एवैक उद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥**

परमात्मान एव मुख्यत्वं सर्वजगदुत्पत्तिस्थितिलयमोक्षकारणत्वं सर्वनियन्तृत्वं तज्ज्ञानस्य फलञ्चाह—

य एक इति। य एको मुख्यः परमात्मा जालवान् जालशब्दितजडात्मकप्रकृतिवागुरायुक्तः ईशनीभिरीशनसमर्थाभिर्ज्ञानशक्तिक्रियाशक्तिभिर्मृगस्थानीयान्मायाजालगोचरान्प्राकृतांल्लोकान्सर्व्वानीशते ईष्टे। यश्च उद्भवे जगत उद्भवनमुत्पत्तिस्तत्र उपलक्षणञ्चैतत्स्थितिप्रलययोरपि सम्भवे सम्यक् भवनं प्राप्तिस्तत्र निःशेषाऽविद्यानिवृत्तिपूर्वक·

परमात्मसाक्षात्काररूपमोक्षाऽवस्थायामिति यावत् इष्टे ये एतत्परमात्मनः सर्वावस्थायां सर्वेशितृत्वं जगदुत्पत्त्यादिकर्तृत्वं विदुस्ते अमृता मरणशून्या मुक्ता भवन्तीत्यर्थः ॥ १ ॥

**एको हि रुद्रो न द्वितीयाय तस्थुर्य इमांल्लोकानीशत ईशनीभिः । प्रत्यङ् जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥**

यद्यपि ब्रह्मादीनामपि लोकेशत्वकारणत्वेन प्रसिद्धिरस्ति तथाऽपि तेषां तज्जन्यत्वात्तत्पारतन्त्र्यात्तद्दत्तैश्वर्य्यवत्त्वाच्च तस्यैव स्वातन्त्र्येणेशितृत्वादिति दर्शयन्पूर्वमन्त्रार्थमेव प्रपञ्चयति—

एको हीति । स्वभक्तसंसाररुजं द्रावयति अभक्तान्रोदयति नरकादिपातेनेति रुद्रः संसारमोचकः परमात्मा एकः हि एव विश्वा विश्वानि सर्वाणि भुवनानि संसृज्य सृष्ट्वा गोपाः रक्षिता सन् अन्तकाले सञ्चुकोचसंहृतवान्, तस्य द्वितीयाय द्वितीयत्वाय साहाय्याय केऽपि न तस्थुः न तिष्ठन्ति स्म असहाय एव सर्वं कार्यं करोतीत्यर्थः । य इमानित्यादिव्याख्यातार्थम् ॥ २ ॥

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । स बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ३ ॥**

अनन्तचक्षुरनन्तमुखादियुक्तनित्यदिव्यविग्रहवानपि स एवेत्याह—

विश्वत इति । विश्वतः सर्वतः चक्षुर्यस्य सः अनन्तचक्षुरित्यर्थः अपि एवमुत्तत्रापि सर्वप्राणिनां करणादिसंयोजकोऽपि स एवेत्याह । स बाहुभ्यामिति । बाहुभ्यां पतत्रशब्दोक्तपद्भिश्च उपलक्षणञ्चैतत् सर्वेन्द्रियैः सर्वाञ्जीवान्संधमति संयोजयतीत्यर्थः । क्रियावाचित्वमाख्यातुमेकोऽर्थः प्रदर्शितः प्रयोगतोऽनुसर्त्तव्या 'अनेकार्था हि धातव' इत्युक्तेः । द्यावेति देवः क्रीडकः परमात्मा द्यावाभूम्युपलक्षित-

सर्वलोकतदन्तर्वर्त्तिसर्व्वपदार्थान् जनयन् उत्पादयन् संधमतीति पूर्वे-णैव सम्बन्धः ॥ ३ ॥

भगवतः सर्व्वप्राणीन्द्रियाधिष्ठातृदेवोत्पत्तिस्थानत्वं देवपतित्वा-दिपदवीप्रापकत्वञ्च कथयन् भगवतः स काशादेव सम्यक् ज्ञानप्रार्थन-ञ्चाह—य इति ।

**यो देवानाम्प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्व्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥**

यः परमात्मा देवानामिन्द्रादीनां प्रभवश्चोद्भवश्च प्रभवति उत्पत्तिस्थानं उत्कर्षेण भवते लभते देवपतित्वादिपदवीं यस्मात्स उद्भवः 'भू' प्राप्तावात्मनेपदी विश्वस्मादधिकः बृहत्तमः 'विष्टभ्याह-मिदं कृत्स्न मेकांशेने' ति भगवदुक्तेः, रुद्रः संसाररुग्द्रावकः महर्षिः निरतिशयसार्वज्ञ्यादियुक्तः यश्च पूर्व्वं देवसृष्टेः प्राक् हिरण्यगर्भं ब्रह्माणं जनयामास । यो ब्रह्माणं विदधाति पूर्व्वमि' ति वक्ष्यमाण-त्वात् 'नारायणाद् ब्रह्मा जायते तत्र ब्रह्मा चतुर्मुखो जायते' इत्यादि श्रुत्यन्तराच्च स भगवान्नोऽस्मान्मुमुक्षुन् शुभया परमात्मविषया बुद्ध्या ज्ञानेन संयुनक्तु संयोजयत्वित्यर्थः ॥ ४ ॥

दिव्यानन्तकल्याणगुणविशिष्टविग्रहतया परमात्मप्रकाशप्रार्थना-मन्त्रमाह—या ते इति ।

**या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्त-नुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥**

हे रुद्र संसाररुग्द्रावक 'द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमि' त्यादिश्रुतिप्रसिद्धा सुकुमारताद्यनन्तगुणविशिष्टा मेघश्यामा या ते सर्व्वनियन्तुस्तनूः मूर्तिः शिवा श्रेयस्करा अघोराऽभयङ्करा संसार-तापोपशमिका पापं कशितुं दग्धुं शीलमस्या इति पापकाशिनी स्वा-भिव्यक्त्या स्वभक्तानां सर्वपापदग्ध्री अपापं पुण्यं कशितुं प्रकाशयितुं

शीलमस्याइत्यपापकाशनीति वा पदच्छेदः । गिरौ कैलाशे शेते इति गिरिशस्त्रिनेत्रस्तं तनोतीति हे गिरिशंतरुद्रस्त्वष्टः तया शंतमया सुखकरया तनुवा तन्वा नोऽस्मान्मुक्षून् प्रति अभिचाकशीहि प्रकाशस्वेति ॥५॥

**यामिषुं गिरिशन्त हस्ते विभर्ष्यस्तवे शिवां । गिरित्र तां कुरुमाहिंसीः पुरुषं जगत् ॥ ६ ॥**

यामिषुमिति । हे गिरिशंत यामिषुं इषु शब्दःसर्वायुधोपलक्षणार्थःयद्यदायुधमित्यर्थः हस्ते विभर्षि शिवां श्रेयःकरां हे गिरित्र गिरिर्वेदशिरोभागस्तत्रत्रायते पाल्यते प्रतिपाद्यते इति हे वेदान्तप्रतिपाद्य तामिषुं अस्तवे असु क्षेपणे धातुः भगवत्प्राप्तिप्रतिवन्धकपापानि क्षेप्तुं कुरु जगत् संसारमार्गेवंभ्रम्यमाणं पुरुषं मुमुक्षुं मा हिंसीः संसारांधकूपपतितं मा कार्षि रितियावत् ॥ ६ ॥

एवम्भगवन्तम्प्रार्थ्य ततस्तत्प्रासादादेव तस्य यथावत्स्वरूपज्ञानेन मोक्षमाह—तत इति ।

**ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वा अमृता भवन्ति ॥ ७ ॥**

तत उक्तप्रकारप्रार्थनाप्रसन्नपरमात्मप्रसादानन्तरं परं नित्यानन्तज्ञानशक्त्यादिना परिपूर्णं बृहन्तं निरतिशयबृहत्त्वाश्रयं अत एव परंब्रह्म यथा निकायं सर्वभूतेषु गूढं ब्रह्मादिपिपीलिकान्तदेहानुरूपेण सर्वप्राणिष्वन्तर्यामितयाऽनुप्रविश्य वर्तमानं विश्वस्यैकं मुख्यं परिवेष्टितारं व्यापकं तमीशं सर्व्वनियन्तारं भगवन्तं ज्ञात्वा साक्षादनुभूय अमृता जन्ममरणशून्या मुक्ता भवन्तीत्यर्थः ॥७॥

पूर्व्वमन्त्रोक्तपरमात्मस्वरूपगुणादियाथात्म्यज्ञानस्यैव मोक्षहेतुत्वं परस्परं दृढयतामृषीणामनुभवमाह ।

**वेदाहमेतं पुरुषम्महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥८॥**

वेदेति । एतं पूर्व्वमन्त्रोक्तसमस्तजगज्जन्मादिकारणं परमात्मानमहं वेद जानामि । कीदृशम्पुरुषं पूरयति भक्तमनोरथमिति पुरुषु बहुषु प्राणिषु सीदति आत्मतां गच्छतीति वा पुरुषस्तं 'पूरणात्सदनाच्चैव ततोऽसौ पुरुषोमत' इतिस्मृतेः । अतएव महान्तं लोकोत्तरं आदित्यवर्णं निरतिशयौज्ज्वल्यादिगुणाश्रयदिव्यमङ्गलविग्रहयुक्तं तमसः प्रकृतिमण्डलस्य परस्तादुपरिस्थितं तमेव महान्तम्पुरुषं विदित्वा ज्ञात्वा उपास्य मृत्युं संसारम अति अतिक्रम्य एति परपदं गच्छतीत्यर्थः। अन्यः परमपुरुषज्ञानादन्यः पन्था मार्गोऽयनाय तत्प्राप्तये न विद्यत इति ॥८॥

'ननु तरति शोकमात्मविदि'ति श्रुतेरात्मज्ञानस्यैव मोक्षहेतुत्वकथनात्कथमादित्यवर्णपुरुषविग्रहज्ञानस्य मोक्षहेतुत्वमित्याशङ्क्य तस्य व्यापकत्वादात्मत्वमपि तस्यैवेत्याह ।

**यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो नज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥**

यस्मादिति । अत्र परशब्द उत्कृष्टवचनः, अपरशब्दोऽन्यवचनः यस्मादपरमन्यत् परमुत्कृष्टं नास्तीत्यर्थः । न तत्समश्चाभ्यधिकश्च दृश्यते' । 'नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति श्रुतिस्मृतिभ्यां नात्र परापरयोर्द्वयोरपि निषेधस्तथा सति नञ आवृत्तिप्रसङ्गात् यस्मात् अति सूक्ष्ममन्तः प्रवेशयोग्यं वस्तु नास्ति ज्यायः अधिकमिति विवृद्धञ्च किमपि नास्ति अस्यैव सर्वव्यापित्वात्सर्वेश्वरत्वादित्यर्थः । कश्चिदिति लिङ्गव्यत्ययश्छान्दसः । वृक्ष इव स्तब्ध इति यश्चानन्तव्यवस्त्वभावाद्वृक्ष इवाप्रणतस्वभावः । एको मुख्यः सन् दिवि परपदे तिष्ठति आस्ते तेन नियमनार्थमन्तः प्रविष्टेनेदं सर्व्वं पूर्णं व्याप्तमित्यर्थः ॥९॥

एवं ततः परं ब्रह्मेत्यादिना परस्य ब्रह्मणो भगवतो वेदनमेव मोक्षसाधनमित्युक्त्वा यस्मात्परमित्यनेन च दृढीकृत्वा तदेव ततो निगमयन्नुपसंहरति ।

**ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ॥१०॥**

तत इति । यस्मात्पुरुषापेक्षयोत्कृष्टं समं वा नास्ति ततो हेतोर्यदुत्तरतरं प्रकृष्टतरं यद्वा तत इति तेनेदम्पूर्णं पुरुषेण सर्वमित्यत्रोक्तात्सर्व्वशब्दवाच्याज्जगतो यदुत्तरतरमित्यन्वयः अस्मिन्पक्षे तत इति दिक्शब्दयोगे पञ्चमी, पुरुषतत्त्वं तदेवारूपं कर्मकृतरूपरहितं अनामयं कर्म कृत्वाऽमयशब्दोक्तदुःखरहितं च, ये एतत्पुरुषत्वं विदुस्ते अमृता जन्ममरणरहिता भवन्ति । अथेति पक्षान्तरे, ये एतत्परमात्मतत्त्वं नाश्रयन्ति ते इतरे दुखमेव अपि निश्चयेन यन्ति प्राप्नुवन्ति, न सुखलेशमपीत्यर्थः ॥१०॥

पुरुषस्य सर्व्वव्यापित्वात्सर्वशरीरसम्बन्धत्वेऽपि हेयसम्बन्धराहित्यमाह—

**सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः । सर्व्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥११॥**

सर्वाननेति । सर्व्वेषामाननानि शिरांसि ग्रीवाश्च यस्यैव सः ब्रह्मादिकीटपर्य्यन्तेष्वन्तर्यामितया स्थितिसत्वेन तत्च्छरीराणां तद्गताननादीनाञ्च तदीयत्वात् यद्वा सर्व्वाण्यनन्तान्याननानि शिरांसि ग्रीवाश्च यस्य सः सर्वाननशिरोग्रीवः, सर्वशब्द आनन्त्यवचनः । सर्वभूतानां गुहायां हृदयबिले शेते इति सर्वभूतगुहाशयः सर्व्वं व्याप्तुं शीलमस्येति सर्वव्यापी, 'ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तैश्वर्य्यादिशब्दः, "ज्ञानशक्तिबलैश्वर्यतेजोवीर्य्याण्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरि" त्युक्तज्ञानादिषट्को वा 'भगो' विद्यते यस्य स भगवान् यतो भगवान् तस्मात्सर्व्वगतोऽपि शिवः शुद्धः तत्तच्छरीरगतसम्बन्धरहित इति भावः ॥११॥

पूर्वोक्तज्ञानस्यैव मोक्षहेतुत्वं दृढीकरोति—

**महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः । सुनिर्म्मलामिमां शान्तिमीशानो ज्योतिरव्ययः ॥१२॥**

महानिति । 'वै' नियोगे, महान्पुरुष एव फलदाने प्रभुः समर्थः यतः सत्त्वस्यैष प्रवर्त्तक इति सत्त्वस्य मोक्षार्थज्ञानहेतुसत्त्वगुणस्य जन्मसमये स्वकटाक्षेण प्रवर्त्तकः, एष पुरुषः ज्योतिः सूर्य्यादिप्रकाशकोऽव्ययो भगवान् सुनिर्म्मलामज्ञानादिमलरहितामिमां मोक्षरूपां शान्तिं जन्ममरणाद्युपशमरूपामीशान ईष्टे मोक्षप्रद इत्यर्थः ॥१२॥

ज्ञानसाधनं कथयन्नुपासनार्थं भगवतो हृदयगुहानिहितत्वनिबन्धनाङ्गुष्ठपरिमाणत्वमाह —

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥१३॥**

अङ्गुष्ठमात्र इति । अङ्गुष्ठेन तत्परिमितहृदयेन मीयत इति अङ्गुष्ठमात्रः पुरुषः पूर्णः जनानां हृदये सदान्तरात्मा सन्सन्निविष्टः सम्यक् स्थितः हृदा भक्त्या मनीषा धृत्या एकाग्रेण मनसा चाभिक्लृप्तो ग्राह्यः । य एतदिति व्याख्यातार्थम् ॥१३॥

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥१४॥**

अङ्गुष्ठमात्रशब्देन प्राप्तपरिच्छेदभ्रमं निरस्यति—सहस्रशीर्षेति । सहस्रशब्द आनन्त्यपरः, "शतं सहस्रमयुतं सर्व्वमानन्त्यवाचकम्" इत्युक्तेः । सहस्राण्यनन्तानि शिरांसि यस्य सः, शीर्षन् छन्दसीति शिरसः शीर्षणादेशः शिरःस्थितश्रोत्रत्वकचक्षुर्जिह्वाघ्राणेन्द्रियाणामपि सहस्रशब्देनानन्त्यं लक्ष्यते । एवञ्च ज्ञानशक्तयोरानन्त्यं फलितमित्याह । सहस्राक्षः सहस्रपादिति, अक्षशब्देन ज्ञानेन्द्रियाणि पादशब्देन कर्म्मेन्द्रियाण्युपलक्ष्यन्ते । एवञ्च सहस्राक्ष इत्यनेन ज्ञानस्य सहस्रपादित्यनेन

शक्तेश्चानन्त्यमुक्तम्भवति। पुरुष इति, पूर्वमेवाहमिहास मिति तत्पुरुषस्य पुरुषत्वमिति श्रुत्या सर्वजगत्कारणतया पूर्व्वं विद्यमानः स भगवान् विराटरूपी सन् भूमिं भूमिशब्दोपलक्षितं सकलपदार्थजातं विश्वतः सर्वतो वृत्वा व्याप्य दशाङ्गुलं अङ्गुलशब्दोऽवयववाची पञ्चभूतपञ्चतन्मात्ररूप दशावयवयुक्तं सकलं ब्रह्माण्डं अति अतिक्रम्य अतिष्ठत् परमपदे स्थित इत्यर्थः ॥१४॥

न केवलमाकाशादिवत्तस्य व्याप्तिः किन्तु तद्व्याप्यमिदं सर्व्वम्प्रपञ्चज तं तदात्मकमपीत्याह—

**पुरुष एवेदं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥१५॥**

पुरुष एवेति। इदञ्चेतनाचेतनरूपं सर्वं विश्वं पुरुष एव "अन्तः प्रविष्टः शास्ता जनानाम्' सर्वात्मेति नियन्तृतया सर्वं व्याप्य सर्वात्मत्वेनावस्थात्तस्य सर्वशब्दाभिधेयत्वम् अयम्भावः। सामान्यतो द्विविधान्यस्यामुपनिषदि वाक्यानि तथाहि—"संयुक्तमेतत्क्षरमक्षरम्। ज्ञाज्ञौ द्वावजावीशानीशौ भोक्ता भोग्यम्प्रेरितारञ्च मत्वा" इति पूर्वोक्तानि, "अजामेकां लोहितशुक्लकृष्णाम् द्वा सुपर्णा सयुजा सखाये" त्यादीनि च वक्ष्यमाणानि च भेदपराणि। 'एषो ह देवः प्रदिशो नु सर्व्वा' इत्यादीनि पूर्वोक्तानि, 'तदेवाग्निस्तदादित्यस्तदु चन्द्रमा' इति वक्ष्यमाणानि। 'पुरुष एवेदमि'ति चेत्यादीन्यभेदपराणि तेषाञ्च तुल्यबलवत्त्वान्न परस्परं बाध्यबाधकभावः शङ्क्यः। तत्र भेदपराणि ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपस्वभावभेदप्रतिपादितेन स्वार्थे प्रामाण्यवन्ति।

अभेदवाक्यानि तु जगद्ब्रह्मणोः सामानाधिकरण्यप्रतिपादनस्वार्थे प्रामाण्यवन्ति। सामानाधिकरण्यं तावद्द्विविधं—यथार्थमयथार्थञ्च। तत्रायथार्थं द्विविधमध्यासो बाधश्च। तत्राध्यासो नाम प्रमाणबलादन्यत्रान्यस्योपासनाद्यर्थं तत्ता विधानं यथा नामब्रह्मेत्युपासीतेति। बाधितत्वञ्चोत्तरविधिज्ञानविषयत्वं यथा—स्थाणुरेव चोर इति

उभयोरप्यनयोः सामानाधिकरण्यलक्षणहीनत्वेन गौणत्वादयथार्थं बहुविधम्। आत्माऽऽत्मीयनियम्यनियन्तृकार्य्यकारणव्याप्यव्यापकाधाराधेयस्वतन्त्रसत्त्वपरतन्त्रसत्त्वविशेषणविशेष्यभेदात् तत्र न तावदध्यासः विरुद्धत्वात् प्रयोजनाभावेन प्रतीकादिवदत्र प्रमाणाभावाच्च, नापि बाधः ज्ञानाबाध्यत्वात्। अन्यथा शक्तिरूप्यवदाकाशादेरपि बाधापत्तिस्तस्याश्चादृष्टचरत्वात् अनुपपन्नत्वाच्च, नापि विशेषणविशेष्यता व्यावर्त्याभावे चिदचितोर्व्यावर्त्तकत्वासम्भवेन तस्या असम्भवात् परिशेषादात्मात्मीयाद्येव सामानाधिकरण्यमत्र बोध्यम् तथा च ब्राह्मणश्चिदचितोश्च स्वरूपेणेतरात्यन्तविलक्षणत्वाद्भेदः स्वाभाविक एवमेव तस्य तयोश्च सर्वात्मत्वस्वतन्त्रसत्त्वादियोगेन तदात्मीयत्वतदधीतसत्त्वादियोगेन चाभेदः स्वाभाविक इति पुरुषशब्दाभिधेयोऽनन्ताचिन्त्यविचित्रयावदात्मवृत्तिस्वाभाविककल्याणशक्तिवैभवाश्रयोमुक्तप्राप्यः परब्रह्म भगवांश्चिदचित्पदार्थस्वाभाविकभेदाभेदाश्रयः श्रीकृष्ण एवास्या उपनिषदो विषयभूत इति सिद्धं तस्य सर्वशब्दाभिधेयत्वम्।

किञ्च, चेतनाचेतनरूपं जगद्ब्रह्मापृथक्सिद्धियोग्यं ब्रह्मात्मकत्वात् मृद्घटादिवत् तन्नियम्यत्वात् जीवशरीरवत् तद्व्याप्यत्वादाकाशघटादिवत् तदधीनत्वात् प्राणायत्तेन्द्रियवर्गवत तदाधेयत्वाद्भूतभौतिकवदित्याद्यनुमानान्यपि श्रुतिमूलान्यत्रानुसन्धेयानि। "अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके। ब्र० सू०। । उभयव्यपदेशात्त्वहिकुण्डलवत्। ब्र० सू०। प्रकाशाश्रयवद्वातेजस्त्वात ब्र० सू०।" इत्यादिसूत्राणि। "एकः सन् बहुधा विचचार, त्वमेकोऽसि बहुधा बहून्प्रविष्ट" इत्यादिश्रुत्यन्तराणि। "एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हतीति" मनुः। केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदमुं पुरातनम्। वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यताः स्म। अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः। आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यताः स्म" इति हरिवंशोक्तानि चानुसन्धेयानि। एतैश्च भेदाभेद-

शब्दस्य व्युत्पत्तिरपि दर्शिता, तथा च भेदे सत्यभेदः भेदसहिष्णुरभेद इति वा भेदाभेदः।

ननु तमः प्रकाशवत् शीतोष्णवच्च भेदाभेदयोरितरेतरविरुद्धत्वात्कथं सामानाधिकरण्यमिति चेन्न। सुगम्यत्वात् न तर्केण परास्तुं शक्यः 'नैषा मतिस्तर्केणापनेयेति श्रुतेः तर्काप्रतिष्ठानादिति न्यायाच्च। अन्यथाऽणोरणीयान्महतो महीयानित्यादिपरस्परविरुद्धत्वाद्धेयमेव भवद्भिर्वैदिकैः। न च तेषां श्रुतिप्राप्तत्वाद् व्यवस्थयैव भाव्यमन्यथा श्रुतिबाध इति वाच्यम् प्रकृतेऽपि तुल्यत्वात्। नच भेदप्रयुक्तोऽभेदस्तत्प्रयुक्तश्च भेद इत्यन्योऽन्याश्रयापत्तिरिति वाच्यम्, भेदाभेदनिरूपणे भेदाभेदयोः प्रयोजकत्वाभावात् अपितु स्वतन्त्रपरतन्त्रसत्त्वनिर्णयोपयिकयोर्नियन्तृत्वनियम्यत्वयोरेव प्रयोज्यप्रयोजकत्वाङ्गीकारान्नोक्तदोषः, नाप्यवच्छेदकाभावः शङ्क्यः। अखण्डोपाधिरूपावच्छेदकस्य सत्त्वात् तस्मात्स्वाभाविकभेदाभेदाश्रयत्वमेव ब्रह्मणः सम्भवति नत्वौपाधिकभेदाश्रयत्वं विशिष्टाद्वैतं वेति संक्षेपः। परपक्षदूषणानामाचार्य्यैर्विस्तृतत्वादत्रोपरम्यते। कार्य्यकारणसामानाधिकरण्यमाह—यद्भूतमिति। यद्भूतमतीतं यच्च भाव्यमनागतं तत्सर्वं कार्य्यं पुरुष एव सर्वस्य पुरुषकार्यत्वात् कार्यकारणयोश्चाभेदात् एतेन लीलाविभूतियोग उक्तः। अथ नित्यविभूतियोगमाह—उतामृतत्वस्येति। अमृतत्वस्य न विद्यते मृतत्वं यस्मिन् तस्य परमपदस्येशानः नियन्ता स्वामी, तद्विशिनष्टि—यदन्नेनातिरोहति। यत्परमं पदं अन्ने अदनीये प्रकृतिप्राकृतसंघेन अतीवरोहति नोत्पद्यत इत्यर्थः एतेनैकविंशतिदुःखात्यन्ताभावमात्रं मोक्ष इतिपक्षो निरस्तः॥ १५॥

सर्व्वतः पाणिपादं तत्सर्व्वतोऽक्षिशिरोमुखम्। सर्व्वतः श्रुतिमँल्लोके सर्व्वमावृत्य तिष्ठति॥१६॥

सर्व्वत इति। तत्पुरुषतत्त्वं सर्वतः पाणिपादक्रियाकृत तथा सर्वतः चक्षुः शिरोमुखकार्यकृत् सर्वतः श्रुतिमत् श्रवणेन्द्रियशक्तिमत लोके यद्वस्तुजातं तत्सर्वमावृत्य अन्तर्बहिश्च व्याप्य तिष्ठति॥१६॥

**सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्जितम् । सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं सुहृत् ॥१७॥**

सर्व्वेन्द्रियगुणाभासमिति । सर्वाणीन्द्रियाणि ज्ञानकर्मात्मकानि बाह्यकरणानि अन्तर्ज्ञानकरणे मनोबुद्धी तेषां गुणास्तद्वृत्तयस्तैराभासः प्रकाशो यस्य तत्तथोक्तम् इन्द्रियवृत्त्या सर्वं विज्ञातुं समर्थमित्यर्थः । सर्वेन्द्रियगुणाभासत्वमपि न स्वाभाविकं किन्त्वैच्छिकमित्याह—सर्वेन्द्रियविवर्जितमिति । यद्वा सर्वेषामिन्द्रियगुणानामाभासः प्रकाशो यस्मात्तथोक्तं स्वयं सर्वेन्द्रियविवर्जितं इन्द्रियवृत्तिं विनाऽपि सर्वं ज्ञातुं समर्थमित्यर्थः । सर्वस्य प्रभुं स्वामिनं सेवाफलप्रदातारं, ईशानं नियन्तारं सर्वस्य शरणं रक्षकं निरवधिकवात्सल्यशालि प्राप्यञ्च सुहृत् सर्वावस्थायां हितकरम् ॥ १७ ॥

**नवद्वारे पुरे देही हंसो लेलायते बहिः । वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥१८॥**

भगवत्साम्यापन्नपरिशुद्धात्मस्वरूपस्यापि सर्वतः पाणिपादादिक्रियाकर्तृत्वेन शीतादिषु प्रसिद्धत्वात्तत्र सर्वप्रभुत्वादिशङ्का मा भूदित्यत आह नवद्वार इति । शिरसि सप्त द्वे अवाञ्ची चैतानि नवद्वाराणि मलप्रस्रवणवर्त्मानि यस्मिन्पुरे पुरवत्स्वात्यन्तभिन्न उपभोगसाधने च देही लिङ्गदेहवान् हन्ति गच्छति नाना देहमिति हंसशब्दोदितो जीवो नाना देहेषु लेलायते पुण्यापुण्यकर्म कुर्वन् तत्परवशतया परिभ्रमतीति न तस्य सर्वप्रभुत्वे शक्तिः अतस्ततो देहाद्बहिर्बाह्यः परमात्मैव स्थावरस्य चरस्य च सर्वस्य लोकस्य वशी वशनशीलः प्रभुरिति यावत ॥१८॥

**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥१९॥**

भगवतोऽचिन्त्यानन्तशक्तिमत्त्वात्तत्तत्कार्यकरणे इन्द्रियानपेक्षत्वं सर्वज्ञत्वतत्त्वमन्यावेद्यत्वं सर्वश्रेष्ठत्वं परिपूर्णत्वं सर्वपूज्यत्वञ्चाह—

अपाणिपाद इति। न विद्यन्ते पाणिपादा यस्य सोऽपाणिपादः तथाऽपि जवनो वेगवान् गन्तेत्यर्थः। ग्रहीता ग्रहणकर्त्ता अन्यकर्मेन्द्रियोपलक्षणमेतत् पाण्याद्यभावेऽपि तत्तत्कार्य कर्त्तेति भावः। न विद्येते चक्षुषी यस्य तादृशोऽपि सर्वं पश्यति, न विद्यते कर्णौ यस्य सोऽपि भृत्यकर्तृकस्तुत्यादिकं शृणोति, त्वक् जिह्वाघ्राणोपलक्षणमेतत्। स परमात्मभगवद्वासुदेवकृष्णनारायणादिशब्दाभिधेयः सर्वेश्वरः वेद्यं वेदितुं योग्यं चिज्जडवर्गं सर्वं वेत्ति स्वशक्तिस्वरूपेण जानाति, नच तस्यास्ति वेत्ता इन्द्रियाण्यनपेक्ष्यैव तत्तत्कार्यं करोतीत्येवं तमपरो न जानाति तं दिव्यानन्तमङ्गलगुणाढ्यं अग्र्यं अग्रगण्यं सर्वश्रेष्ठं पुरुषोत्तममिति यावत्, पुरुषं शक्त्यादिपरिपूर्णं महान्तं सर्वपूज्यं आहुर्वेदा वेदविदो वेति शेषः॥ १६॥

**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुम्पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्॥ २०॥**

अणोरणीयानिति। अणोः अणुपरिमाणाज्जीवादपि अणीयान् अणुतरः तस्याप्यन्तः प्रवृष्टित्वात् महत आकाशादेरपि महीयान् महत्तरः तस्यापि तदाधारत्वेन तद्व्याप्यत्वात् अस्य जन्तोर्जीववर्गस्य एकवचनं जात्यभिप्रायेण। आत्मान्तर्यामितया अस्यैव हृदयकुहरे निहितः प्रेरकत्वरूपेण स्थित इत्यर्थः, जन्तोरित्यस्यात्मशब्दान्वितस्यैव काकाक्षिगोलकन्यायेनोभयत्र सम्बन्धः मूलतः शाखां परिवाश्योपवेशं करोतीति परिवाश्यान्वितस्यापि मूलत इत्यस्योपवेशं करोतीत्यनेनाप्यन्वयस्याङ्गीकृतत्वात् एवञ्च जीवहृद्गुहावर्त्तित्वोक्त्या जीवाद्भेदः सिद्धः। ननु जन्तोरित्यस्य जायमानपदार्थवाचित्वाज्जीवस्य च 'न जायते म्रियते वा विपश्चित्' न जायते म्रियते वा कदाचित्' इत्यादिश्रुतिस्मृतिभ्यामजायमानत्वेन प्रतिपादिततयाऽस्यजन्तोर्जननधर्म्मयुक्तस्य स्थूलशरीरस्य गुहायां सूक्ष्मशरीराख्यगुहायामात्मा निहितो निविष्टः, प्रत्यक्त्वेन स्थित इत्येवार्थोऽस्त्विति चेन्न। 'प्राणी तु

चेतनो जन्मी जन्तुर्जन्युशरीरिणः' इति चेतनपर्य्यायतया जन्तुशब्दस्य जोबपरत्वसम्भवात । तं अक्रतुं अकर्म्माणं कर्मकर्त्तृत्वेऽपि तद्-नासक्त्या कर्म्मलेपरहितमित्यर्थः । धातुः स्वभक्तपोपकस्य भगवतः प्रसादात्तस्य महिमानञ्च ईशं निखिलजगदीशनरूपं यदा पश्यति तदा वीतशोको भवतीत्यर्थः ॥ २० ॥

पूर्वोक्तमर्थं दृढीकारयितुं ब्रह्मवादिनामनुभवमाह—

**वेदाहमेतमजरम्पुराणं सर्व्वात्मानं सर्व्वगतं विभुत्वात् । जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि वदन्ति नित्यम् ॥ २१ ॥**

इति श्वेताश्वतरोपनिषदि तृतीयोऽध्यायः ॥ ३ ॥

---

वेदाहमिति । अजरं जरारहितं पुराणं पुरातनं सर्वात्मानं सर्वगतं सर्वगतत्वात्सर्वान्तर्य्यामिणं विभुत्वाज्जन्मनिरोधं जन्माभावं यस्य प्रवदन्ति वेदा इति शेषः तमेतमहं वेद जानामीत्येवं ब्रह्मवादिनः स्वरूपगुणशक्त्यादिना बृहत्तमं यद्ब्रह्मशब्दवाच्यं वस्तु तद्वदनशीला मुनयो हि प्रसिद्धं नित्यं वदन्तीत्यर्थः ॥ २१ ॥

इति श्वेताश्वतरोपनिषदि तृतीयोऽध्यायः ॥ ३ ॥

---

एवमेतावता देवशब्दोदितस्य भगवतो वासुदेवस्य श्रीकृष्णस्य परब्रह्मणः सर्वकारणत्वसर्वाधारत्वसर्वनियन्तृत्वादिकमुक्तं तदेव पुनरभ्यासदार्ढ्याय विस्तरेण कथयन्भगवतः सकाशात्तद्विषयवत्सद्बुद्धिप्रार्थनमाह—

**य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति । विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ १ ॥**

य एक इति । य एको मुख्यः अवर्ण अवति आप्नोति वा

अततीति वा अः रक्षकः व्यापकोऽन्तर्यामी च अशब्दवाच्यः वर्ण्यते प्रतिपाद्यते सर्ववेदैरिति वर्णः, 'सर्व्वे वेदा यत्पदमामनन्तीति श्रुत्यन्तरात्। यद्वा वर्ण्यंते एभिरिति वर्णा नामानि वर्ण्यन्ते इति वर्णा रूपाणि तानि विद्यन्ते यस्य स वर्णः अस्त्यर्थे अप्रत्ययः। अनन्तनामरूपयुक्तः अश्चासौ वर्णश्चेत्यवर्णो भगवाञ्छ्रीकृष्णः निहितः स्थिताः अर्थ्यन्ते इति अर्थाः पदार्थाः सूक्ष्मरूपेण यस्मिन् स तथोक्तः। बहुधा शक्तियोगात् उत्पादनादिस्वाभाविकानन्तशक्तयो आदौ सर्गप्रमुखे अनेकान् वर्ण्यन्ते वर्णान्पदार्थान् स्वस्मिन्सूक्ष्मतया स्थितान्दधाति प्रकटीकृत्य पोषयति अन्ते च संहारकाले व्येति च अन्तर्भावितण्यर्थः विगमयति स्वस्मिन्नदर्शनं गमयतीत्यर्थः स देवः विश्वसृष्टयादिना क्रीडकः नोऽस्मान्मुमुक्षून् शुभया भगवद्विषयया व्यवसायात्मिकया बुद्ध्या संयुनक्तु संयोजयतु इत्यन्वयः। यद्वा अवर्णो अकारः अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना हि नानारूपा भवतीति तैत्तरीयश्रुतेः निहितार्थ अर्थ्यते इत्यर्थः श्रीकृष्णः स वाच्यत्वेन निहितो यस्मिन् स तथोक्तः, अक्षराणाम-कारो ऽस्मीत्युपबृंहणस्मृतेः। अकारेणोच्यते विष्णुरिति श्रुत्यन्तराच्च। वर्णान् शब्दान्दधाति स देव इत्युक्तिवाच्यवाचकयोरभेदोपचारेण शेषं पूर्ववत्॥ १॥

तस्यैव सर्वात्मतां प्रपञ्चयति—

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः॥ २॥**

तदेवाग्निरिति। तदेव परम्ब्रह्म अग्निः अग्न्यादिष्वन्तरा-त्मत्वेन स्थितत्वात्तच्छब्दवाच्यम्, उत अपि अस्य सर्वत्र सम्बन्धः शुक्रं प्रकाशवत् नक्षत्रमण्डलं ब्रह्मा चतुर्म्मुखः शिष्टमतिरोहितार्थकम्॥२॥

**त्वं स्त्री त्वम्पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः॥ ३॥**

त्वं स्त्रीति। हे देव स्त्रीपुंनपुंसकात्मा सन् स्थितोऽसि त्वमेव कुमारः उत अपि वाचार्थे त्वमेव कुमारी चापि जीर्णः वृद्धात्मा सन् त्वमेव दण्डेन करधृतलगुडेन तत्तत्स्थानमवलम्ब्य वञ्चसि सञ्चलसि। किम्बहुना त्वमेव विश्वतोमुखः सर्वरूपो जातोऽसि भगवतस्तव सर्वात्मतया सर्वगतत्वात्सर्वशब्दवाच्यस्त्वमेवेत्यर्थः। "योऽयं तवागतो देव समीपं देवतागणः। स त्वमेव जगत्स्रष्टा यतः सर्व्वगतो भवानि" त्याद्युपबृंहणस्मृतेः॥ ३॥

**नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः। अनादिमत्वं विभुत्वेन वर्त्तसे यतो जातानि भुवनानि विश्वा॥ ४॥**

नील इति। नीलः श्यामः कोकिलादिः हरित शुकादिः लोहिताक्षः पक्षिविशेषः एतद्भेदविशिष्टः पक्षीत्वमेव, तड़िद्गर्भो-वर्षकाब्दः ऋतवो वसन्तादयः षट् समुद्राश्च त्वमेव आदिर्विद्यते यस्य तदादिमत् न आदिमत् अनादिमत् अनादित्वमेव त्वमेव विभुत्वेन व्यापकत्वेन वर्त्तसे आत्मतया सर्वं व्याप्य वर्त्तसे सर्वात्मा त्वमिति यावत् यतो यस्मात्सर्वाणि भुवनानि भूरादीनि उत्पन्नानि तदपि त्वमेव सर्वलोककारणं त्वमेवेत्यर्थः॥ ४॥

पूर्वोक्तभोक्तृभोग्यप्रेरितृत्वादिभेदं विवेचयति—

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ ५॥**

अजामिति। एकां काञ्चिदजां लोहिशुक्लकृष्णां त्रिवर्णां सरूपा समानरूपाः बह्वीः अनेकाः प्रजा अपत्यानि सृजमानां उत्पादयन्तीमेकः कश्चिदजः जुषमाणः प्रीयमाणः हि निश्चयेन अनुशेते अनुवर्त्तते अन्योऽजः भुक्तभोगामेनां जहाति त्यजतीत्यन्वयः तत्र न

जायते इत्यजा तां उत्पत्तिरहितां मूलप्रकृतिं तेजोबन्नलक्षणविकार गतलोहितादिरूपयुक्तां त्रिगुणरूपां वा प्रजाः भूतभौतिकरूपाः, न जायत इत्यज उत्पत्तिरहितः, अजो जीवस्तत्राहम्मत्या सेवमानस्ता-मनुसृत्य शेते वर्त्तते । अन्योऽज उत्पत्तिरहितः परमात्मा भुक्तो भोगो लीलाविभूत्यात्मना यस्यास्तां यद्वा जीवेन भुक्तो भोगो यस्यास्तां जहातीत्यर्थः ।

अत्र केचित् अजामित्यनेन प्रकृतेरकार्यत्वश्रवणात् सृजमाना-मिति कर्त्तरि शानच् स्वातन्त्र्येण प्रजास्रष्टृत्वश्रवणाच्च कापिलतन्त्र-सिद्धा स्वतन्त्रा प्रकृतिरिति वदन्ति तन्न रम्यम् ॥ अजात्वमात्र-प्रतिपादनेन तन्त्रसिद्धायाः प्रतिपादयितुमशक्यत्वात ब्रह्मात्मकत्वे ऽप्युत्पत्तिराहित्योपपत्तेः, नाप्यस्याः स्वातन्त्र्येण स्रष्टृत्वं सृजमानामिति स्रष्टृत्वमात्रप्रतीतेः यौगिकशब्दानां विशेषार्थनिश्चयेऽर्थप्रकरणादेरेव हेतुत्वात् इह च किं कारणम्ब्रह्मेत्युपक्रम्य ते 'ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामि' ति ब्रह्मात्मिकाया अजाया एव प्रकरणात । अग्रे च 'मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्, अस्मान्मायी सृजते विश्वमेतम् तस्मिंश्चान्यो मायया सन्निरुद्ध इत्यादौ परमात्मशक्तिरूपाया एव तस्याः प्रतीतेर्नात्र मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रत्तिगन्धलेशोऽपि ।

अन्ये त्वजाशब्देनास्याः प्रकृतेश्छागीत्वं कल्पयन्ति, तदप्य-न्याय्यम् अनिष्टप्रयोजनत्वात् अध्यात्मशास्त्रे लौकिकार्थस्यानौचित्यात् छाग्याः कृत्स्नजगत्स्रष्टृत्वानुपपत्तेश्च अचेतना भगवच्छक्तिरेवात्राजा-शब्देन ग्राह्या। अपरे तु तेजोबन्नलक्षणां प्रकृतिमत्र मन्त्रे वदन्ति तदप्यसत् विकल्पासहत्वात। तथाहि किं तेजो बन्नरूपैकैकाऽजा उत तेजोबन्नरूपं ब्रह्मैव किंवा तेजोबन्नकारणभूता काचिदिति ? आद्ये तेजोबन्नानामनेकत्वेनैकामिति विरुद्ध्यते, न च तेजोबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरितिवाच्यम्। त्रिवृत्करणे ऽपि बहुत्वात

। द्वितीये किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका उत स्वरूपेण-

वस्थितमविकृतमिति ? न प्रथमः कल्पः बहुत्वात् द्वितीये स्वरूपेणावस्थितमविकृतं ब्रह्म तेजोवन्नलक्षणमिति वक्तुमशक्यम् । तृतीये कल्पेऽप्यजाशब्देन तेजोवन्नानि निर्दिश्य तैस्तद्धेतुभूतावस्थोपस्थापनीया ऽतोऽजाशब्देन तेजोवन्नहेतुभूतावस्थैव श्रुतिसिद्धेति सङ्क्षेपः ॥ ५ ॥

जीवपरयोः प्रकृतिसम्बन्धवत्त्वाविशेषेऽपि जीवस्यैव प्रकृतिसम्बन्धजन्यफलभोक्तृत्वं नतु परस्येत्येतद्दृष्टान्तयन्नाह—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो भिचाकशीति ॥६॥**

द्वेति । द्वे त्यादिषु सुपां सुलुगित्यनेन औङ अकारादेशः । द्वौ जीवात्मपरमात्मानौ सुपर्णौ गमनसाधनतया पर्णशब्दोक्तपक्षतुल्यज्ञानादिगुणवन्तौ सयुजौ नित्यसम्बन्धिनौ यद्वा युज्यते इति युक् शब्दो गुणपरः समानगुणकौ सखायौ चैतन्यादिना समानख्यानौ उपकार्योपकारकभावेन वर्त्तमानौ वा परस्पराविनाभूतौ वा समानमेकं वृश्च्यते छिद्यते इति वृक्षं वृक्षवच्छेदनयोग्यं शरीरं परिषस्वजाते परिष्वज्य वर्त्तते, तयोर्द्वयोर्मध्ये ऽन्यः शरीराद्भिन्नो जीवः तत्रासक्तः सन् पिप्पलं शरीरसम्बन्धकृतकर्मफलं स्वादु यथा तथा अत्ति भुनक्तिः । अनश्नन्नन्यः द्वाभ्यां भिन्नः द्वयोर्नियन्तृतया वर्त्तमानः परमात्मा तत्रानासक्तः तत्फलान्यनश्नन्नेव अभितो ऽतिशयेन प्रकाशते । अत्र वृक्षादिशब्देषु योगवशाच्छरीरादिप्रतीतिर्नतु रूपकातिशयोक्तिः ॥ ६ ॥

जीवस्याशक्तिं दर्शयन्परमात्मदर्शनात्तस्य मोक्षमाह—

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥**

समाने इति। समाने एकस्मिन्वृक्षे वृक्षलक्षणयुक्ते देहे अनीशया ईश्वराधीनया कर्मात्मिकाऽविद्यया भोग्यभूतया स्त्र्यादिमय्या प्रकृत्या वा अनीशत्वेनासमर्थत्वेन वा मुह्यमानः मोहं प्राप्नुवन् पुरुषेषु देहेषु सीदति कर्मवशतया गच्छतीति पुरुषो जीवः नितरां मग्नः कृशोऽहंस्थूलोऽहं काणोऽहं खञ्जोऽहमिति तादात्म्यबुद्ध्या तदेकतामापन्नः सन् शोचति तत्सम्बन्धजन्यसुखदुःखान्यनुभवति। यदा तु जुष्टं ब्रह्मादिसेवितं स्वस्मिन्वानेकजन्मकृतपुण्यपुञ्जैः प्रीतं स्वस्मादन्यं स्वामितया नियन्तृतया मोक्षदातृतया च भिन्नमीशं परमात्मानं पश्यति साक्षात्करोति तदा वीतशोकः सन् अस्य महिमानं सार्वज्ञ्यादिलक्षणं तत्साम्यापत्तिं इति एति प्राप्नोतीत्यर्थः ॥ ७ ॥

भगवतः सर्ववेदतात्पर्यविषयत्वं देवाद्याश्रयत्वं च कथयन् तज्ज्ञानस्यैव मोक्षान्तरङ्गहेतुत्वमाह—

**ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति य इत तद्विदुस्त इमे शमासते ॥ ८ ॥**

ऋच इति। ऋचः ऋगादिसर्ववेदस्य परमे व्योमन् व्योम्नि उत्कृष्टे आकाशे परमतात्पर्यविषये यस्मिन्नक्षरे न क्षरति सर्वमश्नुते वेति तादृशे परमात्मनि विश्वे सर्वे देवा अधि निषेदुः निषण्णाः समाश्रितास्तिष्ठन्ति यस्तदक्षरं न वेद न जानाति स ऋचा किं करिष्यति अधीतैः ऋगादिभिः किं फलं निष्पादयिष्यति न किमपीत्यर्थः। य इत इत्थं पूर्वोक्तरीत्या तदक्षरं विदुर्जानन्ति त इमे शं सुखमासते निवृत्तसांसारिकदुःखाः प्राप्तभगवत्स्वरूपगुणादिविषयकानुभवानन्दसन्तुष्टा भवन्तीत्यर्थः ॥८॥

अपरिणामिनोऽपि भगवतः शक्तिद्वारकं सर्वोपादनत्वं कथयन् अनीशया शोचति मुह्यमान इति पूर्वोक्तं जीवस्य भगवन्मायामोहितत्वं दर्शयति—

छन्दांसि यज्ञाः क्रतवो व्रतानि भूतम्भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ ९ ॥

छन्दांसीति । छन्दांसि वेदा यज्ञा भगवत्पूजादयः क्रतवो ज्योतिष्टोमादयः व्रतानि कृच्छ्रचान्द्रायणादीनि भूतं गतकालीनं भव्यं भविष्यत्कालीनं यच्च वर्तमानकालीनञ्च यत् वेदा वदन्ति तदेतत् विश्वं सर्व मायी मायानियन्ता भगवान्वासुदेवः अस्मात्स्वतादात्म्यापन्नात् स्वशक्तिमाया साधनात्सृजते, तस्मिंश्च भगवत्कार्येऽन्यो जीवः मायया सन्निरुद्धो मोहितो ऽस्तीतिशेषः एकवचनं जात्यभिप्रायेण अतस्तस्य स्रष्टृत्वशङ्काऽपि निरस्ता ॥ ९ ॥

मायापदार्थमाह—

मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदञ्जगत् ॥ १० ॥

मायां त्विति । 'तु' शब्दो ऽवधारणे गुणत्रयमसाम्यरूपां प्रकृतिं विचित्राद्भुतसृष्टिसाधनतया मायाशब्दवाच्यां विद्यात्, मायिनं मायानियन्तारं तुश्चार्थे महेश्वरं महांश्चासावीश्वरश्चेति महेश्वरशब्दवाच्यः श्रीकृष्णस्तं विद्यात्, 'तमीश्वराणाम्परं महेश्वर मिति वक्ष्यमाणत्वात् । 'वासुदेवो ऽर्चनीयो वः सर्वलोकमहेश्वर इति भीष्मपर्वणि ब्रह्मवाक्याच्च तस्यावयवभूतैस्त्विति । 'तु शब्दोऽवधारणे तस्यैव परब्रह्मणः श्रीकृष्णस्यावयवभूतैः सर्वावस्थासु तदधीनस्वरूपस्थितिप्रवृत्तिकतया तदंशभूतैर्जीवैरिदं सर्वं शरीरादिरूपं क्षेत्रसंगजातं जगत् व्याप्तमित्यर्थः ॥ १० ॥

योऽयोनिं योनिमधितिष्ठत्येको यस्मिन्निदं सञ्चविचैति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥

य इति । य एको मुख्यः परमात्मा अयोनिं न योनिः कारणं यस्यास्तामजां योनिं प्रकृतिम् अधि अधिष्ठाय स्वशक्तितया नियम्य तिष्ठति, यस्मिन्निदं सर्वं चेतनाचेतनात्मकं विश्वं सृष्टेः पूर्वं समेति संगच्छते सूक्ष्मशक्तिरूपेणवर्त्तत इत्यर्थः । सृष्टिकाले यस्मात् व्येति च विविधं स्थूलं रूपमेति प्राप्नोतीत्यर्थः । तमीशानं सर्वनियन्तारं वरदं महोदारं देवशब्दवाच्यम् परमात्मानम्, ईड्यं सर्वस्तुत्यं निचाय्य उपास्य ज्ञात्वा वा इमां शान्तिं संसारोपशमरूपां । अत्यन्तमपुनरावृत्तिलक्षणां, एति प्राप्नोतीत्यर्थः ॥ ११ ॥

तज्ज्ञानस्य तदनुग्रहैकहेतुत्वात्तमेव प्रार्थयति—

**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥**

यो देवानामिति । यो हिरण्यगर्भं जायमानं पश्यत अपश्यत् आत्मनेपदमडभावश्च छान्दसः असावप्रतिहतज्ञानशक्त्यादियुक्तः स्यादिति सानुग्रहमैक्षतेत्यर्थः शेषपदान्युक्तार्थानि ॥ १२ ॥

भगवतः सर्वस्वामित्वं सर्वलोकाश्रयत्वं सर्वनिवन्तृत्वं सर्वाराध्यत्वंचाह—

**यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १३ ॥**

यो देवानामिति । यः परमात्मा देवानां करणाधिष्ठातॄणामधिपः स्वामी । यस्मिन् लोकाः सर्वे अधिश्रिताः यः सर्वाधारभूत इत्यर्थः य अस्य द्विपदश्चतुष्पद ईशे ईष्टे तकारलोपश्छान्दसः । य एषां नियन्तेत्यर्थः कस्मै सुखरूपैकमूर्त्तये देवाय द्योतनस्वभावाय तस्मै इति पाठे तस्मै करुणानिधये परमात्मने हविषा चरुपुरोडाशादिद्रव्येण विधेम परिचरेम पूजां कुर्वामह इत्यर्थः तदाराधनबुद्धिकृत यज्ञादयस्तदुपासनद्वारा तत्प्राप्तिहेतवो भवन्तीत्यर्थः ॥ १३ ॥

**सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकम्परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥**

सूक्ष्मातिसूक्ष्ममिति । सूक्ष्मादणुपरिमाणकाज्जीवादतिसूक्ष्मं अन्तर्यामितया तस्याप्यन्तः प्रवेशयोग्य कलिलस्य गहनस्य स्वकार्य-ब्रह्माण्डस्य मध्ये स्थित्वा ब्रह्मादिरूपेण अनेकरूपं विश्वस्य स्रष्टारं विश्वस्यकं मुख्यं परितो ऽन्तर्बहिश्च वेष्टितारं शिवं सर्वान्तर्यामित्वेप्यनवद्यतया मङ्गलभूतं एतादृशम्भगवन्तं ज्ञात्वा ज्ञानविषयीकृत्य अत्यन्तं शान्तिं संसारोपशमरूपां एति प्राप्नोतीत्यर्थः एतदर्थजातं पूर्वमसकृदुक्तमपि ग्रन्थलाघवाद्बुद्धिलाघवप्रयोजनमाश्रयणीयमिति न्यायेन पुनः पुनरुच्यते इति ज्ञेयम् ॥ १४ ॥

**स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः । यस्मिन्युक्ता ब्रह्म ऋषयो देवताश्च तमेव ज्ञात्वा मृत्युपाशाँश्छिनत्ति ॥ १५ ॥**

स एवेति । स एव भगवान्वासुदेवः काले जीवैरनेकजन्मसुसञ्चितानां कर्मणाम्परिपाककालविशेषे भुवनस्य गोप्ता रक्षितो मोचयितेत्यर्थः, यतो विश्वस्याधिपः । स्वामी सर्वभूतेषु गूढः सर्वान्तर्यामितया स्थितः । सः कः यस्मिन् ब्रह्मऋषयः वेदविदो मुनयो देवताश्च युक्ता मनोयोजितवन्त इत्यर्थः तमेव परमात्मानं एवं पूर्वोक्तप्रकारेण ज्ञात्वा ज्ञानविषयीकृत्य मृत्युपाशान् 'मृत्युर्वै तम' इति श्रुतेस्तमः शब्दितप्रकृतितत्परिणताऽविद्याकामकर्मवासनादीन्पाशान्परपदप्राप्तिप्रतिबन्धकान् छिनत्ति नाशयति मुक्तो भवतीत्यर्थः ॥ १५ ॥

**घृतात्परंमंडमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । विश्वस्यैकम्परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१६॥**

घृतात्परमिति । यथा घृतात्परमुपरिस्थितं मण्डं घृतस्य सारांशरूपं सूक्ष्मं सर्वजनप्रीतिविषयश्च एवमतिसूक्ष्मं सूक्ष्मपरिमाणका-

जीवादपि सूक्ष्ममन्तर्यामितया तस्याप्यन्तः प्रवेशयोग्यमित्यर्थः । ज्ञात्वा ज्ञात्वेति तज्ज्ञानस्यैव मोक्षान्तरङ्गसाधनत्वद्योतनाय द्विरुक्तिः, अन्यदुक्तार्थम् ॥ १६ ॥

**एष देवो विश्वकर्म्मा महात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥**

एष देव इति । एष देवः कमनीयक्रीडया स्वभक्तमोदकः श्रीकृष्णः विश्वकर्मा विश्वं कर्म यस्य सः, महान्पूज्यश्चासावात्मा चेति महात्मा यद्वा महात्मा स्वरूपं यस्य स महात्मा विश्वात्मत्वात् । अनेन सर्वजीवनिकायेङ्गितवेत्तृत्वमुक्तं यद्वा महांश्चासावात्मा च तथा स, महत्वञ्च औदार्यवात्सल्यक्षमासौशील्यादिमहद्गुणाश्रयत्वं सदा जनानां हृदये हृत्कमले सम्यङ् निविष्टः स्थितः, हृदा भक्त्या मनीषा धृत्या विशुद्धमनसा चाभिक्लृप्तो ग्राह्यः । ये भक्त्यादिना ते शरणं प्राप्ता एतत्परमात्मत्वं विदुस्ते अमृता भवन्तीत्यर्थः ॥ १७ ॥

तस्यैव वेदमातृगायत्र्याख्यमन्त्रप्रतिपाद्यत्वमप्याह—

**यदा तमस्तत्र दिवा न रात्रिर्नसन्नचासंछिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥**

यदेति । यदा यस्मिन्काले 'नासदासीन्नो सदासीत्तम आसीदिति' श्रुत्यन्तरात् 'आसीदिदं तमोभूतमिति' स्मृतेश्च, सदसच्छब्दोदितमूर्त्तामूर्त्तप्रपञ्चं दिवारात्रिविभागञ्च विना तम एवावस्थितं तत्तस्मिन्काले शिव एव केवलः शिवः शुद्धः केवलः समाभ्यधिकशून्यः परमात्मा अवस्थितः तदेव परमात्मस्वरूपं न क्षरतीत्यक्षरं क्षरणशून्यं तदेव सवितुः सर्वस्य जगतः प्रसवितुः परमात्मनःस्वरूपं मुमुक्षुभिर्वरणीयम् भजनीयञ्च । धियो यो नः प्रचोदयादित्यस्यार्थमाह-प्रज्ञा च तस्मादिति । तस्मात्पुराणी नित्या प्रज्ञा प्रसृता स एवास्मदादिबुद्धिप्रेरक इत्यर्थः ॥ १८ ॥

भगवतो व्यापकत्वमनुपमेयत्वं महद्यशो नामवत्त्वञ्चाह—

**नैनमूर्द्ध्वं न तिर्य्यञ्च न मध्ये परिजग्रभत्। न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः ॥ १६ ॥**

नैनमिति। एनम्परमात्मानं ऊर्द्ध्वं ऊर्द्ध्वदेशे तिर्य्यञ्च तिर्यग्देशे मध्ये मध्यदेशे वा कश्चिदपि न परिजग्रभत् न पर्यग्रहीत् न ज्ञातवान् तस्य व्यापकत्वात् यस्य महद्यश इति नाम, तस्य प्रतिमा उपमा नास्ति समाभ्यधिकशून्यत्वात् ॥ १६ ॥

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २० ॥**

न संदृशे इति। अस्य रूपं स्वरूपं विग्रहो वा व्यापकत्वादेव संदृशो प्राकृतचक्षुः सन्दर्शनविषये देशेऽभिमुखतया न तिष्ठतीत्यर्थः। यद्वा संदृशे संदर्शनाय प्राकृतचक्षुषा सम्यग्दर्शनयोग्यं न भवति, 'दिव्यं ददामि ते चक्षु' इत्युक्तत्वात्। अथवाऽस्य रूपसादृश्यं नील-रूपादिकं नास्ति अतएव न चक्षुषा पश्यति कश्चनैनमिति चक्षुषा प्राकृतचक्षुषेत्यर्थः किन्तर्हि ज्ञानविषयो नेत्याह—हृदा भक्त्या विशुद्ध-मनसा च य एनं परमात्मानं एवं पूर्वोक्तप्रकारेण सर्वस्य हृदिस्थं विदुः ध्यानविषयीकुर्युस्ते अमृता मुक्ता भवन्तीत्यर्थः। 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति महाभारतोक्ते 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः भक्त्याहमेकया ग्राह्य इति गीतोक्तेश्च ॥ २० ॥

भगवतो जननादिलक्षणं संसारहीनत्वात्तस्यैव मोक्षदातृत्वञ्च मोक्षार्थं तं प्रार्थयते—

**अजात इत्येवं कश्चिद्भीरुः प्रपद्ये रुद्र यत्ते दक्षिणम्मुखम्। तेन मां पाहि नित्यम् ॥ २१ ॥**

अजात इति हे रुद्र स्वभक्तसंसाररुग्द्रावक अभक्तरोदक इति वा यत यतस्त्वमजातः जननमरणशोकमोहक्षुधापिपासालक्षण संसारहीन

इति हेतोः, एवं मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' इत्युक्तप्रकारेण त्वामेव मोचकं मत्वा कश्चिन्मुमुक्षुरहं संसाराद्भीरुः सन् ते दक्षिणम्मुखं चारु मुखाम्बुजम्प्रपद्ये चिन्तयामि तेन चिन्तनेन मां नित्यं सर्वदा पाहि रक्षस्व संसारान्मोचयेति भावः । प्रपद्यते इति पाठे यथा कश्चिन्मुमुक्षुर्मोक्षार्थम्प्रपद्यते तथाऽहमपि प्रपद्य इति योजनीयम् ॥२१॥

**मानस्तोके तनये मान आयौ मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीहविष्मन्तः सदमित्त्वा हवामहे ॥२२॥**

इति श्वेताश्वतरोपनिषदि चतुर्थोऽध्यायः ॥ ३ ॥

---

मानस्तोक इति । हे रुद्र स्वभक्तसंसाररुग्द्रावक तोके पुत्रे तनये शिष्ये अनादिस्वभावतः प्रवणान्नो ऽस्मान्मा रीरिषः मा हिंसीः 'रिषु हिंसायां' धातुः तथा आयौ आयुषि गोषु धनेषु इन्द्रियेषु वा अश्वेषु च प्रवणान्नोऽस्मान्माहिंसीरिति सर्वत्र सम्बन्धः तत्र तत्रासक्त्युत्पादनेन पुनः संसारान्धकूप एवास्मान्मा पातयेत्यभिप्रायः, तथा नो ऽस्माकं वीरान् संसाराच्छेदकत्ववीर्यवतस्त्वद्विषयकज्ञानभक्त्यादीन् भामितः अस्मदपचारेण कोपितस्त्वं मा वधीः मा लोपय किन्तु तांत्वयि वर्द्धयेति भावः । एतदर्थं वयं हविष्मन्तस्त्वदाराधनोपकरणपुरोडाशादियुक्ताः सन्तः त्वा त्वां सदमित् सदैव हवामहे आराधयाम इत्यर्थः ॥२२॥

इति श्वेताश्वतरोपनिषदि चतुर्थोऽध्यायः ॥ ३ ॥

---

**द्वे अक्षरे ब्रह्म परे त्वनन्ते विद्याऽविद्ये निहिते यत्र गूढे । क्षरन्त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥१॥**

एवम्भगवतो वासुदेवस्य परब्रह्मणः श्रीकृष्णस्य सर्वबुद्धिप्रेरक-

त्वसर्वात्मत्वमायानियन्तृत्वसर्वेश्वरत्वदेवाद्याश्रयत्वसर्वोपास्यत्वभक्त्यैकलभ्यत्वमोक्षदातृत्वादिस्वाभाविकानन्तकल्याणगुणगणैकराशित्वं चेतनाचेतनविवेकञ्च प्रतिपाद्य पूर्वोक्तार्थमेव प्रपञ्चयितुं पञ्चमाध्याय प्रारभ्यते—

तत्र प्रथमं ज्ञानकर्मणोर्लक्षणं कथयन् भगवतस्तन्नियन्तृत्वमाह—द्वे इति। यत्र यस्मिन्गूढे गुणत्रयमाया तिरोहिते अक्षरे न क्षरति अश्नुते वेत्यक्षरं तस्मिन्परमात्मनि द्वे विद्याऽविद्ये स्वर्गमोक्षफलहेतुभूते निहिते नियम्यत्वेन तत्र नितरां स्थिते किम्भूते ब्रह्मपरे अनन्ते तु श्चार्थे ब्रह्माराधनरूपे असंख्ये च तयोर्लक्षणमाह—क्षरं त्विति। तुरुभयत्रनियोगार्थः यत्क्षरं क्षरशब्दोक्तनश्वरस्वर्गादिफलहेतुकर्मं अविद्यैव सा हि यतो यदमृतं अमृतशब्दोदितमोक्षरूपनित्यफलहेतुः विद्यैव सा, विद्याऽविद्ये ईशते यस्तु सोऽन्यः तु शब्दश्चार्थे यत्र विद्याऽविद्ये निहिते यश्च विद्याऽविद्ये ईशते ईष्टे नियमयति ताभ्यां समाराध्यमानः तयो. फलप्रदश्च स ताभ्यामन्यः यद्वा क्षरम्प्रधानममृताक्षरं हर इति पूर्वमन्त्रः इवात्रापि विद्याविद्याशब्दौ जीवप्रकृतिपरौ जीवस्य ज्ञानस्वरूपत्वात् विद्याशब्दवाच्यत्वं शेषं पूर्ववत् ॥१॥

**यो योनिं योनि मधि तिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ऋषिं प्रसूतं कपिलं यस्तदग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥२॥**

यो योनिमिति। यो भगवान् अयोनियोनिं अजां प्रकृतिमधितिष्ठति तामधिष्ठाय नियम्य वर्त्तते। एको मुख्यः विश्वानि सर्वाणि रूपाणि समष्टिव्यष्टिशरीराणि तद्योनींश्च कारणानि आकाशाद्या अधितिष्ठति यश्चाग्रे सृष्टेः पूर्वकाले ऋषिमप्रतिहतज्ञानं स्वस्मात्प्रसूतं कपिलं कपिलवर्णं तं प्रसिद्धं ब्रह्माणं ज्ञानैः सृष्टिविषयकज्ञानैः स्वदत्तवेदतदर्थपरिज्ञानैर्वा युक्तं बिभर्ति बभार पुपोष जायमानञ्च पश्येत् अपश्यत् अयमलुप्तज्ञानः स्यादिति जायमानदशायां सानुग्रहमैक्षतेत्यर्थः सोऽन्य इति पूर्वेणैव सम्बन्धः ॥२॥

**एकैकं जालं बहुधा विकुर्वन्नस्मिन्क्षेत्रे संहरत्येष देवः। भूयः सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥३॥**

एकैकमिति। एष देवः परमात्मा यस्मिन्क्षेत्रे प्रकृतिलक्षणे क्षेत्रे एकैकं जालं पुरुषमृगाणां वागुरावद्बन्धकं महदादिकार्यवर्गं बहुधा बहुप्रकारेण विविधं कुर्वन्सन् संहारकाले च तस्मिन्संहरति भूयः पुनरपि तस्मिन्नेव प्रकृतिरूपक्षेत्रे महदादिकं सृष्ट्वा पतयस्तु 'तु' शब्दश्चार्थे तेषां पतयः पतींश्च सृष्ट्वा अथ अनन्तरं सर्वेषामाधिपत्यम् अधिपतित्वं कुरुते सर्वेषां नियन्तृत्वेन वर्त्तते इत्यर्थः। यतोऽसौ महात्मा महिमयुक्त आत्मेति ॥३॥

भगवत एकत्वेऽपि युगपत्सर्वनियन्तृत्वं सङ्गच्छत एवेत्याह—

**सर्वा दिश उर्ध्वमधश्च तिर्यक् प्रकाशयन्भ्राजते यदनड्वान्। एवं स देवो भगवान्वरेण्यो योनिस्वभावानधितिष्ठत्येकः ४**

सर्वा दिश इति। यत् यथा अनड्वान् कालचक्रपरिवर्त्तनहेतुः सूर्यः ऊर्ध्वमधश्च तिर्यक् च सर्वा दिशः दशदिशः सर्वदिग्वर्त्तिनः सर्वपदार्थांश्च युगपत्प्रकाशयन्भ्राजते भासते एवं स प्रकृतो देवः विश्वसृष्ट्यादिना क्रीडमान भगवान्षडैश्वर्ययुक्तः हेयप्रतिभटज्ञानशक्त्यादिभिर्वायुक्तः वरेण्यो मोक्षार्थिभिर्भजनीयः। एक एव योनिस्वभावान् प्रकृतिप्राकृतसर्वपदार्थान् अधितिष्ठति सर्वनियम्यनियन्तृतया स्वयं वर्त्तते इत्यर्थः ॥ ४ ॥

भगवतः सर्वाधिष्ठातृत्वात्सर्ववस्तूनां स्वभावपाचकत्वं सर्वपरिणामयितृत्वं सत्त्वादिगुणप्रवर्त्तकत्वञ्चाह—

**यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान्परिणामयेद्यः। सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान्विनियोजयेद्यः ॥ ५ ॥**

यच्चेति। यदितिछान्दसो लिङ्गव्यत्ययः यः कश्चिचिदचित्स्वाभाविकभेदाभेदसम्बन्धी परमात्मा सर्वेषां वह्निजलादिवस्तूनामुष्णशीता-

दिस्वभावं पचति स्वसङ्कल्परूपपाकेन निवर्त्तयति स्वभावान्तरं करोती-त्यर्थः विश्वस्य योनिः कारणं यः पाच्यान्परिणामयोग्यान्कालादीन्परिणाममयेत् परिणामयति यः परमात्मा गुणांश्च सर्वान्सत्त्वादीन्विनियोजयेत विनियोजयति सर्वपदार्थेषु प्रवर्त्तयति स एको मुख्यो भगवान्सर्वमेतच्चेतनाचेतनात्मकं विश्वमधितिष्ठति अन्तर्यामितया संनियम्य वर्त्तते इत्यर्थः ॥५॥

परमात्मनः सर्ववेदप्रतिपाद्यत्वं वेदादिकारणत्वं ब्रह्मादिज्ञेयत्वं तत् ज्ञानवतां मोक्षञ्चाह—

**तद्वेद गुह्योपनिषत्सु गूढं तद्ब्रह्मा वेदते ब्रह्मयोनिं ये पूर्वे देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥६॥**

तद्वेदेति । तत्परमात्मतत्त्वं वेदेषु गुह्योपनिषत्सु च तेषु श्रीसद्वेषु वेदेषु गुह्या या उपनिषदस्तासु वा गूढं तात्पर्यत्वेन प्रतिपादितं तत् वेदाचार्यो ब्रह्मा वेदते जानाति अतादृशोन जानतीत्यर्थः । ब्रह्मणो वेदस्य चतुर्मुखस्य वा प्रकृतेर्वा योनिं कारणं ये च पूर्वकाले देवा ऋषयश्च । तद्विदुस्ते तन्मयास्तत्साम्यापन्नाः सन्तः अमृता जन्ममृत्युरहिता मुक्ता । वभूवुर्वै निश्चितमेतदित्यर्थः ॥६॥

**गुणान्वयो यः फल कर्म कर्त्ता कृतस्य तस्यैव तत्रोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः**

एवं तत्पदार्थभूतस्य परब्रह्मपरमात्मभगवद्वासुदेवादिशब्दाभिधेयस्य श्रीकृष्णस्य स्वरूपं मोक्षस्य तत्कृपालभ्यतत्स्वरूपगुणशक्त्यादिज्ञानैकहेतुत्वं चोक्त्वा इदानीं तच्छक्तिभूतं त्वम्पदार्थं जीवस्वरूपं शोधयन्नाह—

गुणान्वय इति । सत्त्वादिगुणैर्गुणानां वाऽन्वयः सम्बन्धो यस्य स गुणान्वयः गुणसम्बन्धीसन् यः फल कर्म कर्त्ता यस्य फलस्य साधनभूतं यत्कर्म करोति कृतस्य तस्यैव कर्मणः स एवोपभोक्ता भवति फलम्भुङ्क्ते इत्यर्थः । एवञ्च जीवस्य कर्तृत्वभोक्तृत्ववत्त्वं नियत

मेवेति सूचितम् । सूत्रितञ्च भगवता वादरायणेन 'कर्त्ता शास्त्रार्थवत्त्वात्' इति, स विश्वरूपः यः फलार्थं कर्माणि करोति स एव देवमनुष्यपशवादिरूपयुक्तः त्रिगुणः कामक्रोधलोभाख्यगुणत्रययुक्तः त्रिवर्त्मा देवयानपितृयानक्षुद्रजन्तुभवनमार्गत्रयवान् प्राणाधिपः प्राणसहितः सन्स्वकर्मभिः संचरति संचरते नानायोनिषु परिभ्रमतीत्यर्थः, परस्मैपदं छान्दसम् ॥७॥

**अंगुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः ।**
**बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरो ऽपि दृष्टः ॥८॥**

अङ्गुष्ठमात्र इति । अङ्गुष्ठपरिमाणहृदयवर्त्तित्वादङ्गुष्ठमात्रः स्वतस्त्वणुपरिमाणकः रवितुल्यरूपः रविर्यथा प्रकाशस्वरूपः प्रकाशाश्रयश्च एवं ज्ञानस्वरूपः ज्ञानाश्रयश्च उपलक्षणमेतदहमर्थस्यापि ज्ञानस्वरूपज्ञातृभिन्नाहमर्थरूप इत्यर्थः तत्तत्फलसङ्कल्पेन धनित्वाद्यभिमानरूपाहङ्कारेण च समन्वितो यः स बुद्धेरुपाधेः परिमाणलक्षणेन गुणेन आत्मगुणेन स्वरूपवृत्तिपरिमाणभूतेन गुणेन च परमेश्वरादवरो ऽपि भिन्न एव जीवात्मा हि यस्मात्सूक्ष्मबुद्धिभिर्दृष्टोऽनुभूत इत्यर्थः । एवकारोऽयोगव्यवच्छेदकार्थः: आराग्रमात्रोपलक्षिताणुपरिमाणक एवेत्यर्थः । अन्ययोगव्यवच्छेदार्थको वा न मध्यमपरिमाणको विभुपरिमाणको वाऽयं जीवात्मा किन्त्वणुपरिमाणक एवेत्यर्थः ॥ ८ ॥

तदेव स्पष्टमाह—

**बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥**

बालाग्रेति । बालाग्रस्य यः शततमो भागस्तस्यापि पुनः शतधा कल्पितस्य विभाजितस्य यो भागो ऽतिसूक्ष्मस्तद्वत्स जीवोऽतिसूक्ष्मो विज्ञेयः स च आनन्त्याय संख्यानिरूपितावसानशून्यत्वाय कल्पते प्रभवति अनन्तव्यक्तिक इत्यर्थः। यद्वा ननु सूक्ष्म जीवस्यातिसूक्ष्मपरिमाणकत्वे सति सर्वावयवगतसुखदुःखाद्यनुभवयौगपद्यव्यवस्था न स्यात् तस्य देहैकदेशविशेषे स्थैर्यनियमादित्याशङ्कायामाह—स चानन्त्यायेति ।

स्वरूपेणाणुपरिमाणको ऽपि स जीवो धर्मभूतज्ञानेन आनन्त्याय विभुत्वाय कल्पते "यथाऽणुतश्चाक्षुषः प्रकाशो व्याप्त एवमेवास्य प्रकाशो व्याप्तो वै पुरुष" इत्यादि श्रुत्यन्तरात् "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् गुणाद्वालोकवदिति च न्यायात् अणुमात्रो ऽप्ययञ्जीवः स्वदेहं व्याप्य तिष्ठति यथा व्याप्य शरीराणि हरिचन्दनविप्रुष" इति ब्रह्माण्डे, "यथा प्रकाशयत्येकः कृत्स्नं लोक मिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत।" इत्यादिस्मृतेश्च, एतेन कचिद्विभुविषयकश्रुतिस्मृतिपाठस्यापि नैराकाङ्क्ष्यं व्याख्यातं, विभु-धर्माश्रयाणां तथात्वस्य शक्त्यैवावगमान् मुख्यत्वमेवेत्यर्थः ॥ ६ ॥

एवं तस्य स्वाभाविकधर्मानुक्त्वा तत्तच्छरीरसम्बन्धकृतान्स्त्री-पंनपुंसकत्वादिस्वाभाविकधर्मानाह—

**नैव स्त्री न पुमानेष नैव चायं नपुसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥ १० ॥**

नैवेति । एष ज्ञानस्वरूपो ज्ञाता।सर्वावस्थास्वहमर्थरूपोऽणु पारि-माणकः कर्त्ता भोक्ता जीवः स्त्रीत्वादिधर्मयुक्तो नैव किन्तु यद्यच्छरीरं कर्मवशतयाऽऽदत्ते गृह्णाति तेन तेन शरीरधर्मेण स्त्रीत्वादिना कृशत्वादिनाच तत्राभिमानितया सयुज्यते स म्बन्ध्यते, स्वतस्तु पूर्वोक्तरूप एवेत्यर्थः ॥ १० ॥

तत्तच्छरीरप्राप्तौ निमित्तमाह—

**सङ्कल्पनस्पर्शनदृष्टिहोमैर्ग्रासाम्बुवृष्ट्या चात्मविवृद्धिजन्म । कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसम्प्रपद्यते ॥११॥**

सङ्कल्पनेति सङ्कल्पनस्पर्शनदृष्टिहोमाः मनस्त्वक्चक्षुर्हस्तेन्द्रिय-व्यापारास्तैः ग्रासाम्बुवृष्टया ऽन्नजलदानेन आत्मविवृद्धिजन्मशुभ-विषयकानामेषां पुण्यहेतुत्वात् आत्मनो विवृद्धियुक्तमुत्कृष्टं जन्म भव-तीति शेषः अन्यथा नीचं जन्मेति भावः तदेवाह—कर्मानुगानीति । तत्तत्पुण्यपापकर्मानुसारीणि रूपाणि शरीराणि अनुक्रमेण कर्म-

फलमनतिक्रम्य देही जीवात्मा स्थानेषु ब्राह्मणादियोनिषु अभिसम्पद्यते संलभते इत्यर्थः ॥ ११ ॥

**स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति । क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥**

स्थूलानीति । स्थूलानि रूपाणि गजादिशरीराणि सूक्ष्माणि पिपीलिकादीनि शरीराणि बहुविधानि देही जीवात्मा स्वस्यात्मनो-गुणैस्तत्तत्फलाभिलाषलक्षणरागादिरूपैर्वृणोति सम्भजते सेवते क्रियागुणैरात्मगुणैश्च आत्मगुणप्रयुक्तयजनादिरूपक्रियाजन्यापूर्वैश्च हेतुभिर्वृणोतीति पूर्वेणान्वयः तेषामात्मगुणानां संयोगहेतुश्च अपरोऽन्य एव पूर्वकर्माख्यो दृष्टः शास्त्रे सूक्ष्मबुद्धिभिरित्यर्थः ॥ १२ ॥

तस्य परमात्मज्ञानान्मोक्षमाह—

**अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकम्परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१३॥**

अनाद्यनन्तमिति कलिलस्य कार्यस्य मध्ये स्थित्वा हिरण्यगर्भप्रजापत्याद्यनेकरूपतया विश्वस्यस्रष्टारमित्यर्थः ॥ १३ ॥

भगवतो भक्तिग्राह्यत्वमनाधारत्वं विश्वोत्पत्तिसंहारहेतुत्वं कल्याणरूपत्वं विद्यासृष्टिहेतुत्वं द्योतनस्वभावत्वं तज्ज्ञानवताम्मोक्षञ्चाह--

**भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ये विदुस्ते जहुस्तनुम् ॥१४॥**

इति श्वेताश्वतरे पञ्चमोऽध्यायः ॥ ५ ॥

---

भावग्राह्यमिति उक्तार्थः द्विरुक्तिरध्यायसमाप्तिद्योतिका ॥ १४ ॥

इति श्री श्वेताश्वतरप्रकाशिकायां

पञ्चमोऽध्यायः विवरणम् ॥५॥

---

पुनरपि परब्रह्मणः श्रीकृष्णस्य सर्वव्यापकत्वसर्वज्ञत्वकाल-नियन्तृत्वस्वाभाविकानन्तकल्याणगुणैकराशित्वेश्वरेश्वरत्वदेवदेवत्वसमाभ्यधिकशून्यत्वानन्तशक्तिमत्त्वादिकल्याणगुणान्वक्तुं षष्ठोऽध्यायः प्रवर्त्तते—

**स्वभावमेकेऽकवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदम्भ्राम्यते ब्रह्म-चक्रम् ॥ १ ॥**

स्वभावमेक इति । एके अकवयः भगवन्महिमानभिज्ञाः अतएव परिमुह्यमानास्तन्मायामोहिता । लोकायतिकाः स्वभावम्पदार्थानां स्वं स्वं भावमेव जगतः कारणं वदन्ति, वेदबाह्यकारणवादिनामुपलक्षण-मेतत् तथाऽन्ये कालं जगतः कारणं वदन्ति एतद्वैदिकाभासानामुपल-क्षणम् 'तु' शब्दः पूर्वपक्षव्यावर्त्तकः लोके शास्त्रे येन वादिपरिगृहीतेन कालादिनेदं ब्रह्म प्रकृतिः चक्रं प्राकृताख्यं चक्रम्भ्राम्यते परिवर्त्तते एष देवस्य कालादिनियन्तुर्भगवतो महिमा भगवन्महिम्नैव ब्रह्मचक्रं परिभ्रमतीत्यर्थः । "कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः । आत्म-योगेन भगवान्परिवर्त्तयतेऽनिशम्" इति महाभारतोक्तेः ॥१॥

**येनावृतं नित्यमिदं हि सर्व्वं ज्ञः कालकालो गुणी सर्व्वविद्यः । तेनेशितं कर्म्म विवर्त्तते ह पृथिव्यप्तेजोऽनिलखानि चिन्त्यम् ॥ २ ॥**

येनावृतमिति । येन भगवता हि निश्चयेनेदं सर्वञ्चेतनाचेतन-रूपं विश्वं नियमेन आवृतं व्याप्तं यश्च ज्ञः सर्वज्ञः कालस्यापि कालो नियन्ता कालकालः गुणी शान्तिकान्त्यादिगुणमन्दिरः यः सर्व्ववित् विशेषेण सर्वं वेत्तीति सर्ववित् सर्वा विद्या अस्येति सर्वविद्य इति वा तेन भगवता ईशितं सङ्कल्पमात्रविषयीकृतं तत् क्रियते इति कर्म पृथिव्यप्तेजोऽनिलखात्मकं कार्यजातं ह प्रसिद्धं विवर्त्तते विशेषेण

वर्त्तते सिद्ध्यतीत्यर्थः। परमात्मसङ्कल्पेनैव जगदुत्पद्यते नान्यहेतुकत्वं जगत इति चिन्त्यं विचारणीयं हृदीति शेषः ॥ २॥

**तत्कर्म्म कृत्वा विनिवृत्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् । एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥**

तत्कर्मेति। यदा इतरेभ्यः काम्यकर्मभ्यो विनिवृत्य तदर्थं कर्म तत्कर्म भगवदाराधनबुद्ध्या नित्यनैमित्तिकं कर्म भूयः अनेकजन्मसु कृत्वा शुद्धान्तःकरणो भवति तदा एकेन गुरूपसदनेन जन्मसमये भगवत्कृपाकटाक्षेण वा द्वाभ्यां गुरुभक्तीश्वरभक्तिभ्यां त्रिभिः श्रवणमनननिदिध्यासनैः बाल्यपाण्डित्यमौनैर्वा ऽष्टभिर्यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिभिः वा शब्दश्चार्थे कालेन स्वमोक्षोपयोगकालेन आत्मगुणैश्च छान्दोग्ये प्रजापतिवाक्योदितापहतपाप्मत्वादिभिः सूक्ष्मैरनेकजन्मानुष्ठितगर्भाधानादिपुण्यसंस्कारैश्च हेतुभिः तत्त्वस्य त्वम्पदार्थस्य भगवन्नियम्यस्य तद्व्याप्यस्य तदधीनस्वरूपस्थितिप्रवृत्तिकस्यात्मनः तत्त्वेन तत्पदार्थेन सर्वनियन्त्रा सर्वव्यापकेन स्वतन्त्रेण भगवता सह योगं तत्साम्यापत्त्या भेदसहिष्णवभेदलक्षणतादात्म्यसम्बन्धं समेत्य सम्यक् प्राप्य जक्षन्क्रीडन्रममाणः सह ब्रह्मणा विपश्चितेति श्रुत्यन्तरात् परमात्मना सह रममाणो भवतीति वाक्यशेषः ॥ ३ ॥

पूर्वोक्तार्थमेव स्पष्टयति—

**आरभ्य कर्म्माणि गुणान्वितानि भावांश्च सर्वान्विनियोजयेद्यः । तेषामभावे कृतकर्म्मनाशः कर्म्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥**

आरभ्येति । कर्माणि नित्यनैमित्तिकानि गुणान्वितानि भगवत्प्रीत्युत्पादकत्वगुणयुक्तानि सात्त्विकानि आरभ्य कृत्वा तैः शुद्धान्तःकरणः सन् भावान्सर्वान्प्रारब्धकर्मजन्यान्भोगान्यः स्वस्मै

विनियोजयेत् विनियोजयति भुनक्ति स कृतकर्मनाशः उत्तरपूर्वाघ-श्लेषविनाशवान् प्रारब्धकर्मक्षये तेषां भोगानामभावे सति तत्त्वतः परमात्मनः सकाशादन्य एव सन् याति निरञ्जनः परमं साम्यमुपैति मम साधर्म्य मागताः पूता मद्भावमागता इत्यादि श्रुतिस्मृत्युक्तरीत्या भगवत्साम्यम्प्राप्नोतीत्यर्थः ॥ ४ ॥

तत्पदार्थज्ञानस्य त्वम्पदार्थज्ञानोत्तरभावित्वात्तदुपासनमपि त्व-म्पदार्थोपासनपूर्वकं कर्त्तव्यमित्याह—

**आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलो ऽपि दृष्टः। तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्व्वम् ॥ ५ ॥**

आदिरिति । स पूर्वमन्त्रोक्तो जीवः संयोगः सम्यक् योगः परमात्मसाम्यापत्तिस्तस्य निमित्तेषु पूर्वोक्तेषु हेतुरादिः प्रधानकारणम्, अतीतादिलक्षणात् त्रिकालात्परो भिन्नः न कला अवयवाः सन्ति यस्येत्यकलो निरवयवः शास्त्रेषु दृष्टः तं स्वात्मानं विश्वरूपं कर्माधीन-तया बहुशरीरं भवं संसारं भूतः प्राप्तो यस्तं भवभूतं ईड्यं स्तुत्यं देवं द्योतनस्वभावं ज्ञानस्वरूपमिति यावत् स्वचित्तस्थं स्वहृदि-स्थितं पूर्वम्प्रथममुपास्य ज्ञात्वा ततः परमात्मानं ज्ञात्वा मुच्यते इति वाक्यशेषः ॥ ५ ॥

परमात्मज्ञानप्रकारमाह—

**स वृक्षकालाकृतिभिः परोऽन्यो तस्मात्प्रपञ्चः परिवर्ततेऽयम् । धर्म्मावहं पापनुदम्भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥**

स इति । स परमात्मा वृक्षकालाकृतिभिः पञ्चम्यर्थे तृतीया वृश्च्यते छिद्यते इति वृक्षशब्देन छेदनयोग्या प्रकृतिः कालः प्रसिद्धः आसमन्तात् कृतिः कृतिमान् जीवात्मा तेभ्यः पर उत्कृष्टः अन्यो भिन्नश्च यस्मादयं चेतनाचेतनप्रपञ्चः परितः स्वस्वकर्म्मसु वर्त्तते

ते धर्मावहं ज्ञानभक्त्युत्पत्त्यनुकूलपुण्यकर्मप्रापकं पापनुदं पुण्य कर्मकारयतृत्वेन पापक्षपयितारं भगवच्छब्दवाच्यैश्वर्यादिषट्केश्वरं आत्मस्थं स्वान्तर्यामिणं मरणधर्मरहितं विश्वस्याधारभूतं ज्ञात्वा ज्ञान-विषयीकृत्य मुक्तः स्यादिति शेषः ॥ ६ ॥

**तमीश्वराणाम्परमं महेश्वरं तं देवतानाम्परमञ्च दैवतम् । पतिम्पतीनाम्परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ७॥**

तमीश्वराणामिति । तम्प्रकृतम्भवन्तं श्रीकृष्णमीश्वराणां जगदुत्पत्त्यादिहेतुभूतानां चतुर्म्मुखविष्णुशिवानां परमं महेश्वरं उत्कृष्टम्महान्तं गरीयांसमीश्वरं नियन्तारं च तेषां तद्दत्तैश्वर्यवत्त्वात् देवतानामिन्द्रादीनां परममुत्कृष्टं देवतानामीश्वरो देवतस्तं दैवतं नियन्तारं सम्भजनीयञ्च तेषामपि तद्दत्तदेवत्ववत्त्वात् पतीनां तेषामेव सर्वस्य जगतः पालने नियुक्तानां परममुत्कृष्टं पतिं पालकं स्वामिनं, परमात्मन एव स्वतन्त्रतया सर्वपालकत्वात् परस्तात्प्रकृतेभ्यश्चतुर्मुखादिभ्यः परमं भिन्नं देवं द्योतमानं स्वप्रकाशज्ञानानन्दस्वरूपं भुवनानामीशं नियन्तारम् , ईड्यं सर्वैः स्तुत्यं विदाम एतादृशम्भगवन्तं वयं जानीम इति प्रार्थनायां लोट् ॥ ७ ॥

**न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥**

नेति । तस्य कार्यं प्राकृतं शरीरं करणञ्चेन्द्रियं न विद्यते तेन समस्तुल्यः तस्मादधिकश्च कोऽपि श्रुतिस्मृतिषु न दृश्यते । अस्य भगवतः परा स्वरूपविलक्षणा स्वाभाविकी स्वरूपवन्नित्या शक्तिः अघटनघटनापटीयस्स्वरूपसामर्थ्यं विविधानन्ताचिन्त्यप्रकारा श्रूयते चेति अन्यप्रमाणनिरपेक्षेत्यर्थः । अनेनानिर्वचनीयत्वमिथ्यात्वौपाधिकत्वादिवादिमुखं पिधीयते । न केवलं शक्तेरेव तथात्वं किन्त्वन्येषामपि ज्ञानबलादीनामित्याह--

ज्ञानेति । ज्ञानं सर्वदेशकालवस्तुविषयकप्रत्यक्षानुभवरूपं बलं

विश्वधारणादिशक्तिः ताभ्यां सहिता क्रिया विश्वसृष्ट्यादिरूपा चकारः सर्वेषाम्भगवतो गुणकर्मादीनामाकर्षणार्थः ॥ ८ ॥

**न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥**

न तस्येति । तस्य प्रकृतस्य भगवतः कश्चित्कोऽपि लोके जगति पतिः स्वामी नास्ति, ईशिता नियन्ता च नास्ति तस्यैव सर्वपतित्वात् सर्वनियन्तृत्वाच्च । न वेदितेति पाठे इयत्तावच्छेदेन-वेदिता नास्तीति तस्य लिङ्गञ्च ज्ञापकहेतुर्नास्ति स सर्वस्य कारणं अन्येषां कारणानां तेज आदीनां अधिपानां कालादीनाञ्चाधिपः स्वामी । करणाधिपेति पाठे करणाधिपास्तत्तदिन्द्रियाधिष्ठातारो देवा-स्तेषामधिपः स्वामी । आकाशादीनां कारणकारणत्वे ऽप्यन्यकार्यत्वं सुप्रसिद्धम् तथात्रापि स्यादत आह—न चेति । परमते परमाणुप्रधा-नादीनां जन्यत्वाभावेऽपि नियम्यत्वस्वीकारातन्निवृत्तये न चाधिप इति । अस्य परमात्मनः कश्चिदपि जनिता जनयिता च नास्ति अधिपः स्वामी च नास्ति एवम्भूतो भगवान् संसारदुःखसमुद्रतरङ्ग-ताडितैर्मुमुक्षुभिः सदा स्मरणीय इति द्वयोर्मन्त्रयोरभिप्रायः ॥९॥

**यस्तन्तुनाभ इव तंतुभिः प्रधानजैः स्वभावतो देव एकः । समावृणोति स नो दधातु ब्रह्माव्ययम् ॥ १० ॥**

यस्तन्तुनाभ इवेति । य एको मुख्यो देवः स्वभक्तमोदकः परमात्मा तन्तुनाभ इव यथोर्णनाभिस्तन्तुभिः स्वदेहजन्यैः स्वसमी-पस्थान् जन्तूनावृणोति आच्छादयति एवं प्रधानजैः प्रकृतिजैः प्राकृतैस्तत्त्वैस्तन्तुस्थानीयैः स्वभावतः स्वेच्छातश्चेतनवर्गमावृणोति तिरोहितज्ञानं करोति स देवो मोक्षदः नोऽस्मभ्यं मुमुक्षुभ्यः, अव्ययं नित्यं ब्रह्म बृहद्ज्ञानगुणविशिष्टं संसारासंभिन्नं स्वरूपं दधातु ददातु

प्रापयत्वित्यर्थः । अप्ययमिति पाठे ब्रह्मण्यप्ययमात्यन्तिकलय दधातु करोतु, लयो नाम समुद्रनदीजलवद्भेदकाकारस्फुरणम् ॥१०॥

एक इति । एको देवो द्योतनस्वभावः सर्वभूतेषु गूढोऽन्याविदितत्वेन स्थितः परिच्छिन्नत्वशङ्कां निराकरोति--

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥**

सर्वव्यापीति । सर्वमन्तर्बहिश्च व्याप्तुं शीलमस्येति सः सर्वव्यापित्वादेव सर्वभूतानामन्तरात्मान्तर्यामी, सर्वकर्मणामध्यक्षः फलप्रदः कर्मसु प्रेरको वा सर्वभूतेषु नियन्तृतयाधिवसति इति सर्वभूताधिवासः साक्षी सर्वस्य साक्षाद्द्रष्टा चेता निखिलविश्वनिर्माता 'चिञ् चयने' तथात्वेऽपि आप्तसमस्तकामतया फलेच्छापूर्वककर्त्तृत्वाभावात्केवल उदासीनः निर्गुणश्च गुणत्रयानधीनः हेयगुणरहितो वा एतादृशो देव एक एवास्तीति शेषः ॥ ११ ॥

**एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥**

एक इति। यो निष्क्रियाणांस्वाधीनप्रवृत्तिलक्षणक्रियाशून्यानां चेतनानामचेतनानाञ्च बहूनामेको मुख्यो वशी सर्वमस्य वशे वर्त्तते इति वशी स्वाधीनसर्वचिदचिद्वर्ग इति यावत् एकं प्रकृत्याख्यं जगतो बीजं बहुधा महदादिरूपेणानेकप्रकारं करोति तमात्मस्थं स्वान्तर्यामिणं ये धीराः विवेकिनः नु निश्चितं पश्यन्ति जानन्ति तेषामेव शाश्वतं मोक्षरूपं सुखम्भवतीति शेषः नेतरेषां तद्भिन्नानाम् ॥ १२ ॥

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विद-धाति कामान् । तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं-मुच्यते सर्वपाशैः ॥ १३ ॥**

नित्य इति । नित्यानाञ्चेतनानां बहूनां नित्यश्चेतन एक एव सन् यः कामानपेक्षितार्थान् विदधाति प्रयच्छति तद् ब्रह्म जगतः कारणं सांख्ययोगाधिगम्यं सांख्यशास्त्रयोगशास्त्रयोस्तात्पर्यविषय-भूतं, 'सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा आत्माप्राणा-न्येतानि' इति स्मृतेः । यद्वा सांख्यं ज्ञानयोगः योगो निःसङ्ग-तया भगवदाराधनात्मकः कर्मयोगस्ताभ्यां गम्यम्प्राप्यं देवं ज्ञाना-नन्दैकरसदिव्यमङ्गलविग्रहयुक्तं ज्ञात्वा साक्षादनुभूय सर्वपाशैः पाशव-द्बन्धकैः कर्मक्लेशविपाकाद्यैः सर्वैर्मुच्यते मुक्तो भवतीत्यर्थः ॥१३॥

दिव्यमङ्गलविग्रहविशिष्टस्य भगवतः सर्वातिशायिदीप्तिमत्त्व-माह—

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्व-मिदं विभाति ॥ १४ ॥**

न तत्रेति । तत्र प्रकृते परब्रह्मणि भगवति वासुदेवे सूर्यो न भाति प्रकाशं न करोति चन्द्रश्च तारकानि च तेषां समाहारश्च-न्द्रतारकं न भाति नेमा विद्युतश्च भान्ति, तदीयतेजसा सर्वतेजसा-मभिभूतत्वात् कुतोऽयमस्मद्गोचरोऽग्निस्तत्र प्रकाशेत । ननु प्रत्य-क्षतो ऽनुभूयमाने ऽतिभास्वररूपिणि सूर्यादौ न भातीति विरुद्धं कथमभिधीयते, इति तत्राह—तमेव भान्तमिति । तमेव भगवन्तं भान्तं दीप्यमानमनुपश्चात् सर्वं सूर्यादिकं भातीति, याचित भूषाभूषित-पुरुषतुल्यानां सूर्यादीनां भास्वररूपं न नैजमपि तु भगवद्दत्तं तदी-यमेव तदुक्तम्भगवता "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति। यतः सूर्यादितेजोऽपि तदीयं अतस्तस्य भगवत एव भासा दीप्त्या इदं सर्वञ्जगत् विभाति ॥ १४ ॥

भगवतः स्वभक्तसंसारपाशदाहकत्वमाह—

**एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले सन्निविष्टः। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥**

एक इति। अस्य भुवनस्य चेतनात्मकप्रपञ्चस्य मध्ये एको मुख्यो हंसः पक्षिसमूहे राजहंस इव देदीप्यमानः स एवाग्रनेतृत्वा-न्मोक्षप्रदत्वादग्निः स्वभक्तसंसाररोगदाहको वा सलिले समुद्रजले सन्निविष्टः तमेव भगवन्तं विदित्वा स्वान्तर्यामितया प्रेरकतया प्राप्यतयाऽनन्तकल्याणगुणराशिदिव्यमङ्गलविग्रहवत्तयाऽउपास्य मृत्युं संसारमति अतिक्रम्य एति परमपदं गच्छति, अस्माद्भगव-दुपासनालक्षणमार्गादन्यः पन्थाः मार्गोऽयनाय ईयत इत्ययनं प्राप्यं तस्मै भगवते तत्प्राप्तुं प्रसादयितुं वेत्यर्थः, न विद्यते शास्त्र इति शेषः ॥ १५ ॥

**स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः ॥१६॥**

स विश्वकृदिति। स प्रकृतो भगवान् विश्वस्य सर्वस्य कर्त्ता संहर्त्ता च विश्ववित् विश्वविन्दतितीविश्ववित् विश्व सर्वं प्राप्तः, आत्मनां देवमनुष्यादिदेहानां योनिं कारणं पुरश्चक्रे द्विपदः पुरश्चक्रे चतु-ष्पदः इति श्रुत्यन्तरात्। आत्मा योनिः स्थानं यस्येति जीवान्त-र्यामी वा ज्ञः सर्वज्ञः सर्वदेशकालवस्तुविषयकसामान्यज्ञानवान् कालस्यापि कालो नियन्ता, गुणी दिव्यानन्तकल्याणगुणविशिष्टः सर्व-

वित सर्वदेशविषयकविशेषज्ञानवान् सर्वाविद्या अस्येति सर्वविद्यः सर्वविद्याप्रवर्तको वा प्रधानक्षेत्रज्ञयोः प्रकृतिपुरुषयोः पतिः स्वामी गुणेशः सत्त्वादिगुणानां नियामकः ज्ञानादिषड्गुणपूर्णो वा संसारान्मोक्षे तत्र स्थितौ तेन बन्धे च हेतुः । बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परम्ब्रह्म विष्णुरेव सनातनः । इत्युपबृंहण स्मृतेः ॥ १६ ॥

**स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता । य ईशे अस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय ॥ १७ ॥**

स तन्मय इति । स भगवान् तन्मयः बन्धमोक्षहेतुमयस्त त्प्रचुरस्तत्स्वरूप इति यावत् हि प्रसिद्धौ, अमृतोऽसंसारी ईशे ईशनव्यापारे सम्यक् स्थानं स्थितिर्यस्य स ईशसंस्थः ज्ञः सर्वज्ञः सर्वगः सर्वगतः सर्वप्राप्यो वा अस्य चिदचिदात्मकस्य भुवनस्य सर्वप्रपञ्चस्य गोप्ता रक्षिता यः अस्य जगतो नित्यमीशे ईष्टे इशितेति यावत् नित्यमित्यनेन मोक्षावस्थायामपि भगवदीयेशनव्यापारस्यानपायित्वं सूचितम् । यस्य च ईशनव्यापाराय अन्यो हेतुर्न विद्यते, अनन्यहेतुकं तस्येशितृत्वमिति भावः । यद्वा जगदीशनाय अन्यस्तस्मादितरो हेतुर्न विद्यते किन्तु स एव सर्वजगदीशितेत्यर्थः ॥ १७ ॥

भगवतश्चतुर्मुखजनकत्वं वेदाचार्यत्वं मुमुक्षुशरणत्वञ्चाह—

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहम्प्रपद्ये ॥ १८ ॥**

य इति । यो भगवान् पूर्वं सृष्ट्यादौ ब्रह्माणं विदधौ उत्पादया-

मास। परमात्मा तस्मै ब्रह्मणे वेदांश्च प्रहिणोति प्राहिणोत् प्रददौ तं ह तमेव देवं ब्रह्मादिपूज्यं आत्मविषयिणी बुद्धिरात्मबुद्धिस्तस्याः प्रकाशं प्रकाशकं मुमुक्षुरहं शरणं प्रपद्ये भगवद्विषयकबुद्धिप्रकाशत्वस्य भगवदनुग्रहैकलभ्यत्वात् तच्छरणागतिरेव मुमुक्षुभिः कार्येति भावः ॥ १८ ॥

एवमुक्तस्वरूपब्रह्मज्ञानस्यैव मोक्षहेतुत्वम्प्रतिपाद्य तदेव दृढयन् उपसंहरति मन्त्रद्वयेन--

**निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥१९॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥२०**

निष्कलमिति। यदा चर्मवदिति चर्मेत्युपलक्षणं यथा चर्मकषादिकं मानवा वेष्टयन्ति तथा यदाकाशं वेष्टयिष्यन्ति तदा निष्कलं कलाः पञ्चभूतानि तद्रहितं भौतिकशरीरशून्यमिति यावत् यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः। स सर्वस्माद्बहिः कार्यः श्रौतस्मार्त्त विधानतः। मुखं तस्यावलोक्यापि सचैलस्नानमाचरेदित्युक्तेः। अथवा प्राणादिनामान्तषोड़षकलारहितं निष्कलं 'स एषोऽकलोऽमृत' इति श्रुत्यन्तरात्, यद्वा तद्धस्तपादादीनामपि सच्चिदानन्दरूपत्वात्, हेयप्राकृतावयवशून्यं निष्कलम् क्रियासु क्रियमाणासु अभिमानशून्यत्वात् निष्क्रियं यद्वा आप्तसमस्तकामतया स्वार्थक्रियाशून्यं यद्वा सङ्कल्पमात्रेणैव तस्य सर्वकर्त्तृत्वान्निर्व्यापारं शान्तं शान्तिगुणविशिष्टम् शान्त्युपलक्षितवात्सल्यकारुण्यक्षमादयादिसमुद्रमिति भावः। निरवद्यं सर्वदोषशून्यं निरञ्जनं विविधकर्मतन्निमित्तकदेहेन्द्रियसूक्ष्मप्रकृतिसम्बन्धाख्याञ्जनशून्यं अमृतस्य मोक्षस्य परं मुख्यं सेतुं मर्यादाभूतं प्राप्यभूतमिति यावत् दग्धेन्धनाग्निमिव स्वयम्प्रकाशमानं देवमविज्ञाय स्वान्तर्यामितया साक्षादननुभूय दुःखस्यान्तो नाशो भविष्यति एतच्चाकाशस्य वेष्टनासम्भववत् मोक्षस्यापि परमात्मज्ञानाभावेऽसम्भवत्वमेवेति ॥ १९ ॥

तत्सम्प्रदायपरम्पराप्राप्तस्यैव ज्ञानस्य मोक्षफलकत्वमिति दर्शयितुं सम्प्रदायं ब्रह्मज्ञानाधिकारिणञ्चाह—

**तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्। अत्याश्रमिभ्यः परमम्पवित्रं प्रोवाच सम्यगृषिसङ्घ-जुष्टम् ॥ २१ ॥**

तपः प्रभावादिति। तपसः कृच्छ्रचान्द्रायणादिलक्षणस्य स्वाश्रमप्राप्तविहितकर्मलक्षणस्य वा इन्द्रियमनसोरेकाग्र्यलक्षणस्य वा तपसः प्रभावात् प्रकर्षेण भवनात् यो देवस्य भगवतः प्रसादोऽनुग्रहस्तस्माद्देव च शब्द एवार्थः विद्वान् प्राप्तब्रह्मविज्ञानः सन् अथानन्तरं अत्याश्रमिभ्यः आश्रमत्वाभिमानशून्येभ्यो भगवद्भजनैकनिष्ठेभ्यः। अतिपूजायामिति स्मरणात् पूज्याश्रमिभ्यः भगवतपरमहंस संन्यासिभ्यः परमुत्कृष्टं समाभ्यधिकशून्यत्वात् पवित्रं शुद्धं स्वभावतोऽपास्तसमस्तदोषत्वात् ऋषिसङ्घैः श्रीसनकादिकनारदवामदेवादिसमूहैः सम्यक् प्रीतिपूर्वकं जुष्टं सेवितब्रह्मस्वरूपेणेति पूर्वकं सेवितं ब्रह्म स्वरूपेण गुणैश्च वृहत्तम तत्वं प्रोवाच सम्यगुभयत्र सम्बद्धयते सम्यक् पूर्वोक्तलक्षणपूर्वकं प्रकर्षेणोवाच कथितवानित्यर्थः ॥ २१ ॥

**वेदान्ते परमं गुह्यं पुरा कल्पप्रचोदितम् । नाप्रशान्ताय दातव्यं नापुत्राय नाशिष्याय वै पुनः ॥२२॥**

वेदान्त इति। जातावेकवचनं, सर्वेषु वेदान्तेषु उपनिषद्गीतासु परमं गुह्यमिति रहस्यतया गोपनीयं पुरा कल्पप्रचोदितं पुराकल्पे चतुर्म्मुखायोपदिष्टम्, नाप्रशान्ताय शान्त्यादिगुणरहिताय न दातव्यं प्रशान्तायापि अपुत्राय अशिष्याय च न दातव्यं किन्तु प्रशान्ताय पुत्राय प्रशान्ताय शिष्यायैव दातव्यमित्यर्थः ॥२२॥

श्रीभगवति श्रीगुरौ च निर्मायिकभक्तिशून्यानामुक्ता अर्था उपदिष्टा अपि न स्फुरन्तीत्याह—

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥२३॥**

यस्य देव इति । यस्य पुंसः यच्छब्दप्रयोगात्सर्वसामान्याधिकारिकेयं हरिभक्तिर्न जात्यादिविशेषनियमः, देवे द्योतनस्वभावे सार्वज्ञ्याद्यनन्ताचिन्त्यगुणशक्त्याद्यर्णवे भगवति परा भक्तिः दृढविश्वासश्रद्धार्जवादिपूर्वकनिर्मायिकाव्यभिचारिणी ह्यैकान्तिकी भक्तिर्यथा भगवति तथा गुरावपि स्यात् तस्य देववद्गुरुविषयकपराख्यभक्त्याश्रय एते अस्यामुपनिषदि श्वेताश्वतरेण कथिता उपदिष्टा उपनिषदन्तरे च निर्णीता अर्थाः पदार्थाः प्रकाशन्ते स्वयमेव गुरुप्रसादेन भासन्ते इत्यर्थः । ननु गुरुभजनस्य सामान्याधिकारिकत्वात् यदि शास्त्राधिकारानर्ह एव गुरुभक्तिपरश्चेत्तर्हि कथं तस्य वेदान्तार्थप्रकाशसम्भावनेति चेत्तत्राह--

महात्मन इति महोदार बुद्धेरित्यर्थः अयम्भावः न वयं तस्य वेदान्तविचारार्हत्वं ब्रूमः येन विरोधः स्यात् अपि तु गुरुभक्त्याशोधितमनस्कस्य तत्परिपूर्णप्रसादेनैव सर्वशास्त्रार्थस्य स्वत एव भानम् न शास्त्रविचारपरम्परयेति भावः निषेधश्च तस्य श्रुत्यादिपाठादौ नियामको नतु स्वतः स्फुरति विषयस्येति राद्धान्तः । द्विरुक्तिरध्यायपरिसमाप्तिद्योतिकाऽऽदरार्था च ॥ २३ ॥

सर्ववेदशिरो गीतस्तर्कातीतश्च यो हरिः ।
ध्यानेन मुक्तिदः कृष्णस्तं मुकुन्दं गुरुं श्रये ॥१॥

श्वेताश्वतरमन्त्राणां विवृतिः सुगमाक्षरा ।
श्रुत्यर्थकाशिका सेयं पूर्वाचार्यमतानुगा ॥ २ ॥

श्रीमुकुन्दप्रसादेन लब्धवेदान्तबुद्धिना ।
संगृहीता मया स्वीयबोधाय नान्यबुद्धये ॥ ३ ॥

ईक्षतां स्वेच्छया सन्तः सम्प्रदायानुयायिनः ।

क्षमन्तां यच्च चापल्यं मदीयं नतवत्सलाः ।। ४ ॥

यो निम्बवत्संशमको रुजानां संसारजानां हृदयान्धकारम् ।

हरन्सदोदेति मदीयचित्ते निम्बार्कमार्यं शरणम्प्रपद्ये ।। ५ ।।

इति श्रीभगवदवतार श्रीसनन्दनादिप्रवर्तित श्री१०८ महामुनीन्द्रभगव-न्निम्बार्काचार्यचरणोपबृंहितानादिवैदिकसत्सम्प्रदायानुगत श्रीस्वामि परमार्थिरामदासप्रशिष्य श्रीमुकुन्ददासचरणपद्ममकरन्दभृङ्गेण श्रीमद्रणछोड़दाससूरिणा संगृहीतायां श्वेताश्वतरोपनिष-त्प्रकाशिकायां षष्ठाध्यायविवरणं समाप्तम् ।

---